मामका पाण्डवाश्चैव मिथ समवेता मिलिता सन्त किमकुर्वत किं कृतवन्त । तत्सर्वं वदेति शेष ॥ १ ॥

विख्यातपौरुषैर्भीष्मादिभी रक्षितमस्मदीय बल दृष्ट्वा पाण्डवा भीता न वा, अहिंसाशास्त्रमवष्टभ्य पक्षद्वय युद्धादुपरत न वेति पुत्रस्नेहाभिनिविष्ट हृदयेन धृतराष्ट्रेण कृतस्य प्रश्नस्योत्तर सजय उवाच—दृष्ट्वेत्यादिना ।

संजय उवाच—

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

दृष्ट्वेति । तुशब्देन पाण्डवाना भयलेशो ऽपि नास्ति, प्रत्युत दुर्योधनस्यैव भय प्रादुर्भूतमिति द्योत्यते । अतिधृष्टैर्धृष्टद्युम्नादिभि व्यूढम धिष्ठित पाण्डवानाम् अनीक सैन्य दृष्ट्वा तदा युद्धप्रदेशावस्थितिकाले परित्रस्तहृदयो राजा दुर्योधन स्वरक्षितार द्रोणाचार्यमुपसगम्य वक्ष्यमाणमर्थ सहित वचनमब्रवीत् उक्तवानित्यर्थ ॥ २ ॥

तद्वचनमेव नवभि श्लोकैराह—पश्येत्यादिना ।

**पश्यैतां पाण्डुपुत्राणामाचार्य महती चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

हे आचार्य ! तव शिष्यो धीमान्द्रुपदपुत्र शस्त्रास्त्रविद्यापारीणत्वेन धृष्टद्युम्न इति प्रख्यातकीर्त्ति, तेन व्यूढा व्यूहरचनया ऽधिष्ठिता दिगन्त विश्रान्तपराक्रमवतो युष्मदादीनलक्षीकृत्य धैर्येण व्यवस्थिता महतीम् अनेकाक्षौहिणीजुष्टामेतामक्षोभ्या पाण्डुपुत्राणा चमू पश्य यथावदवलोकय त्यर्थ ॥ ३ ॥

परपक्षे शूराणा विद्यमानत्वात्ते नोपेक्षणीया इति स्वाचार्य प्रत्याह—

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**

अत्रेति । अत्र परसेनायाम्, अस्मदपारभीकरधनुर्धरत्वात्, महान् इषुरास्ते ऽस्मिन्धनुषीति इष्वास येषा ते महेष्वासा, पक्षद्वयविदितपराक्रमाभ्या भीमार्जुनाभ्या युधि समा तुल्या निर्भयान्तरङ्गत्वेन तृणीकृतपरपक्षा शूरा राजान वर्तन्ते ॥ ३ ॥

परपक्षानुरागिणो राज्ञो विज्ञापयति—युयुधान इत्यादिना सर्व एव महारथा इत्यन्तेन ।

**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**
**धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् ।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥**
**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

युयुधान इत्यादीना पृथक्पृथग्दर्शनम् सहस्रैर्धन्विना योद्धृत्वाद्वेपेक्षा न कार्येत्यर्थ ॥ ४—६ ॥

परबलदर्शनभीतश्चैत्तं सस्य रोचयेत्याचार्याशयमाशङ्क्याह—

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

अस्माकमिति । तुशब्द स्वमयगोपनप्रदर्शनार्थ । अस्माकम् अस्मत्पक्षे ये विशिष्टा सर्वोत्कृष्टा राजान वर्तन्ते मयोच्यमानान् तान्

निबोध मद्वचनादवधारय । यद्यपि त्वमेव तान्वेदितुं प्रभवसि तथा ऽपि मम सेनानायका ये वर्तन्ते संज्ञार्थं तानहं ब्रवीमि विज्ञापनं करोमि । द्विजोत्तमेति संबोधनत्ववाशातं न किंचिदस्तीत्यभिप्रायः ॥ ७ ॥

स्वभयमोचनदक्षान्पुरुषधौरेयानाह—भवानित्यादिभ्यां द्वाभ्याम् ।

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

भवान्द्रोण इत्यारभ्य सौमदत्त्यन्ताः प्रख्यातपराक्रमा इत्यर्थः ॥८॥

स्वसेनाधः परिशिष्टसंख्यानं निरस्यति—अन्ये चेति ।

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

अन्ये च भीष्मादिव्यतिरिक्ता बहवः शूराः सन्ति । सन्तु नाम, समये त्वामेकं विहाय पलायन्ते दवीय इति तत्राह—मदर्थे इति । मदर्थे मन्निमित्तं त्यक्तजीविताः; स्वप्राणेष्वपि दयां न कुर्वन्तीत्यर्थः । प्रतिपक्षदमनसाधनाभावाक्किं कुर्वन्तीति तत्राह—नानेति । नानाविधानि शस्त्राणि प्रहरणसाधनानि येषां ते नानाशस्त्रप्रहरणाः । प्रहरणसाधनसंपत्तावपि तत्प्रयोगे नैपुण्याभावात्करभूषणानि तानीति तत्राह—युद्ध इति । सर्वे युद्धविशारदाः परपक्षघातिन इत्यर्थः ॥ ९ ॥

स्वभयाभावे हेत्वन्तरमाह—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

अपर्याप्तमिति। एकादशाक्षौहिणीपरिमितं सूक्ष्मबुद्धिमद्द्रोणाभिरक्षितमस्माकं बलमपर्याप्तमपरिमितम्। एतेषां पाण्डवानां सप्ताक्षौहिणीपरिमितं भीमाभिरक्षितं बलं पर्याप्तं स्वल्पमित्यर्थः। यद्वा भीष्माभिरक्षितमस्मदीयं बलमेकादशाक्षौहिणीपरिमितमपि पाण्डवपरिभवे किंचिदप्यपर्याप्तम् असमर्थम्, नालमित्यर्थः। भीमाभिरक्षितं बलं सप्ताक्षौहिणीपरिमितमप्यस्मत्परिभवे पर्याप्तम्, अलमित्यर्थः॥ १०॥

यत एवमतो भवद्भिर्मदुक्तरीत्या वर्तितव्यमित्याह—

**अयनेषु च सर्वेषु यथाभागमवस्थिताः।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि॥ ११॥**

अयनेष्विति। सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु च सर्वे भवन्तो विकर्णादयो यूयं रणभुवमनतिक्रम्य यथाभागं व्यवस्थिताः सन्तः भीष्ममेवाभितो रक्षन्तु। तद्रक्षणेनास्मदीयं बलं रक्षितं स्यादिति भावः॥ ११॥

बहुमानयुक्तराजवचनश्रवणतो भीष्मो यदकरोत्तदाह—

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्॥ १२॥**

तस्येति। प्रख्यातपराक्रमत्वात्प्रतापवान्। कुरूणां कौरवाणां वयसा बुद्धितो वा वृद्धत्वात्कुरुवृद्धः। पाण्डुधृतराष्ट्रपितुरग्रजत्वात्पितामहो भीष्माचार्यः। तद्वशवर्तित्वेन तस्य दुर्योधनस्य हर्षं संजनयन् यथाप्रलं स्वपौरुषस्यापनार्थमुच्चैः सिंहनादं विनद्य कृत्वा शङ्खमपि दध्मौ, मुखवायुना शङ्खं पूरितवानित्यर्थः॥ १२॥

राजाभिप्रायानुरोधेन भीष्मप्रवृत्त्यनन्तरमन्ये ऽपि प्रवृत्ता इत्याह—

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलो ऽभवत् ॥ १३ ॥**

तत इति । ततः भीष्मयुद्धप्रवृत्त्यनन्तरम्, इतरैः द्रोणप्रभृतिभिः, शङ्खाश्च भेर्यश्च पणवानकगोमुखाख्या वाद्यविशेषाश्च सहसैवाभ्यहन्यन्त अभितस्ताडिताः । स शङ्खादिप्रयुक्तः शब्दः तुमुलः अधिको ऽभवत ॥१३॥

कौरवानीकयुद्धोत्साहानन्तरं पाण्डवयुद्धोत्साहमाह—तत इत्यादिभिः पञ्चभिः ।

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

तत इति । ततः प्रतिपक्षयुद्धप्रवृत्त्यनन्तरं मायाः लक्ष्म्या धवो माधवः पाण्डवश्चैव, परस्परवर्तिनौ कृष्णार्जुनौ पराक्रमान्वितैः श्वेताश्वैः युक्ते महत्यप्रघृष्ये स्यन्दने स्थितौ दिव्यावप्राकृतौ शङ्खौ प्रदध्मतुः पूरितवन्तावित्यर्थः ॥ १४ ॥

तयोर्दिव्यत्वं स्फोरयति—

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।**

पाञ्चजन्यमिति । स्वार्थसंयोगतो हृष्यन्तीति हृषीकाणि इन्द्रियाणि, तेषामधीशत्वात् हृषीकेशो भगवान् । शत्रूञ्जित्वा तद्धनापहरणाद् धनंजयो ऽर्जुनः । पञ्चजनासुरदेहजं पाञ्चजन्यनामकं शङ्खम् । देवेन इन्द्रेण दत्तं देवदत्तनामकं शङ्खम् । प्रदध्मतुरिति पूर्वेणान्वयः ॥ १४- ॥

कृष्णार्जुनयुद्धोत्साहानन्तरं भीमादीनां चतुर्णां प्रवृत्तिमाह—

**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**
**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

पौण्ड्रमिति ॥ भीमं घोरं कर्म यस्य स भीमकर्मा । वृकवद्रिक्तोदरत्वाद् वृकोदरो भीम इत्यर्थः । एवं भीमयुधिष्ठिरनकुलसहदेवा यथाक्रमं शङ्खान्दध्मुरित्यर्थः ॥ -१५, १६ ॥

धृतराष्ट्रदुराशोन्मूलनाय पाण्डवानुगाना राज्ञामैकमत्यमाह—

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**
**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥**

काश्य इति । हे पृथिवीपते महीपते धृतराष्ट्र । काश्यादिसौभद्रान्ताना परमेष्वासत्वादि विशेषणचतुष्टयं प्रत्येकं संबध्यते ।

'[1]परैरधृष्यधराधि' परमेष्वास उच्यते ॥
एकादश सहस्राणि धन्विना यस्तु योधयेत् ।
शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥
अमितान्योधयेद्यस्तु स प्रोक्तो ऽतिरथो महान् ।
रथेनैकेन योद्धा चेत्स वा अर्धरथो मत' ।
प्रतिपक्षाधृष्टदर्शी स भवेदपराजितः ॥

[1] म. भा. उद्योग.

विष्णुतद्भक्तपूजायां स्वाश्रमोचितकर्मणि ।
दाने च शौण्डो यद्वाहुः स महाबाहुरुच्यते ॥'

इति राजधर्मे । एवंविशेषणविशिष्टा मया परिगणिताः काश्यादयो राजानः तदन्ये च पृथक्पृथक् शङ्खान्दध्मुरित्यर्थः ॥ १७, १८ ॥

स शङ्खनादसमूहस्त्वदीयानां भयावह आसीदित्याह—

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

स इति । स शङ्खसमूहघोषः नभश्चान्तरिक्षं च पृथिवीं मर्त्यलोकमपि व्यनुनादयन् प्रतिध्वनिना पूरयन्सन् धार्तराष्ट्राणां हृदयानि व्यदारयत् व्यभिनदित्यर्थः ॥ १९ ॥

तदानीमर्जुनो भगवन्तं प्रति किंचिद्विज्ञापनं कृतवानित्याह— अथेति सार्धेन श्लोकेन ।

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

अथेति । हे महीपते धृतराष्ट्र । अथशब्द आनन्तर्यार्थः । उभयोः सेनयोः युद्धप्रवृत्त्यनन्तरम्, कपिर्हनुमान्ध्वजे यस्य स कपिध्वजः, पाण्डवोऽर्जुनः हृदयदौर्बल्यात्पलायनयोग्या अपि बलाद् धैर्यमवष्टभ्य युद्धाय व्यवस्थिता यं धार्तराष्ट्राः तान् दृष्ट्वा, शस्त्रसंपाते शस्त्राणां समुदाये प्रवृत्ते सति, तदा तदानीं धनुरुद्यम्य हृषीकेशं प्रति इदं वक्ष्यमाणं वचनमाह अब्रवीदित्यर्थः ॥ २०, २०- ॥

अर्जुन उवाचेत्यर्जुनवाक्यमनुक्रामति—सेनयोरिति सार्धेन द्वयेन।

अर्जुन उवाच—

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

सेनयोरिति । उभयो सेनयो मध्ये मे मम रथ स्थापयेत्यर्जुनेन स्वधामतो जात्वपि न च्यवत इत्यच्युतेति सबोधनया स्वय सर्वनियामकोऽपि भगवान्सारथ्य नियुज्यते । सर्वेश्वरो यन्नियोगमनुवर्तते तस्य किम शक्यम् । भक्तचित्तानुवर्तन भगवतो ऽपि युक्तमेव भक्तवत्सलप्रसिद्धेरित्यभिप्राय ॥ २१ ॥

रथस्थापनप्रदेश निर्दिशति —

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

यावदिति । युद्धारम्भे प्रवृत्ते सति कै सह राजभि मया योद्धव्यम् । यावद्भवैतान् योद्धुकामान् अवस्थितान् परपक्षस्थान्भीष्मादीनह निरीक्षे तावति प्रदेशे रथ स्थापयेत्यर्थ ॥ २२ ॥

युद्धोन्मुखता न फलवतीत्याह—

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

योत्स्यमानानिति । स्वरक्षणोपायममतिपद्यमानस्यैव युद्धाय सरम्भ कुर्वतो दुर्बुद्धे धार्तराष्ट्रस्य युद्धे ऽत्र युद्धभूमौ प्रियचिकीर्षवो य केचित् एते राजान समागता तान् योत्स्यमानान् युद्धोद्युक्तान् अहमवेक्षे । नानादेश

समागते राजभिर्जुनस्य पूर्ववैराभावे ऽपि तेषां धार्तराष्ट्रप्रियंकरत्वाद् वैरित्वमुचितमेवेत्यर्थः ॥ २३ ॥

एवमर्जुनेन भगवान्प्रेरितो ऽप्यहिंसाशास्त्रार्थोपदेशेनार्जुनं युद्धान्निवर्तयिष्यतीति धृतराष्ट्राशयमाशङ्क्य भगवदवतारस्य भूभारहरणार्थकत्वान्नैवमिति मनसि निधाय संजय उवाच—एवमिति द्वाभ्याम् ।

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥

एवमिति । हे भारत धृतराष्ट्र । गुडाका निद्रा, तस्या ईशः गुडाकेशः जितनिद्रः अर्जुनः, तेनैवमुक्तो हृषीकेशः श्रीकृष्णः उभयोः सेनयोः मध्ये अधोमुखं रेतः ऊर्ध्वमुखं कृत्वा भीष्मीकरणात् स्तम्भनाद् भीष्मश्च शस्त्राकर्षणतः द्रोणीकृतकरयुगत्वाद् द्रोणश्च भीष्मद्रोणौ, तयोः प्रमुखतः सर्वेषां महीक्षितामन्तिके च रथोत्तमं स्थापयित्वा हे पार्थेति संबोधयन् एतान्समवेतान्कुरून्पश्येत्युक्तवान् । इतिशब्दः संजयोक्तिद्योतनार्थः ॥ २४, २५ ॥

ततः किमासीदित्यत आह—

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।

तत्रेति । तत्र युद्धार्थे भगवदनुज्ञाया जातायाम् । उभयो सेनयो स्थितान् । पितॄन् पितृव्यान् । अथ तयेत्यर्थे । उक्तानानुक्ताश्च सर्वान्पार्थो ददर्शेत्यर्थः ॥ २६, २६ ॥

तत किमिति तत्राह—

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥२७॥**
**कृपया परया ऽऽविष्टो विषीदन्निदमब्रवीत् ।**

तानिति । स कौन्तेयो ऽर्जुन उभयो सेनयो व्यवस्थितान् सर्वान्बन्धून्समीक्ष्य परया कृपया दयया आविष्टो भूत्वा विषीदन् उभयो सेनयो हिंसाप्रयुक्त विषाद दुर्वन्सन् इद वक्ष्यमाण वाक्य श्रीकृष्ण प्रत्यब्रवीत् उक्तवानित्यर्थः ॥ २७, २७ ॥

किं तद्वाक्यमित्याकाङ्क्षाया यावदध्यायपरिसमाप्ति अर्जुन उवाचेत्याह—

अर्जुन उवाच—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**

दृष्ट्वेत्यादि । युयुत्सु समुपस्थित स्वजन दृष्ट्वा मम गात्राणि सीदन्ति व्यथामनुभवन्ति, मुख च परिशुष्यति अनार्द्र भवतीत्यर्थः ॥ २८,२८ ॥

गात्रव्यथादि शोकलिङ्गमुक्त्वा सप्रति वेपथुप्रभृतीनि शोकलिङ्गानि दर्शयति—

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥**

**गाण्डीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते ।**

वेपथुरिति । शरीरे मे वेपथु अकस्मात् कम्पश्च, रोम्णा पुलकितत्वं रोमहर्ष रोमाञ्चश्च जायते । किं तेनेति तत्राह—गाण्डीवमिति । गाण्डीवनामकं धनुरपि स्वहस्तात्स्रंसते च्यवत इत्यर्थ । किं च त्वक् चैव त्वगिन्द्रियमपि स्वजनवधप्रयुक्तेन शोकवह्निना परित· समन्ताद् दह्यते सतप्यत इत्यर्थ ॥ -२९, २९- ॥

स्वभयहेतूक्त्यनन्तरमधीरतामाह—

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥**
**निमित्तानि च पश्यामि विपरीतानि केशव ।**

न चेति ॥ क ब्रह्माणम् ईश वृषभध्वज च अवतीति हे केशव, युद्धभूमौ अवस्थातु चापि न शक्नोमि । कस्मात् ? मे मम मनश्च भ्रमतीव स्थितम् । किमर्थम् ? अनिष्टसूचकानि विपरीतानि वामनेत्रस्फुरणादिरूपाणि निमित्तानि च पश्यामि ॥ -३०, ३० ॥

यत शत्रुहिंसया श्रेयो विजयो राज्यादिकं च भवति अतो युद्धात् परतिर्व्येति तत्राह—

**न च श्रेयो ऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥**
**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।**

न चेति । स्मर्तृपापाना कर्षणात् निर्मूलीकरणात् हे कृष्ण, आहवे युद्धे स्वजन हत्वा श्रेय किंचिदपि न पश्यामि, विजयं राज्यम् ऐहिकसुखानि च न काङ्क्षे ॥ -३१, ३१- ॥

सर्वजनेप्सितं राज्यभोगादिकं किं नेच्छसीति तत्राह—

**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२॥**

किमिति। गोभि गीभि तत्त्वमस्यादिमहावाक्यैः विद्यत उपलभ्यत इति हे गोविन्द तत्त्वमस्यादिमहावाक्यवेद्य! राज्येन स्रक्चन्दनादिभोगैः जीवितेन वा अस्माकं किं प्रयोजनम्? न किमपीत्यर्थः ॥ -३२ ॥

राज्यादिपरित्यागे हेतुमाह—

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।**
**त इमे ऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च॥ ३३ ॥**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः।**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥३४॥**

येषामिति। येषां बन्धूनामर्थे राज्यं काङ्क्षितं भोगाः सुखानि च काङ्क्षितानि त इमे बान्धवा आचार्यादयः प्राणान् धनानि च त्यक्त्वा युद्धार्थमवस्थिता तिष्ठन्तीत्यर्थः ॥ ३३, ३४ ॥

दयया धार्तराष्ट्रादीनहत्वा तूष्णीं तिष्ठसि चेत् त्वा धार्तराष्ट्रा बाधिष्यन्तेतराम्; ततस्तान्हत्वा राज्यं प्राप्स्यसीति तत्राह—

**एतान्न हन्तुमिच्छामि घ्नतो ऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५॥**
**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन।**

एतानिति। मधुर्नाम कश्चन दानव, तं सूदितवानिति हे मधुसूदन! अस्मान् घ्नतः संहर्तुमागतान् एतान्भीष्मादीन् त्रैलोक्यराज्य-

हेतोरपि हन्तु नेच्छामि । महीकृते महीमात्रप्राप्तये न हन्मीति किं वक्तव्यम् ? स्वभक्तजनानां स्वप्राप्तिप्रतिकूल दुरितमर्दयति नाशयतीति हे जनार्दन ! धार्तराष्ट्रान् निहत्य नो ऽस्माकं का प्रीतिः सतोष स्यात् ॥ ३५, ३५ ॥

'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहर्ता च षडेते आततायिनः ॥
आततायिनमायान्तं हन्यादेवाविचारयन् ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन' ॥'

इत्यादिस्मृतितः तेषां वधो युक्त एवेति तत्राह—

**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥**
**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।**

पापमिति । आततायिनमायान्तमित्यादिकमर्थशास्त्रम् । तच्च धर्मशास्त्राद् दुर्बलम् । तदुक्तं याज्ञवल्क्येन—

'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' ॥'

इति । यस्मादेतद्वधस्याधर्मत्वेनान्याय्यत्वमनिवार्यं स्यात् तस्मात् आततायिनामप्येतेषामाचार्यादीनां वधे ऽस्मान् पापमेवाश्रयेत् । अतो वयं स्वबान्धवान् धार्तराष्ट्रान् हन्तुं नार्हा न योग्या इत्यर्थः ॥ ३६, ३६ ॥

[1] मनु अ ८
[2] या स्मृ व्यव २१
3

आमुष्मिकसुखाभावे ऽप्यैहिकं सुखं स्यादेवेति तत्राह—

**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥**

स्वजनमिति । हे माधव ! स्वजनं हत्वा कथं सुखिनः स्याम, न सुखिनो भवेमेत्यर्थः । ऐहिकस्यापि सुखाभावस्य द्योतको हिशब्दः ॥ ३७॥

उभयोरप्युभयदोषे समाने ऽपि धार्तराष्ट्रा यथा तमङ्गीकृत्य युद्धे प्रवृत्ताः तथा त्वमपि प्रवर्तेथाः, किमनेन विषादेनेति तत्राह—यद्यपीति द्वाभ्याम् ।

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

यद्यपीति । हे जनार्दन ! राज्यलोभेन उपहृतं कलुषितं चेतो यथा ते लोभोपहतचेतसः एते धार्तराष्ट्राः कुलक्षयकृतं कुलक्षयकरणकृतं दोषं मित्रद्रोहे सम्बन्धपातकं च यद्यपि न पश्यन्ति तथा ऽपि कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिः अस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । अतस्तत्प्रवृत्तिनिरसनाय तत्कृतं दोषमस्माभिरेव पापं ज्ञातव्यमेवेत्यर्थः ॥ ३८, ३९ ॥

तं दोषमेव व्यक्तीकरोति—

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मो ऽभिभवत्युत ॥ ४० ॥**

कुलक्षय इति । पारंपर्यक्रमेणागतत्वात्सनातना अग्निहोत्रादय कुलधर्मा कुलक्षये सति प्रणश्यन्ति । धर्मे नष्टे सति कृत्स्नं कुलमपि अधर्मो ऽभिभवति उत, व्याप्नोति खल्वित्यर्थ ॥ ४० ॥

कुलस्याधर्माभिभूतत्वे को दोष इति तत्राह—

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥**

अधमेति । हे कृष्ण ! कुलस्य अधर्माभिभवात्, अधर्मभूयिष्ठत्वत कुलस्त्रिय प्रदुष्यन्ति । दोषयुक्ता भवन्तीत्यर्थ । वृष्णयो यादवा, तत्कुले आविर्भूतत्वात् हे वार्ष्णेय ! स्त्रीषु दुष्टासु सतीषु वर्णसकरो जायते, वर्णमर्यादोल्लङ्घनेनेत्यर्थ ॥ ४१ ॥

वर्णसाकर्ये किं स्यादिति तत्राह—

**संकरो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

सकर इति । कुलघ्नाना कुलस्य च वर्णसकरो नरकायैव भवति । पुत्राद्यभावे एषा पितर, लुप्ता पिण्डोदकक्रिया येषा ते लुप्तपिण्डोदकक्रिया प्रेतत्वनिवृत्त्यभावात् नरके पतन्तीत्यर्थ ॥ ४२ ॥

उक्तदोषमुपसहरति— दोषैरिति द्वाभ्याम् ।

**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥**

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥**

दोषैरिति । हे जनार्दन ! एतैः पूर्वोक्तैः वर्णसंकरकारकैः कुलघ्नानां दोषैः शाश्वता जातिधर्माः कुलधर्माश्च उत्साद्यन्ते लुप्यन्ते । उत्सन्नाः विनष्टाः कुलधर्माः जातिधर्माश्च येषां तेषाम् उत्सन्नकुलधर्माणां मनुष्याणां त्रैवर्णिकानां नरके वासो नियतमवश्यं भवतीति वयमनुशुश्रुम श्रुतवन्त इत्यर्थः ॥ ४३, ४४ ॥

'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान् ॥'

इत्यादिवचनतः स्वजनवधप्रयुक्तमहामोहपरवशो ऽर्जुनो भगवन्तमाह—

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥**

अहो इति । राज्यसुखलोभेन स्वजनं हन्तुमुद्यता इति यदेतन्महदधिकं पापं कर्तुं व्यवसिता वयम् । अहो बत ! तदतिकष्टमित्यर्थः ॥४५॥

एवं सतसहृदयः सन् मृत्युं प्रार्थयते इत्याह—

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

यदीति । अप्रतीकारं प्रतिक्रियामकुर्वाणम् अशस्त्रम् अशस्त्रपरिहं मां शस्त्रपाणयो धार्तराष्ट्रा रणे हन्युः सहेरन् यदि तन्मे क्षेमतरम् अत्यन्तहितं भवेत् ॥ ४६ ॥

ततः किमिति शङ्कमानं प्रति संजय उवाच—

संजय उवाच—

**एवमुक्त्वा ऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमो ऽध्यायः ।

एवमिति । अशुद्धान्तःकरणत्वादर्जुनो बन्धुवधप्रयुक्तशोकसंविग्नमानसः सन्नेवमुक्तरीत्योक्त्वा संख्ये युद्धभूमौ सशरं गाण्डीवनामकं चापं विसृज्य न योत्स्ये ऽहम् इति ब्रुवन् रथोपस्थे रथमध्ये शस्त्रपरिग्रहाच्छस्त्रसंन्यासमेव श्रेयःसाधनं मत्वा उपाविशत् उपविष्टवान् । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां प्रथमो ऽध्यायः ।

# अथ द्वितीयोऽध्यायः

ॐ। अहिंसाशास्त्रमवष्टभ्यार्जुनयुद्धवैमुख्यश्रवणतः स्वपुत्राणां राज्यं ध्रुवं मन्वानं धृतराष्ट्रमालक्ष्य तद्दुराशामुन्मूलयितुं संजय उवाच—

संजय उवाच—

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

तमिति। मधुसूदनो भगवान् स्वजनहिंसाप्रयुक्तया कृपयाऽऽविष्टम्, अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तम् अश्रुपूर्णाकुलेक्षणम् अश्रुव्याप्ततरलाक्षं विषीदन्तं शोचन्तम् अर्जुनम् इदं वक्ष्यमाणं वचनम् उवाच ॥ १ ॥

किं तद्वाक्यमित्यपेक्षायाम् अर्जुनं सन्मार्गे प्रवर्तयितुं सर्वज्ञो भगवानुवाच—कुत इति द्वाभ्याम् ।

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥ २ ॥

कुत इति। स्वगरामावरिमण्डलाख्यं हविर्जुहोति नाशयति चेति हे अर्जुन! अनुपमपराक्रमवानर्जुन इति प्रख्यातकीर्तेस्तव अनार्यजुष्टं

श्रुत्याचार्यलब्धविवेकान्वितपुरुषासेव्यम् अकीर्तिकरम् अयशस्यम् अस्वर्ग्यं स्वर्गानर्हम् इद कश्मल युद्धवैमुख्य विषमे समय क्षत्रियश्रेष्ठ त्वा त्वा कुत कस्माद्धेतो समुपस्थितम् ? शिष्टगर्हितत्वादिद तव नोचितमित्यर्थ ॥ २ ॥

यत एवमतो युद्धायोत्तिष्ठेत्याह—

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥**

क्लैब्यमिति । पृथा नाम कुन्ती, तस्या अपत्यम्, हे पार्थ ! क्लैब्यम् अधैर्यं मा स्म गम मा गा न प्राप्नुहि । कस्मात् ? ईश्वरेणापि कृताहवे दिगन्तविश्रान्तपराक्रमे त्वय्येतन्नोपपद्यते । परान् प्रतिपक्षनीहारान् स्वपौरुषभास्करभस्तिभि तापयति शोषयति इति हे परतप ! क्षुद्र तुच्छ हृदयदौर्बल्यम् अधीरता त्यक्त्वा युद्धायोत्तिष्ठ झटितीत्यर्थ ॥ ३ ॥

भगवतैव बोध्यमानो ऽपि नाहमधैर्येण युद्धादुपरतो ऽस्मि, किं तु परहिंसाया अन्याय्यत्वादिति भगवन्त प्रत्यर्जुन उवाच—

अर्जुन उवाच—

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रति योत्स्यामि पूजाऽर्हावरिसूदन ॥ ४ ॥**

कथमिति । स्वाज्ञोल्लङ्घकानरीन्स्वहस्तपरहस्ताभ्या सूदयतीति हे अरिसूदन ! मधुसूदन ! सख्ये युद्धे पुष्पादिभि पूजार्हौ तौ भीष्मद्रोणाचार्यौ केवलवाचा ऽपि योत्स्यामीति वक्तुमविषयौ प्रति कथम् इषुभि योत्स्यामि युद्ध कुर्वे ॥ ४ ॥

तथा चेत्तव देहयात्रा न सिध्यतीति तत्राह—

**गुरूनहत्वा हि महानुभावा-**
**ञ्छ्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव**
**भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥**

गुरूनिति । श्रुताध्ययनपारीणत्वान्महानुभावा गुरवो भीष्मद्रोणादय, तानहत्वा इहास्मिँल्लोके राज्ञा निषिद्धमपि भैक्षं भिक्षान्नं भोक्तुं श्रेयो हि । आमुष्मिकसुखाभावे ऽप्यैहिकं सुखं निरङ्कुशमिति तत्राह—हत्वेति ।

'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाभाग बद्धो ऽस्म्यर्थेन कौरवैः ॥'

इति युधिष्ठिरं प्रति भीष्मेणोक्तत्वात् अर्थकामान्गुरून् हत्वा तु हत्वा ऽपि रुधिरप्रदिग्धान् लोहितलिप्तान् भोगान् अत्यन्तगर्हितान् भुञ्जीय अश्नीयाम् । अतो गुरुवधसाध्यभोगापेक्षया भैक्षान्नमेव श्रेयो भवेदित्यर्थः ॥ ५ ॥

युद्धस्य क्षत्रियधर्मत्वे ऽपि अहिंसाशास्त्रप्रतिषिद्धत्वात् भैक्ष्ययुद्धयोः कतरत् श्रेय इति न विद्मः ; किं च जयाजयस्थितिरपि संदिग्धेत्याह—

**न चैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषाम-**
**स्ते ऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

` न चेति । हिंसाशून्यत्वाद् भैक्षम्, स्वधर्मत्वाद्युद्धम्, भैक्षयुद्धयो कतरत् अन्यतरत् नो ऽस्माकं गरीय श्रेयस्करमिति न विद्मो न विजानीम इत्यर्थ । परधर्मापेक्षया स्वधर्म श्रेयानिति तत्राह—यद्वेति । उभयो जयादिस्थितेः संदिग्धत्वात् किमुभयेपा तत्साम्यम् । यद्वा परपक्षान् वयं जयेम जेष्याम, यदि वा धार्तराष्ट्रा नो ऽस्मान् जयेयु जेष्यन्ति । यद्यप्यस्माकमेव स्वप्रभावतो जयो भवतु नाम, तथा ऽपि न स फलवान्, यस्मात् यान् बन्धून् हत्वा नैव जिजीविपाम जीवितुं नेच्छाम, प्रमुखे अस्मत्पुरोभागे ते धार्तराष्ट्रा खलु अवस्थिता । तस्मात् युद्धात् क्षत्रिय गर्हितमपि भैक्षमेव श्रेय साधनमित्यर्थ ॥ ६ ॥

एवं विदितसंसारदोपस्य मुमुक्षोरेव ब्रह्मात्मैक्योपदेशग्रहणाधिकारं व्यक्तीकुर्वन्नर्जुनो भगवन्तमाचार्यत्वेन वृण्वन् निःश्रेयससाधनमुपदिशेति प्रार्थयते—

**कार्पण्यदोपोपहतस्वभावः**
**पृच्छामि त्वा धर्मसंमूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्ते ऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

कार्पण्येति । यो ऽनात्मवित्परिच्छिन्नदृष्टि स कृपण, अपरिच्छिन्नप्रबोधाभावात् 'यो वा एतदक्षर गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति स कृपण'[1] इति श्रुते, तस्य भाव कार्पण्यम् अतस्मिंस्तद्भाव, तदेव दोप, तेनोपहत कलुषित स्वभाव स्वज्ञान यस्य सो ऽहं कार्पण्यदोपोपहतस्वभाव,

[1] बृ ३ ८ १०

प्रत्यक्पदैवयज्ञानधारणाहीं धर्मे , तस्मिन् समूढम् अविवेकदशाऽऽपन्न चेतो यस्य सो ऽह धर्मसमूढचेता सन् त्वा त्वाम पृच्छामि । किं पृच्छसीति तत्राह —यदिति । भैक्ष्ययुद्धयोर्मध्ये यदन्यतरन्नि श्रेयससाधन स्यादिति विचार्य निश्चित तदेतन्मह्य ब्रूहि । 'नापुत्रायाशिष्याय' इति निषेधात् न वक्तव्यमिति तत्राह—शिष्य इति । यतो ऽह ते शिष्य अत त्वा शरण प्रपन्न शाधि शिक्षय, सन्मार्गे नियोजयेत्यर्थ ॥ ७ ॥

उत सर्वं परित्यज्य नि श्रेयसमेवेच्छसीति तत्राह—

न हि प्रपश्यामि ममापनुद्या-
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

न हीति । भूमावसपत्न शत्रुवर्जित निष्कण्टकम् ऋद्ध समृद्धम् प्रजारक्षणशिक्षणहेतु राज्य सुराणामाधिपत्यमिन्द्रत्व ब्रह्मत्व वा ऽवाप्यापि ममेन्द्रियाणामुच्छोषण यच्छोकमविवेकज मनस्तापमपनुद्यात् अपनयेत्, तच्छोकनिवृत्तिसाधन न हि प्रपश्यामि । यत एवमत त्वमेव मच्छोकापि प्रत्यगभिन्नब्रह्मबोधामृतवर्षेण शमन कुर्वित्यर्थ । 'तरति शोकमात्मवित्'[1] इति श्रुते ॥ ८ ॥

एवमर्जुनेन भगवन्त प्रति विज्ञापितमिति सजय उवाच—

सजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

[1] छा, ७ १ ३.

एवमिति । दृष्ट्वेमं स्वजनम् इत्याद्येवमुक्तप्रकारेण गुडाकेशो ऽर्जुनः स्वयं परंतपो ऽपि हृषीकेशमुक्त्वा पुनर्गोविन्दं परपक्षैः कदाचिदपि न योत्स्य इत्युक्त्वा च समाध्याविष्ट इव तूष्णीं बभूव ह किल ॥ ९ ॥

ततः किमित्यत आह—

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

तमिति । उभयोः सेनयोः मध्ये विषीदन्तमर्जुनं प्रति प्रहसन्निव हृषीकेशः प्रसन्नमुखपङ्कजः सन् हे भारतेति संबोध्य वक्ष्यमाणमिदमपवर्गप्राप्तिसाधनं निष्ठाद्वयात्मकं गीताशास्त्रमुवाच उक्तवानित्यर्थः । ननु नेह भगवतोपायोपेयभूतं निष्ठाद्वयं प्रतिपाद्यते, क्षत्रियच्छलरक्षोगणभारपीडितया धरण्या प्रार्थितेन ब्रह्मणा ऽर्थितस्य नारायणस्य भूभारहरणार्थमेव देवकीवसुदेवयोराविर्भूतत्वेन तादर्थ्येनार्जुनं प्रेरयितुं धर्माधर्मयोर्वक्तव्यत्वात्; अतो ऽस्य शास्त्रस्य न निष्ठाद्वयात्मकतेति चेत् तत्रोच्यते—भगवदवतारस्योपायोपेयभूतनिष्ठाद्वयस्थापकत्वेन भूभारनिवृत्तेश्चार्थिकत्वादधिकारिणमर्जुनं निष्कामकर्मप्रवर्तनद्वारा प्रत्यगभिन्नब्रह्मज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य वर्णितत्वात् निष्ठाद्वयविषयत्वं सिद्धमेवेत्यर्थः । न च स्वाज्ञानावृतस्य न ज्ञानोपदेशार्हता स्यादिति वाच्यम्, ज्ञानोपदेशस्याज्ञैकगोचरत्वात्, तद्विपरीतस्य ब्रह्मात्मभावापन्नत्वेन ज्ञानोपदेशनैरपेक्ष्यात्, यस्याधिष्ठानाज्ञानं तस्यातस्मिंस्तद्भावः, यस्यैवं तस्य निष्कामकर्मानुष्ठानजनितचित्तशुद्धिप्राप्यसर्वकर्मसंन्यासपदमारूढस्य तत्त्वंपदार्थशोधकवाक्यार्थविचारद्वारा अधिष्ठानज्ञानसंभवादज्ञस्यैव ज्ञाने ऽधिकारः । न च प्रत्यक्परचिदैक्यज्ञानस्य तत्त्वंपदविचारगम्यत्वेनार्जुनं प्रति भगवता तदेवोपदेष्टव्यम्, तद्विहाय किमिति गीताशास्त्रमुपदिष्टमिति

वाच्यम्, गीताशास्त्रस्यापि तत्त्वंपदविचारपरत्वात्, अष्टादशाध्यायवतो गीताशास्त्रस्य खण्डत्रयात्मकत्वेन तत्र पूर्वखण्डं त्वंपदार्थशोधकम्, मध्यमखण्ड तत्पदार्थशोधकम्, अन्तिमखण्डं शोधिततत्त्वंपदार्थैक्यबोधकमिति निश्चितत्वाद् गीताशास्त्रमेव कैवल्यसाधनमिति सिद्धम् ॥ १० ॥

एवं स्वनियोजिताज्ञानावृतचित्तत्वेन धर्मसंमूढचेतस कर्तव्याकर्तव्यविवेकविकलस्य दुरुत्तरशोकसागरमध्ये प्रविश्य क्लिश्यतो ऽर्जुनस्य स्वाज्ञानतत्कार्यनिवर्तकप्रत्यगभिन्नब्रह्मज्ञानहेतुतत्त्वपदलक्ष्यैक्यविचारादन्यत्रोद्धारम् पश्यन् तमनन्यशरणमर्जुन स्वाविद्याकामकर्मसंसाराद्धर्तुमिच्छन् सर्ववेदान्तसंग्रहभूतं तत्त्वंपदलक्ष्यैक्यविषयम् 'अशोच्यान्' इत्यादि 'सर्वधर्मान्परित्यज्य' इत्यन्तं तदिदं गीताशास्त्रं श्रीभगवानुवाच—अशोच्या नित्यादिना ।

श्रीभगवानुवाच—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

अशोच्यानिति । शोकविषया शोच्या न भवन्तीत्यशोच्या भीष्मद्रोणादय । 'दृष्ट्वेमं स्वजनम्' इत्यादिना यान्प्रत्येवं त्वमन्वशोच अनुशोचितवानसि, ते किं भीष्मादिशब्दवाच्या उत तद्भिन्ना वा नाथ, भीष्मादिशब्दवाच्याना शिर पाण्यादिमता तूलविद्याविकल्पितत्वेन मिथ्यात्वात् मिथ्याभूतस्य शोकानास्पदत्वात् । न द्वितीय, भीष्मादिशब्दवाच्यतत्कार्याभावाभावप्रकाशकप्रत्यग्रूपाणा नित्यशुद्धबुद्धपरमानन्दाभिन्नत्वेन परमार्थसत्यत्वात् पक्षद्वये ऽपि न ते शोच्यतापद्मश्नुवीरन् ।

यस्मादुभयथा ऽपि अशोच्यान् भीष्मादीनुद्दिश्य त्वमन्वशोचः, तस्मात् असर्पभूते रज्जुखण्डे सर्पबुद्धिः पुरुष इव भ्रान्तो ऽसि। किं च—'कुतस्त्वा कश्मलम्' इत्यादिना मया बोधितो ऽपि मन्निमित्तं भीष्मादयो म्रियन्ते, तैर्विनाभूतो ऽहं राज्यसुखादिना किं करिष्यामीति प्रज्ञावादान् बुद्धिमतं वचनानि भाषसे उत्तम इव; पाण्डित्यच्छलेन मौढ्यमेव प्रकटीकरोषीत्यर्थः। देहादावात्मात्मीयाभिमानेनाहमिव सर्वे ऽपि शोचन्तीति तत्राह—नेति। यतः पण्डिता गतासून् गतप्राणान् अगतासून् जीवतश्च वा बन्धुनुद्दिश्य नानुशोचन्ति। सूक्ष्मबुद्धिमत्त्वं पण्डितत्वम्, न त्वात्मज्ञत्वम्, हेत्वभावादिति तत्राह—पण्डिता इति। पण्डा प्रत्यगभिन्नब्रह्मज्ञानतो ऽखण्डाकारा वृत्तिर्येषामस्ति ते पण्डिताः। तदेतत्खलु पाण्डित्यम्, न लौकिकविषयकसूक्ष्मबुद्धिमत्त्वम्। तथा च श्रुतिस्मृती—'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्', 'पण्डा परात्मविज्ञानं तदस्यास्तीति पण्डितः' इति। अतः त्वमशोच्यशोचनादपण्डितो ऽसीत्यर्थः॥ ११॥

अशोच्यान् शोचतो ममास्त्वपण्डितत्वम्, पण्डितानामपि संभवप्रलयदर्शनादिति देहात्मबुद्ध्या शङ्कमानमालक्ष्य आत्मा न जायते प्रागभावाप्रतियोगित्वात्, तथा न म्रियते भावत्वे सत्यजडत्वात्, यन्नैवं तन्नैवं यथा घटः इति व्यतिरेकानुमानात् तदनुरोधेन 'न जायते म्रियते वा विपश्चित्'[1] इत्यादिश्रुतेश्च मम तव भीष्मादीनामपि प्रत्यगभिन्नब्रह्मरूपेण जात्वपि संभवप्रलयाभावादशोच्यत्वं सिद्धमेवेत्याह—

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम्॥ १२॥**

[1] कठ, २, १८.

वाच्यम्, गीताशास्त्रस्यापि तत्त्वंपदविचारपरत्वात्, अष्टादशाध्यायवतो गीताशास्त्रस्य खण्डत्रयात्मकत्वेन तत्र मूलखण्डे त्वंपदार्थशोधकम्, मध्यमखण्ड तत्पदार्थशोधकम्, अन्तिमखण्डे शोधिततत्त्वंपदार्थैक्यबोधकमिति निश्चितत्वाद् गीताशास्त्रमेव कैवल्यसाधनमिति सिद्धम् ॥ १० ॥

एवं स्वनियोजिताज्ञानावृतचित्तत्वेन धर्मसंमूढचेतसः कर्तव्याकर्तव्यविवेकविकलस्य दुरुत्तरशोकसागरमध्ये प्रविश्य क्लिश्यतो ऽर्जुनस्य स्वाज्ञानतत्कार्यनिवर्तकप्रत्यगभिन्नब्रह्मज्ञानहेतुतत्त्वंपदलक्ष्यैक्यविचारादन्यत्रोद्धारमपश्यन् तमनन्यशरणमर्जुनं स्वाविद्याकामकर्मसंसारादुद्धर्तुमिच्छन् सर्ववेदान्तसंग्रहभूतं तत्त्वंपदलक्ष्यैक्यविषयम् 'अशोच्यान्' इत्यादि 'सर्वधर्मान्परित्यज्य' इत्यन्तं तदिदं गीताशास्त्रं श्रीभगवानुवाच—अशोच्यानित्यादिना ।

श्रीभगवानुवाच—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

अशोच्यानिति । शोकविषया शोच्या न भवन्तीत्यशोच्या भीष्मद्रोणादय । 'दृष्ट्वेम स्वजनम्' इत्यादिना यान्प्रत्येवं त्वमन्वशोच अनुशोचितवानसि, ते किं भीष्मादिशब्दवाच्या उत तद्भिन्ना वा ? नाद्य, भीष्मादिशब्दवाच्याना शिर पाण्यादिमता तूलाविद्याविकल्पितत्वेन मिथ्यात्वात मिथ्याभूतस्य शोकानास्पदत्वात् । न द्वितीय, भीष्मादिशब्दवाच्यतत्कार्यभावाभावप्रकाशकप्रत्यग्रूपाणा नित्यशुद्धबुद्धपरमानन्दाभिन्नत्वेन परमार्थसत्यत्वात् पक्षद्वये ऽपि न ते शोच्यतापदमश्नुवीरन् ।

यस्मादुभयथाऽपि अशोच्यान् भीष्मादीनुद्दिश्य त्वमन्वशोचः, तस्मात् असर्पभूते रज्जुखण्डे सर्पबुद्धिः पुरुष इव भ्रान्तोऽसि। किं च—'कुतस्त्वा कश्मलम्' इत्यादिना मया बोधितोऽपि मन्निमित्तं भीष्मादयो म्रियन्ते, तैर्विनाभूतोऽहं राज्यसुखादिना किं करिष्यामीति प्रज्ञावादान् बुद्धिमद्वचनानि भाषसे उत्तम इव; पाण्डित्यच्छलेन मौढ्यमेव प्रकटीकरोषीत्यर्थः। देहादावात्मत्मीयाभिमानेनाहमिव सर्वेऽपि शोचन्तीति तत्राह—नेति। यतः पण्डिता गतासून् गतप्राणान् अगतासून् जीवतश्च वा बन्धूनुद्दिश्य नानुशोचन्ति। सूक्ष्मबुद्धिमत्त्वं पण्डितत्वम्, न त्वात्मज्ञत्वम्, हेत्वभावादिति तत्राह—पण्डिता इति। पण्डा प्रत्यगभिन्नब्रह्मज्ञानतोऽखण्डाकारा वृत्तिर्येषामस्ति ते पण्डिताः। तदेतत्खलु पाण्डित्यम्, न लौकिकविषयकसूक्ष्मबुद्धिमत्त्वम्। तथा च श्रुतिस्मृती—'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्', 'पण्डा परात्मविज्ञानं तदस्यास्तीति पण्डितः' इति। अतः त्वमशोच्यशोचनादपण्डितोऽसीत्यर्थः ॥ ११ ॥

अशोच्यान् शोचतो ममास्त्वपण्डितत्वम्, पण्डितानामपि संभवप्रलयदर्शनादिति देहात्मबुद्ध्या द्राङ्मानमालक्ष्य आत्मा न जायते प्रागभावाप्रतियोगित्वात्, तथा न म्रियते भावत्वे सत्यजडत्वात्, यन्नैवं तन्नैवं यथा घटः इति व्यतिरेकानुमानात् तदनुरोधेन 'न जायते म्रियते वा विपश्चित्'[1] इत्यादिश्रुतेश्च मम तव भीष्मादीनामपि प्रत्यगभिन्नब्रह्मरूपेण जात्वपि संभवप्रलयाभावादशोच्यत्वं सिद्धमेवेत्याह—

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

[1] कठ, २, १८.

न त्विति । अहं परमेश्वरो जातु कदाचिदपि भक्तेच्छोपात्तलीलाविग्रहस्याविर्भावतिरोभावसत्त्वे ऽपि नासमिति न, किं त्वासमेव । चिरंतनत्वेन तव सच्चिदानन्दरूपत्वात् त्वादृशस्य जननमरणाभावे ऽपि त्वद्विपरीतस्य मम कथमेवं स्यादिति तत्राह—न त्वमिति । यथा ऽहं परमेश्वर· तथा त्वमपि नासीरिति न, किं त्वासीरेव मदंशत्वात् । त्वदंशत्वेन मम जननाद्यभावे ऽपि भीष्मादीना त्वदंशत्ववैधुर्यात् तेषा् जन्माद्यभाव· कथमिति तत्राह—नेम इति । इमे जनाधिपा· भीष्मादयः नासन्निति न, किं त्वासन्नेव, 'पादो ऽस्य विश्वा भूतानि[1]' इति श्रुत्यनुरोधेन तेषामपि मदंशत्वाविशेषात् भीष्मादिशब्दवाच्यदेहादौ जन्मस्थितिभङ्गं गते ऽपि तद्विलक्षणचैतन्यस्य परमार्थसत्यत्वात् । अहं त्वं चेमे च सर्वे वयमत. परं देहोत्पत्ते प्राक् प्रलयानन्तरं च न भविष्याम इति न, किं तु भविष्याम एव, देहदेहानुवृत्त्या सर्वे वयमिति बहुवचनं नात्मभेदाभिप्रायेण । आत्मन एकत्वादशोच्यत्वं सिद्धमित्यर्थ· ॥ १२ ॥

आत्मन एकत्वे नित्यत्वमुक्तम्, तस्यैव पूर्वदेहपरित्यागे नूतनदेहस्वीकारे च विकारस्यावश्यंभावात्तद्वतो नित्यत्वं कथमित्यत्र सदृष्टान्तमुत्तरमाह—

**देहिनो ऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

देहिन इति । देहो ऽस्यास्तीति देही, तस्य देहिनो देहाभिमानवत अस्मिन्वर्तमाने स्थूलदेहे यथा येन प्रकारेण कुमारस्य भाव कौमारं बाल्यावस्था, यूनो भावो यौवनं मध्यमावस्था, देहेन्द्रियपाटवं जरयतीति जरा चरमावस्था इत्येतास्तिस्रो ऽवस्था मिथो विलक्षणा· आबालगोपालं साधारण्यो

[1] ऋ, अ, ८, अ, ४, व, १७-३

भवन्ति, एवमवस्थात्रयाभिमानिनो लोकस्य बाल्ये युवा वृद्ध इत्यभिमानव्यापारभेददर्शनात् कथमविक्रियत्वमित्यत्रोच्यते—प्रथमावस्थापाये द्वितीयावस्थाऽऽगमे चापायागमयोरभावाद्यो ऽहं बालो बालकैः क्रीडामन्वभूवं स एव यौवने दारादिभिः सुखी स्याम्। यो ऽहं युवा स एव स्थविरो भवामीत्यवस्थात्रये व्यभिचारिण्यपि स्वस्याव्यभिचारित्वेनैकत्वानुभवात् बाल्ये ऽहमित्याद्यभिमानव्यापाराणां कौमाराद्यवस्थात्रयात्मकस्थूलशरीरनिष्ठत्वादात्मनः तद्विलक्षणत्वेनाविक्रियत्वं सिद्धम्। तथा पूर्वदेहादन्यो देहो देहान्तरं तत्प्राप्तिः देहान्तरप्राप्तिरपि लिङ्गदेहनिष्ठा जातमात्रस्य शिशोः पूर्ववासनात स्तन्यपानादिप्रवृत्तिदर्शनात्। यतो जन्मनाशौ देहादेरेव तद्विपरीतस्यात्मनो नोपपद्येते अत तत्र देहादिनिष्ठजन्मनाशयोः श्रुत्याचार्यप्रसादलब्धपरमार्थभावाद्धः स्वेन धीरो ज्ञानी न मुह्यति। देहे जाते मृते वा जातो मृतो वा ऽहमिति न मोहमापद्यते स्वस्य नित्यत्वेनाविक्रियत्वादित्यर्थः ॥ १३ ॥

विदुष आत्मनाशनिमित्तमोहाभावे ऽपि सुखवियोगदुःखसयोगनिमित्तो मोहः स्यादिति तत्राह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।**
**आगमापायिनो ऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

मात्रास्पर्शा इति। बुन्त्या अपत्यं कौन्तेय। मीयन्ते आभिः इति मात्रा इन्द्रियाणि, तेषां स्पर्शा शब्दादिभिर्योगा, ते शीतोष्णसुखदुःखानि प्रयच्छन्तीति शीतोष्णसुखदुःखदाः। यद्वा स्पृश्यन्त इति स्पर्शा शब्दादयो विषया। मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः, कदाचित् कस्यचित् शीतमुष्णं वा सुखं तद्विपर्ययो वा भवेदिति तेषामनियतरूपत्वात्, यत एवम् आगमापायिन समवप्रत्ययन्तो भवन्ति। एवम् इष्टजनसयोग

वियोगा अपि आगमापायिन अत एवानित्या तथाऽपि यत शीतोष्णादि द्वद्वेषु हर्षविषादवतामनर्थपरपरा अनिवार्या स्यात्, अत तेषु हर्षविषाद रहितो भूत्वा, भरतो नाम पौर्विको भूपति तस्यान्वये जात इति हे भारत! शीतोष्णादींस्तितिक्षस्व सहस्वेत्यर्थ । 'शान्तो दान्त उपरतस्तितिक्षु श्रद्धावित्तो भूत्वा ऽऽत्मन्येवात्मान पश्यति'[1] इति श्रुते । अस्मिन् श्लोके भगवदुक्तसबोधनद्वयादुभयकुलविशुद्धस्यैव ब्रह्मविद्याऽधिकारित्व द्योत्यते । अत एव भगवानेव सबोध्यार्जुनाय ब्रह्मविद्यामुपदिष्टवानिति भाव ॥ १४ ॥

केवलशीतोष्णादिसहनस्य मुक्तिसाधनत्वाभावे ऽपि तस्यैव पुनर्विवेकवैराग्यसहितस्य ज्ञानद्वारा मुक्तिसाधनत्वात् तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितमित्याह—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सो ऽमृतत्वाय कल्पते ॥ १५ ॥**

य हीति । पौरुषान्विता पुरुषा क्षत्रियश्रेष्ठा क्षमावन्तश्च तेषाम् ऋषभ श्रेष्ठो ऽयमिति हे पुरुषर्षभ! समे दु खसुखे यस्य त समदु ख सुखमित्यादिसाधनचतुष्टयसंपत्त्या कल्पितसुखदु खप्रयुक्तहर्षविषादधी धीर । यद्वा स्वव्यावृत्तकार्यजातानुवृत्तब्रह्मात्ममात्रावशेषदृग्धीर । त धीर पूर्णब्रह्म भावारूढ य पुरुषम् एते पूर्वोक्ता मात्रास्पर्शप्रभवा शीतोष्णादयो न व्यथयन्ति न चालयन्ति । स्वभावकल्पितशीतोष्णादिकृतो विद्वान् सो ऽमृतत्वाय कैवल्याय कल्पते हि योग्यो भवतीत्यर्थ ॥ १५ ॥

[1] बृ, ४, ४, २३.

सदसदात्मकद्वैतस्य सत्त्वेनाद्वैतस्वरूपावस्थानलक्षणकैवल्यस्य मृग्यत्वात् सदसद्विवेकस्यापि दुरवग्रहत्वात् द्वन्द्वसहनप्रयोजनाभावाच्च कथं विद्वानमृतत्वाय कल्पत इति तत्राह—

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ १६॥**

नेति। अनृतजडदुःखात्मकस्थूलदेहादेर्जाग्रदादेः शीतोष्णादेश्च द्वैतस्यासतः सद्भावः अस्तित्वं न विद्यते, प्रतिक्षणं विकारित्वेन व्यभिचारित्वात्। यथा घटशरावादिकं मृद्व्यतिरेकेण निरूपयितुमशक्यम्, तथैव विकाराणां कारणाव्यतिरेकप्रमाणाद्व्यावृत्तस्य कार्यजातस्य स्वोत्पत्तिप्रलयाभ्यां प्रागूर्ध्वं चादर्शनात् व्यावृत्तस्यानुवृत्ते ब्रह्मणि कल्पितत्वेनासतः अविद्यमानत्वं सिद्धम्। अनृतजडदुःखात्मकव्यावृत्तप्रपञ्चप्रतियोगिभूताजडानन्दात्मकत्वेनानुवृत्तस्य सतः अभावः अविद्यमानता न विद्यते सर्वत्र सर्वदाऽव्यभिचारित्वेन परमार्थसत्यत्वात् यथा व्यावृत्तसर्पधाराद्यनुवृत्तरज्जोरिदमंशः सन् तथाऽनुवृत्तं ब्रह्म सत्यम्। व्यावृत्तेषु व्यभिचारिष्वप्यव्यभिचारितया सर्वत्रानुवृत्तत्वात् सत्त्वं निरङ्कुशम्। एवमुभयोरनयोः सदसत्पदार्थयोः सत्सदेव असदसदेवेत्यन्तो निर्णयो दृष्टः। कैः? तत्त्वदर्शिभिः, तस्य भावस्तत्त्वम्, तत्तत्त्वपदलक्ष्यप्रत्यगभिन्नब्रह्मयाथात्म्यं द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैः। तुशब्दः तत्त्वविदितरैः सदसद्विवेको दुरवग्रह इति द्योतयति। त्वमपि तत्त्वदर्शिनां मार्गमवष्टभ्य सर्वत्रानुवृत्तसद्ब्रह्मव्यतिरेकेण व्यावृत्तासद्द्वैतप्रपञ्चाभावात् परमार्थसतः अद्वैतत्वेन कैवल्यरूपत्वात् विवेकवैराग्यपूर्वकद्वन्द्वसहनस्य ज्ञानद्वारा कैवल्यहेतुत्वमस्तीति निश्चित्य शीतोष्णादि सहस्वेत्यर्थः॥ १६॥

कवलितासत्प्रपञ्चस्य सतः सर्वविक्रियारहितत्वेन सामान्यविशेषशून्याखण्डैकरसत्वं चाह—

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

अविनाशीति । चराचरात्मकं जगत् सर्वं येन चिद्व्याप्त्येन ब्रह्मणा आकाशेन घटादिकमिव ततं कवलितम्, तत्तु प्रत्यगभिन्नं ब्रह्माविनाशीति विद्धि । सर्वथा स्वतः परतो वा विनाशाभावद्योतकः तुशब्दः, 'अविनाशी वा अरे ऽयमात्मा[1]' इति श्रुतेः । अविनाशित्वे हेतुरव्यय इति । तस्य निरवयवत्वेन स्वभिन्नावयवापचयोपचयशून्यत्वेन च स्वसंबन्धिवस्त्वभावात् यथा कश्चिल्लोके धनादिहानितो व्येति न तथा ब्रह्म, स्वभिन्नधनाद्यभावात् कुत्राप्यात्मात्मीयत्वाभिमानाभावात् । अतः तादृशस्याव्ययस्य ब्रह्मणो विनाशं स्वरूपाभावं कर्तुं न कश्चिदर्हति, स्वनाशप्रसङ्गात् स्वस्यैव ब्रह्मत्वात् स्वनाशस्य तावदाबालगोपालमनिष्टत्वात् । यथा चक्षुर्गतं कृष्णतारं चक्षुर्न पश्यति तथैव स्वनाशं स्वयं न करोति, एकस्यैव कर्मत्वकर्तृत्वविरोधात् । तस्मादीश्वरो ऽपि स्वनाशं कर्तुं नेश्वर इत्यर्थः ॥ १७ ॥

कालत्रयाव्यभिचारित्वेन सत्स्वरूपमुक्त्वा तद्विपरीतमसत्स्वरूपमाह—

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनो ऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

अन्तवन्त इति । यथा ऽधिष्ठानभूतमरुशुक्तिरज्ज्वादिस्वाज्ञानदशानीरजतसर्पादिरूपेण सत्यवद्भासमानो ऽपि पुनः स्वज्ञानदशामधिष्ठेयनीर-

[1] बृ ४ ५ १४

रजतसर्पादिरन्तवान्भवति, तथैव सर्वाधिष्ठानभूतब्रह्मात्माज्ञानत इमे अनृत-जडदुःखात्मकस्थूलसूक्ष्मकारणदेहा आत्मात्मीयाभिमानास्पदान्यपि पुनः स्वज्ञानतः स्वप्नमायाकल्पितदेहवच्चान्तो नाशो येषां ते अन्तवन्तो भवन्ति। तेषां मिथ्यात्वे ऽपि शरीरिणो जीवस्य नित्यत्वात् नित्यस्यानाशिनः आत्मन इमे देहाः सूरिभिः अन्तवन्त इत्युक्ताः। न च नित्यस्यानाशिन इत्यत्र पुनरुक्तिः, नित्यत्वानाशित्वयोः भिन्नत्वात्। आत्यन्तिकनाशाश्रयत्वं नित्यत्वम्। आपेक्षिकनाशाश्रयत्वमनाशित्वम्। देहो ऽदर्शनं गतो नष्ट इत्यत्रात्यन्तिकनाशः, विद्यमानो ऽपि देहो व्याध्यादि-युक्तो नष्ट इत्यत्रापेक्षिकनाशः। नित्यस्यानाशिनः इति द्वयोरुक्त्या आत्मनो द्विविधनाशसंबन्धाभावः प्रतीयते। अन्यथा घटादिनित्यत्ववदापेक्षिकमेव स्यात्, तन्मा भूदिति नित्यस्यानाशिनः इत्युक्तम्। नित्यत्वानाशित्वयोः हेतुः अप्रमेयस्येति। प्रत्यक्षादिप्रमाणैः प्रमातुमयोग्यस्येत्यर्थः। प्रत्यक्षाद्यप्रमेयत्वे ऽपि वेदान्तवेद्यत्वेन प्रमेयता स्यादिति चेन्न, स्वतः सिद्धत्वादात्मनः। सिद्धे सति प्रमातरि प्रमाणेच्छा जायते। न चाहमिति पूर्वमात्मानमप्रमाय परिच्छेदप्रवृत्तिरुपपद्यते। अहमहं वा न वेत्याबालगोपालमात्मनः असंदिग्धत्वात्। वेदान्तास्तावदात्मन्यतद्धर्मारोपनिरासकत्वेन प्रमाणपदं भजन्ते न ह्यज्ञातार्थज्ञापकत्वेन, 'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः[1]' इति श्रुतेः। हे भारत! यस्मात् देहादयः आगमापायित्वेनानित्याः तद्विपरीतत्वे-नात्मा अविक्रियो नित्यश्च भवति, तस्मान्मोहजं शोकं त्यक्त्वा युध्यस्व; युद्धाद्विमुखो मा भूरित्यर्थः। युध्यस्वेत्यत्र ज्ञानाङ्गत्वेन न युद्धकर्तव्यता विधीयते। सर्वेषा युद्धस्य क्षत्रियधर्मत्वेन स्वयं क्षत्रियो भूत्वा युद्धे प्रवृत्त *एव ह्यर्जुनः शोकमोहावृतः तूष्णीमास्तेति तस्य मोहावृतिनिरासो भगवता*

[1] बृ ४ ५ १४.

क्रियते । यत एवमतो गीताशास्त्रस्य संसारकारणाविद्याद्वयतत्कार्यमहामोहनिरासकृत्वादर्जुनं प्रति युध्यस्वेत्यनुवादमात्रम् , न सर्वेषा ज्ञानाङ्गत्वेन तत्कर्तव्यता विधीयत इत्यर्थः ॥ १८ ॥

यथा भीष्मादिमरणप्रयुक्तः शोको निर्निमित्तः, तथा 'एतान्न हन्तुमिच्छामि' इत्यादिस्वत्सम्बन्धिहन्तृत्वप्रयुक्तः शोकोऽप्ययुक्त इत्यनुवादकत्वेन द्वौ मन्त्रावनुक्रामति—

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

य इति । यः पुमान् एनम् अस्मत्प्रत्ययालम्बनमात्मानं हननक्रियाकर्तृत्वेन हन्तारं वेत्ति, यश्चैनं प्रकृतमात्मानं हननक्रियाकर्मत्वेन हतं मन्यते, तावुभावपि देहात्मभावारूढत्वेन तद्विलक्षणमात्मानं न विजानीतः ; न जानीत एवेत्यर्थः । यत एवमतो हननक्रियाकर्तृत्वकर्मत्वे आत्मनो न पारमार्थिके, किं त्वविद्याकल्पिते इत्यत्र हेतुमाह—नायमिति । अयमात्मा न परान्हन्ति, परैर्वा स्वयं न हन्यते । अविक्रियत्वादात्मनो हननक्रियाकर्तृत्वं तत्कर्मत्वं वा न सम्भवतीत्यर्थः ॥ १९ ॥

हननक्रियाकर्तृत्वं तत्कर्मत्वं वा नास्तीति यदुक्तं तन्मृष्यताम्, आत्मनः षड्भावविकारास्पदत्वादित्येवं प्राप्ते, द्वितीयो मन्त्र आम्नायते—

**न जायते म्रियते वा कदाचि-**
**न्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २० ॥**

न जायत इति । अयमात्मा कदाचिदपि न जायते, जनिक्रिया रहितत्वात् । अयमात्मा कदाचिदपि न म्रियते वा । वा शब्दश्चार्थे । न म्रियते चेत्यर्थः, नाशक्रियाविधुरत्वात् । यद्यपि आद्यान्त्यविक्रिययो प्रतिषेधेन सर्वा विक्रिया प्रतिषिध्यन्ते, तथा ऽपि मध्यभाविविक्रियाप्रतिषेधो वक्तव्य इत्याह—नायमिति । न चायमात्मा भूत्वा उत्पद्य भविता अस्ति त्वभावमभवति, सर्वदा पारमार्थिकसत्त्वेन जन्मानन्तरास्तित्वलक्षणद्वितीयविक्रियाविकलत्वात् । वाशब्द नशब्दाभ्यामयमात्मा ऽभूत्वा प्राग्देहवद्भूयो वा पुनरपि न भविता । यो हि जायते स जन्मानन्तरमस्तित्व भजते । यस्तद्विपरीत सो ऽयमात्मा न जायत इत्यजो भवति । अजत्वे सति सर्वदैकरूपत्वान्नित्य । नित्यत्वे ऽप्यपक्षयविकार किं न स्यादिति तत्राह—शाश्वत इति । शश्वद्भव शाश्वत । निरवयवत्वे सति निर्गुणत्वा त्स्वरूपतो गुणतो वा ऽपक्षयशून्य इत्यर्थ । अपक्षयाभावे ऽपि वृद्धि विक्रिया किं न स्यादिति तत्राह—पुराण इति । पुरा ऽपि नव पुराण । इदानीतनस्य नवस्य सावयवत्वेन वृद्धिविक्रिया स्यात् । आत्मनो निरवयवत्वेन पुरा ऽपि नवत्वादयमात्मा तूलाविद्याविकारदेहादिवत् कदाचिदपि न वर्धत इत्यर्थ । अपक्षयवृद्ध्योरवयवनिष्ठत्वे ऽपि परिणामित्व किं न स्यादिति तत्राह—न हन्यत इति । हन्यमाने विपरिणम्यमाने शरीरे अयमात्मा कदाचिन्न हन्यते न विपरिणम्यते निरुपाधिकत्वात् । न च म्रियते हन्यत इति न पौनरुक्त्यम्, हन्ते परिणामार्थत्व सम्भवात् । न जायत इत्यस्मिन्मन्त्रे यास्काचार्यावलम्बितषड्भावविकार निराकरणतो हननक्रियाकर्तृत्व तत्कर्मत्व चात्मनो निरस्तमित्यर्थ ॥ २० ॥

पूर्वमन्त्रतो हननक्रियाकर्तृत्व तत्कर्मत्व वा ऽऽत्मनो नेवेति प्रतिज्ञाय तत्सिद्धय षड्भावविकारविकलत्वमुक्त्वा प्रतिज्ञातार्थमुपसहरति—

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

वेदेति । हे पार्थ! य एनमिति पूर्वमन्त्रोक्तलक्षणमविनाशिनमपेक्षितनाशशून्यम्, नित्यमात्यन्तिकनाशशून्यम्, अजं जन्मादिषड्विकारविकलम्, अव्ययमन्यविक्रियाशून्यमात्मानमस्मत्प्रत्ययालम्बनत्वेन यो वेद विजानाति, स पुरुषो विद्वान् कथं केन प्रकारेण कं घातयति हन्तारं नियोजयति, कं वा हन्ति हननक्रियां करोति; न कथंचिद्घातयति न कथंचिद्धन्तीत्याक्षेपार्थ एव स्यात्, उत्तरत्र प्रतिवचनादर्शनेन प्रश्नार्थत्वासंभवात्; 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिक्रियाकारकफलनिराकरणश्रुत्यनुरोधेन स्वभिन्नसामान्यविशेषवस्त्वभावात्कथं कं वा ऽन्यं परेण घातयति स्वयं कं वा कथं वा हन्तीत्याक्षेपार्थस्यैव युक्तत्वात् । उत्पन्नचित्तशुद्धेः मुमुक्षोः विदुषश्च सर्वकर्मसंन्यास एवाधिकारो नान्यत्रेति प्रकरणार्थः ।

'प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥
यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतं शिखां त्यजेत् ॥'

इत्यादिश्रुतेः ॥ २१ ॥

आत्मनो ऽविक्रियत्वे विविदिषोर्विदुषश्च सर्वकर्मसंन्यासाधिकारः स्यादेव, तदभावात्पुरातनदेहहाने नूतनदेहोपादाने च सविक्रियत्वस्य ध्रौव्यात्तेन विद्वत्ताऽऽत्मसिद्धौ सर्वकर्मसंन्यासासिद्धिरिति तत्राह—

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरो ऽपराणि ।**

**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ॥ २२ ॥**

वासांसीति । यथा कश्चिल्लौकिको नरो जीर्णानि वासांसि विहाय नवानि सुदृढानि वासांसि गृह्णाति, पुरातनवस्त्रपरित्यागे नूतनवस्त्रस्वीकारे च विकाराभावत एकरूपेणावतिष्ठते, तथैव देही. जीर्णानि वयोहानिं गतानि शरीराणि विहाय नवानि शरीराणि संयाति गृह्णाति, पुरातन-देहपरित्यागे नूतनदेहस्वीकारे चात्मा अविक्रिय एवावतिष्ठत इत्येवं जानतो विदुषस्तु शोकस्य चायाः संभवात् । अतः सर्वकर्मसंन्यासाधिकारो विदुषो निरङ्कुशः स्यादित्यर्थः ॥ २२ ॥

यदुक्तमात्मनो ऽविक्रियत्वं तन्न संभवति, पृथिव्यादिभूतचतुष्टय-प्रयुक्तविकाराणामनिवार्यत्वादिति, तत्राह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**

नैनमिति । अस्त्रादीनां द्वैधीकरणसामर्थ्याच्चात्मानं तथा कुर्वन्तीति तत्राह—नेति । एनं प्रकृतमात्मानं पार्थिवविकाराः अस्त्रा-दीनि शस्त्राणि न छिन्दन्ति नावयवविभागं कुर्वन्ति, निरवयवत्वात् । अग्नेः सर्वदग्धृत्वसामर्थ्यादात्मानमपि स दहेदिति तत्राह—नेति । तथा एनं प्रकृतमात्मानं पावको ऽग्निः न दहति, अमूर्तत्वात् । अपां क्लेदनसामर्थ्या-दात्मानं ताः क्लेदयेयुरिति तत्राह—नेति । आपश्चैनं न क्लेदयन्ति संधिबन्ध-विश्लेषणं न कुर्वन्ति, भूतभौतिकजातिरूपत्वात् । मारुतस्य सर्वशोषण-सामर्थ्यादात्मानमपि स शोषयेदिति तत्राह—नेति । मारुतो ऽप्येनं न शोषयति, स्नेहगुणरहितत्वात् ॥ २३ ॥

आत्मनो ऽविक्रियत्वे हेतुमुपन्यस्यति—

**अच्छेद्यो ऽयमदाह्यो ऽयमक्लेद्यो ऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलो ऽयं सनातनः ॥ २४ ॥**

अच्छेद्य इति । अस्मत्प्रत्ययालम्बनं प्रकृतो ऽयमात्मा अच्छेद्यः, निरवयवत्वे सति नित्यत्वात् । अयमदाह्य, नित्यत्वे सति सर्वगतत्वात् । अयमक्लेद्य, सर्वगतत्वे सति स्थाणुवत् स्थिरस्वभावत्वात् । अयमशोष्य एव च, स्थाणुत्वे सति पूर्वरूपापरित्यागेनाचलस्वभावत्वात् । अयमात्मा सनातन, अचलत्वे सति कारणान्तरानिष्पन्नत्वात् । यतो ऽन्योन्यनाशकारणानि शस्त्राग्निजलवाय्वात्मकानि आत्मानं नाशयितुं नोत्सहन्ते, अतो ऽयमात्मैव नित्य, नित्यत्वात्सर्वगत, सर्वगतत्वात्स्थाणु, स्थाणुत्वादचल, अचलत्वात्सनातन, सनातनत्वादेवोक्तानुक्तविकारपूगरहित इत्यर्थः । अच्छेद्यो ऽयमित्यस्मिन् श्लोके नित्यत्वं सर्वगतत्वं स्थाणुत्वं सनातनत्वं च आत्मन प्रतिपादितमपि परमकारुणिको भगवानात्मनो दुर्विज्ञेयत्वं मन्यमान सन् यथा यथा व्यावृत्तसंसृतिर्बुद्धिरनुवृत्ते ब्रह्मण्यवतार्यते तथा तथा भूयो भूय प्रसङ्गमापाद्यापाद्य प्रतिपादितमर्थमेव कचित्तच्चिच्छब्दान्तरेणार्थान्तरेण च यतो निरूपितवानत कुत्राप्यस्मिन् शास्त्रे न पुनरुक्तिदोषावकाश इति भाव ॥ २४ ॥

पूर्वोक्तप्रत्यगात्मन परमात्माभेदेन सर्वातीतत्वमाह—

**अव्यक्तो ऽयमचिन्त्यो ऽयमविकार्यो ऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

अव्यक्त इति । तूलान्त करणाविद्याविजृम्भितस्य जाग्रदादिविमोक्षान्तस्य संसारस्य व्यक्तत्वात् तद्विपरीतत्वेन तद्भावाभावप्रकाशकचिद्धातोरव्यक्त-

त्वादव्यक्तो ऽयमात्मा, स्वभावकवलितत्तूलाविद्यातत्कार्यत्वात् । मूलाविद्याविजृम्भितेक्षणादिप्रवेशान्तसंसारस्य श्रुत्याचार्यानुगृहीतबुद्धिमचिन्त्यत्वात् तन्मूलाविद्याऽध्यारोपापवादाधिष्ठानत्वेन तत्तत्साक्षित्वेनापि तत्तत्साक्ष्यक्तत्तदन्तरत्वेन न वर्तमानस्य परमात्मनो ऽचिन्त्यत्वात् अचिन्त्यो ऽयमात्मा, स्वानन्दकवलितमूलाविद्यातत्कार्यत्वात् । व्यष्टिसमष्ट्यात्मकाविद्याद्वयविजृम्भितजीवेशतत्कार्यविभ्रमाणां विकार्यत्वाद्युगपदविद्याद्वयाध्यारोपापवाददोषाद्गुप्रत्ययपरविभागाश्रयसत्तासामान्यब्रह्मणो ऽविकार्यत्वादविकार्यो ऽयमात्मेऽयुच्यते, महासत्ताकवलितसकार्याविद्याद्वयतद्धेतुमायाकत्वात् । यस्मादेवं तस्मात् अव्यक्तो ऽयमित्यादिविशेषणविशिष्टमेनं प्रत्यगभिन्नं परमात्मानं विदित्वा मिथ्याभीष्मादिशरीरोद्देशेन नानुशोचितुमर्हसि । भीष्मादिशरीराणां व्यावृत्तत्वेन मिथ्यात्वात् भीष्मादीनामनुवृत्तत्वेन सत्यत्वाद्व्यावृत्तानुवृत्तयोस्तेजस्तिमिरयोरिव युगपदेकत्रावस्थानासंभवादनुवृत्तव्यतिरेकेण व्यावृत्ताभावात् सर्वमनुवृत्तं ब्रह्माहमस्मीति निश्चयवतां न शोकावकाश इति भावः ॥ २५ ॥

एवंभूतब्रह्मात्मैक्यश्रवणं कृत्वा ऽपि तदनवधारणतो देहात्मदृष्टिमर्जुनमालक्ष्य पुनः पूर्वोक्तज्ञाननिष्ठायामवतारयितुं तद्बुद्धिमनुसृत्य देहात्मनोरैक्यं यदि मन्यसे तथा ऽपि शोको न कार्य इत्याह—

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथा ऽपि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥**

अथ चेति । हे महाबाहो! देहादिसंघातस्वरूपत्वेन नित्यमेनं प्रकृतमात्मानं देहे जाते मृते वा जातं मृतं वा ऽथ च मन्यसे । अथ-चशब्दो यद्यर्थः । पुण्यपापतत्फलयोरात्मगामित्वेन मूढदृष्ट्या जन्ममरणसत्त्वे ऽपि

तयोरवश्यंभावित्वेनानिवार्यत्वात् । तथा ऽप्येवं पूर्ववन्नानुशोचितुमर्हसि, न योग्यो भवसीत्यर्थः ॥ २६ ॥

शोकस्याकर्तव्यत्वे हेत्वन्तरमाह—

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

जातस्येति । हि यस्मादारब्धकर्मणा जातस्य जन्तोः मृत्युर्ध्रुवः प्रारब्धक्षयात् । मृतस्य च पुनः संचितकर्मोद्भूतारब्धकर्मतो जन्म ध्रुवम् । जन्मवतो नाशो नाशवतो जन्मेत्येवमवश्यंभाविनौ जन्मनाशौ भवतः । तस्मादपरिहार्येऽर्थे न त्वं विवेकी शोचितुमर्हसि ॥ २७ ॥

देहादेरदृष्टदृष्टनष्टत्वस्वभावं पर्यालोच्यापि शोको न कार्य इत्याह—

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

अव्यक्तादीनीति । हे भारत! अव्यक्तमदर्शनं प्रधानमेव आदिः कारणं येषां तानि भूतानि शरीराणि भवन्ति, कारणात्मना स्थितानामेवोत्पत्तिदर्शनात् । करणग्राह्यत्वाद् व्यक्तम्, जनिमृत्योरन्तरालस्थितिः मध्यम्, व्यक्तमेव मध्यं येषां तानि व्यक्तमध्यानि । पुनरव्यक्तमेव निधनं निलयो येषां तानि । तत्रैव पर्यवसन्नानि भूतानि भवन्तीत्यव्यक्तनिधनान्येव । मरणादूर्ध्वमदर्शनतां प्रतिपद्यन्त इत्यर्थः,

'अदर्शनादिहायातो मध्ये दर्शनतां गत. ।
पुनश्चादर्शनं प्रासः सर्वो लोको न संशयः ॥'

इति स्मृतिदर्शनात्। एवमदृश्यदृश्यनश्वदेहेन्द्रियादिसंघातेषु भूतेषु का परिदेवना? कुत प्रविलाप इत्यर्थः ॥ २८ ॥

तर्हि शास्त्रज्ञा अपि कथं शोचन्तीत्याकाङ्क्षायां निर्विकल्पक-प्रत्यगभिन्नब्रह्मप्रबोधाभावादिति मनसि निधायात्मनो दुर्विज्ञेयत्वमाह—

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वा ऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

आश्चर्यवदिति। तत्र प्रथमपादेनात्मदर्शनस्य दुर्लभत्वं दर्शयति—आश्चर्यवदिति। कश्चिदधिकारी पुरुष श्रुत्याचार्योपदेशात सच्चिदानन्द-स्वभावत्वेन सर्वगतमेन प्रत्यगभिन्न परमात्मानं स्वात्मभूतमप्यैन्द्रजालिकर-चितपश्यद्विस्मयास्पदमायादिकल्पजालमिव आश्चर्यवददृष्टमिव पश्यति, असं-भावनाकलिलदृष्टित्वात्। द्वितीयपादत तदीयवदनस्य दुर्लभत्व स्फुटयति—आश्चर्यवदिति। तथा अन्यो ऽप्यनमात्मानमाश्चर्यवद्वदति च। तृतीय-पादत तदीयश्रवणस्य दुर्लभत्व स्फोरयति—आश्चर्यवदिति। तथा एनमा-त्मानमाश्चर्यवदन्य शृणोति। चतुर्थपादेन तदीयश्रवणवदनदर्शनसद्भावे ऽपि तदीयसाक्षात्कारस्यात्यन्तदुर्लभत्व विदग्धयति—श्रुत्वा ऽपीति। कश्चिदेन श्रुत्वा ऽप्युक्त्वा ऽपि दृष्ट्वा ऽपि यथावन्नैव वेद च विपरीतभावनाऽऽवृतदृष्टि-त्वात्। एवमनेकेषु सत्सु कश्चिदेवानन्तकोटिजन्मसुकृतपरिपाकवशाद्यथा-यच्छृणोति वदति साक्षात्करोति च। अतो दुर्विज्ञेय आत्मेत्यभिप्राय। तथा च श्रुति —

'श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा
आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥'[1]

इति॥ २९ ॥

एवमात्मनो दुर्विज्ञेयत्वमुक्त्वा ऽशोच्यत्वमुपसंहरति—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

देहीति । हे भारत! सर्वस्य प्राणिजातस्य प्रारब्धसद्भावासद्भावाभ्यां देहे जायमाने बध्यमाने ऽपि देही कूटस्थो ऽयमात्मा अवध्यो भवति । तस्मादवध्यत्वहेतोः सर्वाणि भूतानि भीष्मादीन्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

आत्मनो नित्यत्वाभिप्रायेण शोकमोहयोरनवकाशता प्रतिपाद्य 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति यदुक्तं तदयुक्तम्, युद्धस्य क्षत्रियधर्मत्वेन शोकमोहौ न कार्यावित्याह—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

स्वधर्ममिति । स्वस्य क्षत्रियस्य धर्मः स्वधर्मः, तं युद्धमपि चावेक्ष्य युद्धात् विकम्पितुं चलितुं नार्हसि, युद्धस्य क्षत्रियधर्मत्वात् । 'न च श्रेयो

[1] कठ. २ ७.

ऽनुपश्यामि' इति यदुक्तं तत्राह—धर्म्यादिति। तच्च युद्धं स्वारिमण्डलविजयद्वारतः मजारंरक्षणात्मकधर्मार्थम्, धर्मादनपेतं धर्म्यम्। तस्मात् धर्म्याद्युद्धाच्छ्रेयो ऽन्यत्क्षत्रियस्य न विद्यते हि ॥ ३१ ॥

यथा सामान्याहिंसाशास्त्रतो यागीयपशुहिंसायाः प्रवलत्वेनावश्यकर्तव्यता चोदिता, तथा गुरुभ्रात्रादिहिंसारूपस्य युद्धस्य क्षत्रियधर्मत्वेन तत्रोपेक्षा न कार्येत्याह—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

यदृच्छयेति। हे पार्थ! यदृच्छया अप्रयत्नतश्चोपपन्नमपावृतमुद्घाटितकवाटं स्वर्गद्वारमीदृशं युद्धं ये लभन्ते क्षत्रियाः त एव सुखिनः सुखभोगिन इत्यर्थः ॥ ३२ ॥

'स्वजनं हि कथं हत्वा' इति यदुक्तं तदसाधु, स्वधर्मानुष्ठानात् स्वर्गदर्शनात् तदकरणे प्रत्यवायश्रवणात्, स्वधर्मानुष्ठानं कर्तव्यमेवेत्याह—

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।**
**ततः स्वधर्मं कीर्त्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

अथेति। अथ युद्धाकरणपक्षे, धर्मादनपेतं धर्म्यम् इमं संग्रामं न करिष्यसि चेत् ततः स्वधर्माकरणात् महादेवमहेन्द्रादिसमागमनिमित्तां कीर्त्तिं च हित्वा पापमवाप्स्यसि। 'स्वधर्मत्यागमात्रेण पातकी स्यात्' इति स्मृतेः ॥ ३३ ॥

न केवलं स्वधर्मकीर्त्योः परित्यागः, किं तु शिष्टगर्हणमपि स्यादित्याह—

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

अकीर्तिमिति । भूतानि सर्वे प्राणिनः अव्ययां शाश्वतीमकीर्तिं ते तव कथयिष्यन्ति । स्वरक्षणस्य श्रेयोहेतुत्वेन स्वमरणसंदेहाद्युद्धाकरणगताऽकीर्तिः सोढव्येति तत्राह—संभावितस्येति । शूराग्रगण्यो ऽयमर्जुन इति संभावितस्य शूरजनैः श्लाघितस्य तवाकीर्तिः मरणात् अतिरिच्यते । मरणादपि अकीर्तिः अधिकेत्यर्थः ॥ ३४ ॥

उक्ते ऽर्थे हेत्वन्तरमाह—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

भयादिति । येषां दुर्योधनादीनां शूरो ऽयमनेकगुणवानर्जुनः इति बहुमतो भूत्वा पुनस्त्वं लाघवं यास्यसि, महारथाः कर्णादयः त्वां भयात् रणादुपरतं मंस्यन्ते, न दययोपरतं चिन्तयिष्यन्तीत्यर्थः ॥ ३५ ॥

न केवलमेवं चिन्तयिष्यन्ति, त्वत्समक्षमवाच्यवादानपि वदिष्यन्तीत्याह—

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

अवाच्येति । तवाहिता शत्रव स्त्वत्सामर्थ्यं पराक्रमं निन्दन्त सन्तो बहूनवाच्यवादान् अवक्तव्यशब्दान् वदिष्यन्ति । भीष्मादिवधप्रयुक्तक्लेशात् स्वसामर्थ्यनिन्दा सोढुं शक्येति तत्राह—तत इति । ततः स्वनिन्दाप्रयुक्तदुःखात् दुःखतरं किमस्ति ? न किमपीत्यर्थः ॥ ३६ ॥

'यद्वा जयेम' इत्यादि यदुक्तं तत्राह—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हत इति । युद्धे कर्णादिभिः हतो वा स्वर्गसुखं प्राप्स्यसि कर्णादीन् जित्वा वा महीं भोक्ष्यसे । यस्मात् जयाजययोरपि तव लाभः तस्मात् जेष्यामि शत्रून्मरिष्यामि वेति कृतनिश्चयः सन् हे कौन्तेय ! युद्धाय स्वधर्मानुष्ठानायोत्तिष्ठ, मा ऽऽलस्यं कुर्वित्यर्थः ॥ ३७ ॥

'पापमेवाश्रयेदस्मान्' इति यदुक्तं तत्राह—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

सुखेति । इष्टविषयलाभजं सुखम् । अनिष्टविषयलाभजं दुःखम् । सुखं च दुःखं च सुखदुःखे समे कृत्वा तयोः कारणभूतौ शत्रुकोशादिप्राप्तिलाभश्च अलाभस्तद्विपर्ययश्च लाभालाभौ रागद्वेषनिमित्तौ, तथा तयोः कारणभूतौ स्वेन परपरिभवो जयश्चाजयः तद्विपर्ययश्च जयाजयौ समौ कृत्वेत्यर्थः । एतेषां कारणं सर्वत्र हर्षविषादराहित्येन समत्वम् । ततः सर्वत्र समबुद्धितो युद्धाय युज्यस्व । यथा स्वधर्मपरित्यागपूर्वकं परधर्मानुष्ठा

नाप्यापमवाप्स्यसि, तथैवं फलेच्छां विहायेश्वरार्पणबुद्ध्या युद्धकर्म करोषि चेत् पापं नावाप्स्यसि । किं तु स्वधर्मानुष्ठानतः शुद्धान्तःकरणो भूत्वा ज्ञानद्वारा मोक्षमवाप्स्यसीति भावः ॥ ३८ ॥

पूर्वोक्तोपेयभूतप्रत्यक्परैक्यज्ञानयोगमुपसंहरंस्तदुपायभूतं कर्मयोगं प्रस्तौति—

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

एषेति । हे पार्थ! ब्रह्मात्मतत्त्वं सम्यक् ख्यायते प्रकाश्यत इति संख्या, प्रत्यक्परैक्यविषयकविज्ञानं सांख्यम्; तस्मिन्सांख्ये स्वाज्ञानतत्कार्यनिवर्तकप्रत्यगभिन्नब्रह्मापरोक्षात्मिकैषा स्वज्ञानरूपिणी बुद्धिः ते तुभ्यम् अभिहिता आख्याता । सेयं सांख्यबुद्धिनिष्ठा स्वफलप्राप्तौ न कर्मयोगबुद्धिमपेक्षते । स्वाज्ञानात्मतस्य मोहस्य स्वज्ञानं विना निवृत्त्यसंभवात् ध्रौव्यात् 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । तथाऽपि सत्त्वचित्तशुद्ध्यभावात् न सा बुद्धिः सफला भवति । तद्बुद्धिप्रतिबन्धकमशुद्धचित्तत्वमित्यर्थः । यत एवमतः चित्तशुद्ध्यर्थं पूर्वोक्तबुद्धिसाधनीभूते कर्मयोगे फलेच्छात्यागपूर्वकमीश्वराराधनरूपामिमां वक्ष्यमाणलक्षणां बुद्धिं शृणु । अर्जुनप्ररोचनाय कर्मानुष्ठानविषयां बुद्धिं स्तौति—ययेति । यया फलाकाङ्क्षाविकलया परमेश्वरार्पणकृतनित्यकर्मानुष्ठानलक्षणया बुद्ध्या युक्तः सन् ईश्वरप्रसादलब्धापरोक्षज्ञानद्वारा धर्माधर्मसंबन्धः कर्मबन्धः, तं कर्मबन्धं प्रहास्यसि । सांख्यबुद्धिनिष्ठो भूत्वा विमोक्ष्यस इत्यर्थः ॥ ३९ ॥

कृष्यादिवत्कर्मणां विघ्नबाहुल्येनानियतफलत्वात्. कर्मानुष्ठानकर्मबन्धयोः विरोधाभावात् कर्मानुष्ठानमकिंचित्करमिति तत्राह—

**नेहाभिक्रमनाशो ऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

नेति । इह निष्कामतया ऽनुष्ठिते कर्मयोगे ऽभिक्रमः उपक्रमः, तस्य नाशः निष्फलत्वं नास्ति, फलाभिसंधिविकलत्वात् । अभिक्रमनाशाभावे ऽपि किंचिद्वैगुण्यात्प्रत्यवायः स्यादिति तत्राह—न विद्यत इति । कामिनो विगुणं कर्म फलोपधायकं न भवत्येव । तद्विपरीतस्य फलाभिसंधिविकलत्वेन स्वानुष्ठिते कर्मणि किंचिद्वैगुण्यपदं गते ऽपि प्रत्यवायात्मको दोषो न विद्यते ।' प्रत्यवायाभावे ऽपि जन्मादिभयत्राणं कथं स्यादिति तत्राह—त्रायत इति । ईश्वरप्रसादार्थं निष्कामतया ऽनुष्ठितस्यास्य धर्मस्य स्वल्पमप्युपक्रममात्रमपि चित्तशुद्धिसम्यग्ज्ञानद्वारा महतो भयात् जन्ममृतिप्रदात्कर्मबन्धात् त्रायते रक्षतीत्यर्थः । कृषिवाणिज्यस्थानीयकाम्यकर्मवद्वैगुण्याद्वैफल्यमस्य न भवति । निष्कामकर्मणामुपात्तदुरितक्षयद्वारा चित्तशुद्धिहेतुत्वात्

'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथा ऽऽदर्शे स्वमात्मानं पश्यत्यात्मानमात्मनि ॥'

इति स्मृत्यनुरोधेन विशुद्धचित्तस्य ज्ञानसंभवात् ज्ञानद्वारा कर्मबन्धनिरासकत्वान्नाकिंचित्करतेति भावः ॥ ४० ॥

भगवदुक्तबुद्धिद्वयातिरिक्तानां बुद्धीनां विद्यमानत्वात्कथं बुद्धिद्वयमेव भगवतोपदिष्टमिति तत्राह—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयो ऽव्यवसायिनाम् ॥ ४१ ॥**

व्यवसायात्मिकेति । सत्कर्म कुर्वन्तीति कुरवः; तद्वंशे जनित्वा स्वयमपि सत्कर्म कुर्वतेऽपामानन्दकरत्वात् हे कुरुनन्दन ! इह श्रेयोमार्गे कुबुद्धिकल्पितकाणादादिशास्त्रसिद्धद्वैतसिद्धान्तगोचरशाखास्थानीय-वृत्तिसहस्रसुदृढबुद्धिपटलप्यासात्सर्ववेदान्तसिद्धं प्रत्यगभिन्नं ब्रह्मैवास्मीति व्यवसायात्मिका बुद्धिरेकैव । न च मात्र्यबुद्ध्यतिरिक्तयोगबुद्धिसत्त्वात्कथमेकैवेति वाच्यम्, योगबुद्धेस्तदुपायत्वात् । सात्र्यबुद्ध्युपायभूतनिष्कामकर्मानुष्ठानसहकृतभगवद्भक्त्यैव तरिष्यामीति वा निश्चयात्मिका बुद्धिरेकैव, उपायोपेययोरत्त्वानैकत्वव्याघात इत्यर्थः । एवं व्यवसायिना बुद्धेरेकत्वमुक्त्वा तद्विपरीतानामव्यवसायिना बुद्धेरनेकत्वं प्रपञ्चयति—बहुशाखा इति । कामिनामव्यवसायिना या विपरीता बुद्धयः तासां बहुशाखास्थानीयवृत्तिपटलभेदप्रचारवशाद्बुद्धिजृम्भित संसारो ऽनन्तो ऽनुपरतो भवति । पुनः पूर्वोक्तव्यवसायात्मकबुद्ध्या ऽनन्तभेदबुद्धिकल्पित संसारो ऽप्युपरमते । ब्रह्मबुद्धे कुतो बहुशाखत्वमिति चेत्; एकैकां बुद्धिं प्रति शाखाभेदो ऽवान्तरवृत्तिविशेष । ता इमा बुद्धयो बहुशाखास्थानीया वृत्तयो यासा ता । बहुशाखाश्च प्रतिशाखाभेदेनानन्ताश्च भवन्ति । कामिबुद्धीनां शाखाभेदेनानन्त्यद्योतको हिशब्द । सम्यग्ज्ञानमन्तरेण निवृत्तिराहित्य बुद्धेरानन्त्यं सम्यग्ज्ञाने सत्यन्तरत्त्वादित्यर्थ ॥ ४१ ॥

अव्यवसायिगोचरबुद्धिपटलसकाशात्सात्र्ययोगबुद्धि प्रामाणिकी चेद्व्यवसायिनो ऽपि स्वाधिष्ठेयां बुद्धिं विहाय तामेव किमिति न भजन्तीति तत्राह—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

यामिति। हे पार्थ! अविपश्चितो ऽव्यवसायिन कामिन 'अक्षय्य ह वै चातुर्मास्ययाजिन सुकृत भवति', 'अपाम सोमममृता अभूम' इत्यादिवहर्थ वादफलसाधनप्रकाशकवेदवादरता भूत्वा स्वर्गादिसुखात्परमीश्वरसाक्षात्कारसुख नास्तीति वदनशीला सन्तो या पुष्पिता निष्फलपुष्पसहितकिंशुकवृक्षवदा पातरमणीयामिमा वक्ष्यमाणलक्षणा कर्मकाण्डात्मिका वाच प्रवदन्ति, तेषा मव्यवसायिना व्यवसायात्मिका बुद्धिर्न विधीयत इत्युत्तरेणान्वय ॥ ४२ ॥

क ते ऽव्यवसायिन इति तत्राह—

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

कामात्मान इति। स्वर्गपशुवित्तादिविषयक कामो ऽभिलाष आत्मा स्वभावो येषा ते कामात्मान। तृतीयपुरुषार्थवृत्तदृष्टित्वात्स्वर्ग एव पर परमपुरुषार्थे येषा ते स्वर्गपरा। कृत्स्नवेदवेदान्ततात्पर्यविकलत्वात् भोग स्रक्चन्दनादि, ऐश्वर्य राज्यधनपशुपुत्रादि, भोगश्चैश्वर्य च भोगैश्वर्ये, तयो प्राप्तिरेव गति, ता भोगैश्वर्यगतिं प्रति। कर्मण फल कर्मफलम्, जन्मैव कर्मफल तत्प्रददातीति जन्मकर्मफलप्रदा, ताम्। अत एव यागदानहोमात्मक क्रियाणा विशेषा स्वर्गपशुपुत्रादिसाधनीभूता ज्योतिष्टोमादय बाहुल्येन यया वाचा प्रकाश्यन्ते सा क्रियाविशेषबहुला, ता वाच य कामात्मान स्वर्गपरा मूढा वदन्ति, तेषा व्यवसायात्मिका बुद्धि स्वप्ने ऽपि नास्तीत्यर्थ ॥ ४३ ॥

केषा पुन व्यवसायात्मिका बुद्धिर्नास्तीति, उच्यते—

**भोगैश्वर्यप्रसक्तानां तया ऽपहृतचेतसाम्।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

भोगेति। तया क्रियाविशेषबहुलया वाचा अपहृतं कबलितं चेतो येषां तेषां वेदवादाभृतप्रज्ञत्वात्। इहामुत्र च भोक्तव्यभोगैश्वर्यहेतुत्वविकल्प-साधनानुष्ठानेनापि भोक्तव्यो भोग ऐश्वर्यं चेति भोगैश्वर्ययोरेव प्रसक्तानां तत्प्रणयवतामव्यवसायित्वेन पुरुषाधमानां निष्कामकर्मयोगोपेयभूते सांख्ये तदुपायभूते निष्कामकर्मयोगे वा प्रत्यगभिन्नब्रह्मगोचरत्वेन व्यवसायात्मिका बुद्धिः समाधीयते अस्मिन्सर्वमिति समाधिः अन्तःकरणम्, तस्मिन् समाधौ न विधीयते नोपलभ्यत इत्यर्थः ॥ ४४ ॥

स्वर्गादेः परमपुरुषार्थत्वाभावे स्वर्गसाधनीभूतानि कर्माणि किमिति वेदे विधीयन्त इति तत्राह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।**
**निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

त्रैगुण्येति। हे अर्जुन! पुण्यपापमिश्रकर्मतत्फलहेतूनां सत्त्वादयस्त्रयो गुणा एव त्रैगुण्यमाद्यन्तवत्संसार एव विषयो येषां वेदानां ते त्रैगुण्यविषयाः कामिविषया कर्मकाण्डभागा वेदाः, पुण्यपापतन्मिश्रकर्मतत्फलप्रकाशकत्वात्। तदनुरोधेन फलार्थिनां कामिनां तत्तत्कामोचितकर्मानुष्ठानद्वारा तत्फलभूतस्य जननमरणात्मकस्य संसारस्य ध्रौव्यात्, तेषां व्यवसायात्मिका बुद्धिः विरलतापदमेव भजेदित्यर्थः। तर्हि संसारनिवर्तकव्यवसायात्मकबुद्धिसिद्धये किं कर्तव्यमिति तत्राह—निस्त्रैगुण्यो भवेति। नित्यसत्त्वस्थो भवेति वाक्यशेषविरोधः स्यादित्यपेक्षाया कर्मफलविषयककामसंकल्पराहित्यमेव निस्त्रैगुण्यशब्देन विवक्ष्यते। मनःसंकल्पतत्कार्यकामतत्कार्यकर्मणां त्रैगुण्यप्रभवत्वात् न गुणत्रयातीतत्वं येन वाक्यशेषविरोधः स्यात्। परस्परविरोधित्वेन विद्यमानद्वंद्वाक्रान्तस्य कर्मफलविषयककामसंकल्पवैकल्यलक्षणा निस्त्रैगुण्यता

कथमिति तत्राह—निर्द्वंद्व इति । शीतोष्णसुखदुःखादिद्वन्द्वरहितो भव । तत्र हर्षविषादौ मा कुर्वित्यर्थः । रजस्तमोगुणाभ्यामाक्रान्तविवेकस्य निर्द्वन्द्वता कुत इति तत्राह—नित्यसत्त्वस्थ इति । नित्यं सर्वदा रजस्तमोगुणसम्पर्का स्पृष्टविशुद्धसत्त्वगुणाश्रितो भव । योगक्षेमासक्तचेतसो नित्यसत्त्वस्थता कथं स्यादित्यत आह—निर्योगक्षेम इति । अप्राप्तप्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेमः, तयो योगक्षेमयो र्व्यापृतचित्तो मा भवेत्यर्थः । योगक्षेमासक्तचेतसः श्रेयःप्रतिबन्धकत्वान्निर्योगक्षेमतद्भावविनिर्गुण्यादिचतुर्विधसाधनानां प्रमादबाहुल्यात् कथमुक्तार्थसिद्धिरिति तत्राह—आत्मवानिति । परस्परहेतुहेतुमद्भावेनोक्ते निस्त्रैगुण्यादिपर्यायचतुष्टये ऽप्रमत्तता खल्वात्मवत्ता, तद्वान्भवेत्यर्थः । एवमुक्तरीत्या स्वधर्ममनुतिष्ठतस्तव मुमुक्षोरेष एव परमोपदेश इति भावः ॥ ४५ ॥

एवं त्वद्विहितेन परमोपदेशेन वेदोक्तकर्मफले ऽनपेक्षिते यदि तदा 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायानुरोधेन कर्मणां निष्फलात्मकत्वेनाकिंचित्करत्वात्तानि बुद्धिमता न कर्तव्यान्येवेति तत्राह—

**यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

यावानिति । उदकं पीयते ऽस्मिन्निति उदपानं वापीकूपादि, तस्मिन्नुदपाने स्वल्पोदके । एकत्र स्नानपानादेरसंभवात्तत्र तत्र परिभ्रमणे नैकत्र स्नानमेकत्र पानमन्यत्रान्यदिति विभागशो यावान् स्नानपानादिरूपो ऽर्थः प्रयोजनं भवति, तावान् सर्वो ऽप्यर्थः स्नानपानादिरेकत्र शुद्धोदसमुद्रे यथा ऽन्तर्भवति, परिच्छिन्नोदकानामपरिच्छिन्नोदकान्तर्भावात्, तथा सर्वेषु वेदेषु वेदोक्तकर्मसु यावान्स्वर्गपशुपुत्त्रसम्बन्धमयुक्तः सुखविशेषो भवति, तावान्ब्रह्मा

त्मकत्वेन विजानतो ब्राह्मणस्य सर्वकर्मसन्यासलक्षणब्रह्मनिष्ठामारूढस्य सुखे ऽन्तर्भवति । परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भूतत्वात् 'सर्वं तदभिसमेति यत्किंचित् प्रजा साधु कुर्वन्ति[1]', 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति[2]', 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यादि श्रुतिस्मृतिभ्य ईश्वराराधनलक्षणनिष्कामकर्मणामपरिच्छिन्नानन्दप्राप्त्युपायत्वात्प्रत्यगभिन्नब्रह्मनिष्ठाया प्राग्धर्मण्यधिकृतेन पुरुषेण तन्निष्ठाऽऽरोहाय कूपतटाकादिस्थानीयमपि कर्म कर्तव्यत्वप्रमाणात् नाकिंचित्करमिति भाव ॥४६॥

चित्तशुद्धिद्वारा ज्ञानसाधन कर्म विना तदुपेयभूतप्रत्यगभिन्नब्रह्मज्ञानमेवोपदेष्टव्यम्, तस्मै मदीय मन स्पृहयतीति तत्राह—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गो ऽस्त्वकर्मणि ॥ ४७ ॥**

कर्मणीति । प्रथमपादेनाविदितपरमार्थतत्त्वस्य कर्मण्यधिकार स्थापयति—कर्मणीति । ते तव नित्यादिकर्मण्येवाधिकार । अवधारणतो ज्ञाननिष्ठायामधिकाराभावो द्योत्यते । कर्म कुर्वतस्तत्फलस्पृहा स्यादित्यपेक्षाया द्वितीयपादेन तत्कर्मफलकामना निराकरोति— मेति । परमेश्वराराधनबुद्ध्या कर्म कुर्वत तव कदाचन कदाचिदपि कर्मानुष्ठानात्प्राक तत्काले तदनन्तरमपि श्रुतिस्मृत्युक्तस्वाश्रमोचितदेहेन्द्रियचेष्टारूपकर्मणा फल्गुतया लीयन्त इति फलानि तेष्वधिकारो ऽभिलाषो मा ऽस्तु । कर्मफलाभिलाषस्य बन्धहेतुत्वात् यथा भोजने कृते तत्फलभूता तृप्ति स्यात्, तथा कर्मणि कृते तत्फल स्यादेवेत्यत्र तृतीयपादेन तत्फलप्राप्तिविभ्रम मार्जयति—मेति ।

[1] छा ४ १ ४
[2] बृ ४ ३ ३२

भोजन विना प्राणधारणासंभवात्प्राणधारणमपि ज्ञानहेतुत्वेन तदर्थं भोजन विहितम् । तत्र तृप्त्यर्थम्, तेनैव तृष्णाया विषयव्याप्रारोपरतिर्न स्यात् । यत एव मतो ज्ञानसाधनीभूतदेहधारणार्थमेव भोजनम् । कर्मफलस्पृहाऽभावे ऽपि प्राण धारणस्य संभवात्, कर्मफल जन्म, तद्धेतु अतस्मिन् तद्भाव यदा त कर्म फलसङ्ग स्यात् तदा कर्मफलप्राप्त्याकाङ्क्षानावृतो भवसि । काम्यकर्मणा जन्महेतु त्वात् मा कर्मफलहेतुर्भू कर्मफलतृष्णाहेत्वज्ञानावृतो मा भवेत्यर्थ । करिष्य माणस्य कर्मण फलाभावे तदकरणमेव श्रेय इत्यादिप्रेक्षया चतुर्थपादेन तद करण दोष प्रकटयति—मेति । निष्फलानि कर्माणीति मोहवशादकर्मणि कर्माकरण सङ्ग प्रीति यस्य मा ऽस्तु । चित्तशुद्ध्यर्थमनुष्ठिताना निष्काम कर्मणा ज्ञानद्वारा मुक्तिहेतुत्वात्तदकरण प्रत्यवायश्रवणादिति भाव ॥ ४७ ॥

यत एवमतो वक्ष्यमाणोपायमवष्टभ्य क्लेशात्मकान्यपि कर्माणि विहि तत्वात्कर्तव्यानीत्याह—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥४८॥**

योगस्थ इति । हे धनजय ! योग परमेश्वरनिष्ठा, तत्र स्थित सन् स्वाश्रमोचितवेदोक्तकर्माणि कुरु निर्वर्तयेत्यर्थ । तत्र सङ्ग कर्तृकारकक्रियाफला भिनिवेशम् ईश्वरस्त्वनेन कर्मणा तुष्यत्विति वा सङ्ग त्यक्त्वा कर्म कार्यमित्यर्थ । कीदृशो भूत्वा तत्कार्यमिति तत्राह—सम इति । कयोरिति तत्राह—सिद्ध्य सिद्ध्योरिति । परमेश्वराराधनलक्षणनिष्कामकर्मानुष्ठानत चित्तशुद्धिद्वारा ज्ञानप्राप्तिलक्षणा सिद्धि, तद्विपर्ययोत्था ऽसिद्धि, तयो सिद्ध्यसिद्ध्यो समो भूत्वा वेदोक्तकर्माणि कुर्वित्यर्थ । को ऽसौ योगस्तत्राह—समत्वमिति । ज्ञानप्राप्त्यप्राप्त्यो समत्व हर्षविषादराहित्यमेव योग उच्यते ॥ ४८ ॥

समत्वबुद्धियुक्तस्य कर्मण. चित्तशुद्धिहेतुत्वेन वरत्वं तद्विपरीतस्य कर्मण· तदभावादवरत्वमाह—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

दूरेणेति। हे धनंजय! सिद्ध्यसिद्धिसमत्वबुद्धियुक्तात्कर्मणः कर्मफलार्थिभि क्रियमाणं काम्यं कर्म दूरेणात्यन्तं निकृष्टत्वादवरं हि' यत एवमतो योगबुद्धौ तदुपेयसांख्यबुद्धौ तद्गोचरत्वेन सर्वशरण्ये परमेश्वरे वा अभयप्राप्तिकारणं शरणमन्विच्छ। यस्मादवर काम्यं कर्म कुर्वाणा कामिन· परमपुरुषार्थविफला भवन्ति फलहेत्वज्ञानावृतदृष्टित्वात्, तस्मात् फलहेतव· कृपणा भवन्ति, 'यो वा एतदक्षर गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति स कृपण'[1] इति श्रुते ॥ ४९ ॥

समत्वबुद्धियोगमवष्टभ्य स्वधर्ममनुतिष्ठत पुण्यपापास्पर्शनसांख्यपदारोहाय तदुपायस्य कर्मणो ऽवश्यकर्तव्यता द्रढयति—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**

बुद्धीति। सिद्ध्यसिद्ध्यो समत्वबुद्धियुक्तो योगी सुष्ठु कृतं कर्म सुकृतं स्वर्गादिप्रापकत्वात्, दुष्ट कृत दुष्कृतं निरयप्रापकत्वात्, तयोरपि मुमुक्षोर्बन्धहेतुत्वेन ते उभ सुकृतदुष्कृते परमेश्वरप्रसादलब्धज्ञानादिहैव जन्मनि जहाति त्यजति। यस्मादेवप्रभाववान् समत्वबुद्धियोगो भवति। तस्मात् स्वबन्धहेतुसुकृतदुष्कृतप्रहाणाय समत्वबुद्धियोगाय युज्यस्व। यत सिद्ध्य-

[1] बृ ३ ८ १०

सिद्ध्यो समत्वबुद्धियोग कर्मसु धर्माधर्मास्येषु कौशलम्, स्वतो बन्धहेतूनामपि कर्मणामीश्वराराधनलक्षणनिष्कामप्रवृत्तितो मोक्षप्रापकसामर्थ्य विपरीतबुद्धिनिवर्तकत्वात् । अत सदा योगयुक्तो भवेत्यर्थ ॥ ५० ॥

पूर्वश्लोकचतुर्थपादोक्तार्थाविष्करणाय कर्मणो मोक्षसाधनत्वं विशिनष्टि—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

कर्मजमिति । बुद्धि समत्वबुद्धि, तया युक्ता सर्वसाम्यब्रह्मभावारूढा मनस्तद्वृत्तिने प्रेरकत्वात् मनीषा बुद्धि ज्ञानं येषा ते मनीषिण· ज्ञानिन इत्यर्थ । जन्मैव बन्ध, तेन विमुक्ता देहादावात्मत्वात्मीयत्वाभिमानविकला जीवन्मुक्ता सन्त । कर्मभ्यो जातं कर्मज फल्गुत्वेन लीयत इति फल देवतिर्यगादिशरीरप्राप्तिलक्षणं निष्कामकर्मानुष्ठानत प्राप्तचित्तशुद्धिलब्धज्ञानबलेन त्यक्त्वा अनामयं निरुपद्रवं जीवन्मुक्तपूर्गै पद्यते गम्यत इति पदं विदेहकैवल्य निरायासा गच्छन्ति । विरूपसर्वाभिमानविलयलक्षणविदेहमुक्तिभाजो भवन्तीति हिशब्दार्थ ॥ ५१ ॥

कदा तत्पदप्राप्तिसाधन भवतीत्यपेक्षायामाह— यदेति द्वाभ्याम् ।

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

यदेति । यदा यस्मिन्काले ज्ञानपरिपाकवत ते तव बुद्धिरन्तकरण देहेन्द्रियादावहममाभिमानरूप मोहकलिलमतस्मिंस्तद्भावारूढमूलं

कालुष्यं व्यतितरिष्यति अतिक्रमिष्यति, कामादिवृत्तिकलिता धीर्न भवि-ष्यतीत्यर्थः। तदा तस्मिन्काले अध्यात्मशास्त्रातिरिक्तस्य श्रोतव्यस्य श्रुतस्य च निर्वेदं वैराग्यं गन्तासि। तयोरनुपादेयत्वेन तद्व्यवसायं न करिष्य-सीत्यर्थः॥ ५२॥

अतद्भावविरागतः तद्भावः कदा मे भविष्यतीति तत्राह—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥ ५३॥**

श्रुतीति। वैदिकलौकिकानुकूलानेकसाध्यसाधनप्रवृत्तिनिवृत्तिप्रकार-कश्रुतिभिः वेदवाक्यश्रवणैः पुरा विप्रतिपन्ना विक्षिप्ता बुद्धिः ते तव यदा यस्मिन्काले विक्षेपद्वयविकलत्वात् निश्चला संशयविपर्यासहेतुकाम-संकल्परहितत्वादचला सती, समाधीयते ऽस्मिन् स्वाज्ञानतत्कार्यजातमिति समाधिरन्तःकरणम्, तद्भावाभावप्रकाशकः प्रत्यगात्मा वा; तस्मिन्समाधौ स्थास्यति स्थिरीभूता भविष्यति, तदा तस्मिन्काले विवेकवैराग्य-सत्कृतनिष्कामकर्मयोगप्राप्यं सांख्ययोगं तत्फलभूतं प्रत्यक्परचितोर्योगं वा अवाप्स्यसि॥ ५३॥

पूर्वश्लोके भगवदुक्तप्रश्नबीजावष्टम्भतः तत्त्वज्ञलक्षणं जिज्ञासुरर्जुन उवाच—

अर्जुन उवाच—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्॥ ५४॥**

स्थितप्रज्ञस्येति । हे केशव ! कलीकृतनानाभ्रान्तिविद्योतविकल्पपुगे समाधौ तिष्ठतीति समाधिस्थ तस्य, अहमेव ब्रह्म ब्रह्मैवाहमिति प्रत्यगभिन्ने ब्रह्मणि स्थिता ऽखण्डाकारवृत्तिलक्षणा प्रज्ञा यस्य तस्य स्थितप्रज्ञस्य अप्रति बद्धापरोक्षज्ञाननिष्ठस्य । भाष्यते ऽनयेति भाषा का ? किं वचनम् ? कथमसौ ज्ञानी परै भाष्यते ? केन लक्षणेनाय स्थितप्रज्ञ इत्युच्यत इत्यर्थ । श्रुत्या चार्यप्रसादत सप्राप्तदृढापरोक्षज्ञानत्वात् ब्रह्मात्मनि स्थितधी तद्भावारूढबुद्धि किं प्रभाषेत ? किं वदेत् ? किमासीत केन लक्षणेनाय वर्तेत ? किं व्रजेत ? केन प्रकारेण गच्छति ? आसन व्रजन वा कथमित्यर्थ ॥ ५४ ॥

अर्जुनप्रश्नानुरोधेन सिद्धसाधकलक्षण तत्साधनानि च प्रजहाती त्यारभ्य यावदध्यायपरिसमाप्ति वदन् प्रथमप्रश्नोत्तरमादौ श्रीभगवानुवाच— प्रजहातीति द्वाभ्याम् ।

श्रीभगवानुवाच—

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

प्रजहातीति । हे पार्थ ! परमसुखस्वरूपे परमात्मन्येवात्मना प्रत्य ग्रूपेण स्वेनैव बाह्यलाभनिरपेक्षतया तुष्ट प्रत्यगानन्दामिन्नपरमानन्द सलाभत सर्वत्राऽऽप्तप्रत्ययवानात्मारामो मुनि यदा यस्मिन्काले स्वान्त र्बाह्यविभागहेतुवृत्तिद्वयपरिणते मनसि गतान्मनोगतान् सर्वान् कामा नन्तर्बहिर्विलसितनानाविधाभिलाषान्प्रकर्षेण जहाति परित्यजति, तदा तस्यागकाले यथोक्तलक्षणे ब्रह्मणि स्थिता प्रज्ञा अखण्डाकारा वृत्तिर्यस्य सन्या सिन सो ऽय स्थितप्रज्ञ इत्युच्यते । 'ते देवा पुत्रैषणायाश्च वित्तैषणा याश्च लोकैषणायाश्च ससाधनाभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा

अयज्ञोपवीता अन्धा बधिरा मुग्धा क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्ता'[1] इत्यादिश्रुतेः ॥ ५५ ॥

एवंभावापन्नस्य स्थितप्रज्ञस्यापि कदाचित्समाधितो व्युत्थानसमये सुखदुःखरागद्वेषभयक्रोधादिवृत्तिसंभवात्तेन तदानीमस्थितप्रज्ञत्वात् स्थितप्रज्ञता कथमिति तत्राह—

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

दुःखेष्विति । समाधितः कादाचित्कव्युत्थानसमये ऽपि यदृच्छया समागतेष्वाध्यात्मिकादिदुःखेष्वनुद्विग्नमक्षुभितं मनो यस्य सो ऽनुद्विग्नमनाः, दुःखे प्राप्ते बलान्निगृह्यानुद्विग्नचित्तो भवतु, सुखेषु तु स्पृहा अनिवार्येति तत्राह — सुखेषु विगतस्पृह इति । यदृच्छासमाप्तविषयजनितेषु सुखेष्वपि विगता स्पृहा तृष्णा यस्य सो ऽयं विगतस्पृहः ; सुखदुःखविषयकस्पृहाऽभावे ऽपि रागभयक्रोधानामनिवार्यत्वात्कथमुक्तलक्षणा सिद्धिरिति तत्राह — वीतरागभयक्रोध इति । विषयाभिलाषो रागश्च द्वैतदर्शनजं भयं च कामापूरणसंजातः क्रोधश्च रागभयक्रोधा वीता यस्मात् सो ऽयं वीतरागभयक्रोधः, प्रत्यगभिन्नब्रह्मातिरेकेण विषयाभावात् न रागप्रसक्तिः । स्वस्यैवाद्वैतत्वान्न भयावकाशः । तथा च नित्यशान्तिस्वरूपत्वात् न क्रोधप्रसङ्गः । दुःखसुखरागभयक्रोधाद्यस्पृष्टब्रह्मात्मस्वरूपमननान्मुनिः सन्यासी प्रातिभासिकसुखदुःखादिवृत्तौ प्रादु-

[1] नृ उ ता ख, ६

र्भूतायामपि सामान्यजनवत्तद्वासमाप्य ब्रह्मण्येव स्थिता तद्भावापन्ना धी यस्य सो ऽय सर्वदा स्थितधी स्थितप्रज्ञ इत्युच्यते ॥ ५६ ॥

विदुषो ऽविदुष इव शुभाशुभप्राप्त्युत्हर्षविषादयोरवर्जनीयत्वात्स्थित प्रज्ञता कथमित्यत्र 'स्थितधी किं प्रभाषेत' इति द्वितीयप्रश्नोत्तरच्छलेन तच्छङ्का शिथिलयति—य इति त्रिभि ।

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

य इति । उक्तलक्षणो यो मुनि सर्वत्र स्वदेहेन्द्रियतत्सम्बन्धिशिष्य प्रशिष्यवर्गेषु तदितरेषु भक्तेष्वपि परेष्वविद्यमममाभिमानविरुद्धत्वादनभिस्नेह सन्, इहामुत्र च शोभनहेतु शुभ तद्विपरीतमशुभम्, स्वस्यानुकूल शुभ प्रतिकूलमशुभ च प्राप्यापि शुभलाभतो नाभिनन्दति न प्रशसति, अशुभला भतो न द्वेष्टि न निन्दति, किं तु केवलमुदासीन एव भाषते अविद्धिद्विलक्षण त्वात्, तस्य मुने प्रज्ञा ब्रह्मणि प्रतिष्ठिता । सदा तद्भावापन्नेत्यर्थ ॥५७॥

मुक्तस्यैव स्थितप्रज्ञता ऽस्तु इन्द्रियैरिन्द्रियार्थानभजतो मुमुक्षो स्थितप्रज्ञपदप्राप्ति कथमिति तत्राह—

**यदा संहरते चायं कूर्मो ऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

यदेति । यथा कूर्म कमठ सर्वश सर्वतो भयात् स्वान्यङ्गानि करचरणादीन्युपसहरते, तथा यो ऽय मुमुक्षु ज्ञानकर्मेन्द्रियाणि तत्तदिन्द्रि

यार्थेभ्यो विमुखतायाः स्थितप्रज्ञताहेतुत्वात् तद्विपर्यये तद्विपर्ययः स्यात् इति भिया यदा यस्मिन् काले,

'निन्दाया लोकवार्तायाः शब्दादेरात्मविस्मृतेः ।
कश्चिदवसरं दत्त्वा चिन्तयात्मानमात्मनि ॥'

इत्यादिश्रुत्यनुरोधेन ज्ञानकर्मेन्द्रियाणि तदर्थेभ्यः शब्दादिविषयेभ्यः संहरते । तत्निमहाभ्यासबलाद्यावदिन्द्रियाणामिन्द्रियार्थेभ्य उपरतिर्भवति, तावत्तावत्तस्य प्रज्ञा ब्रह्मणि प्रतिष्ठिता भवेत्, निःशेषं तत उपरमे सति तदा तस्मिन् काले तस्य योगिनः प्रज्ञा निरङ्कुशं ब्रह्मात्मनि प्रतिष्ठितेत्यर्थः । यत एवमतो मुमुक्षुणा स्वस्वरूपावस्थानलक्षणकैवल्यहेतुस्थितप्रज्ञतालाभाय सर्वदेन्द्रियार्थेभ्य इन्द्रियाणि विमुखीकर्तव्यान्येव । अथ स्थितप्रज्ञताया सिद्धायामिन्द्रियैरिन्द्रियार्थतेऽपि ब्रह्मात्माव्यतिरेकेण तानि स्वयमेव निवर्तन्त इत्यर्थः ॥ ५८ ॥

इन्द्रियैरिन्द्रियार्थाप्रवृत्तिः स्थितप्रज्ञस्य लक्षणमिति यदुक्तं तद्व्यभिचारि, रोगिणा जडानामातुराणामुपवासिना चेन्द्रियैरिन्द्रियार्थाप्रवृत्तेरविशेषादिति तत्राह—

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

विषया इति । इन्द्रियैरिन्द्रियार्थग्रहणमाहार, तद्विकलस्य निराहारस्य इन्द्रियैरिन्द्रियार्थग्रहणाशक्तस्य देहिनो देहाभिमानिनो ऽज्ञस्य रोगिणो जडस्य कार्यान्तरातुरस्यालसतो नियमतो वा ऽनश्नतो ज्ञानशून्यत्वेन क्लेशात्मकतपोयोगावष्टम्भेन केवलमौनमुपेयुषो वा पुरुषस्य विषयेषु रागो

रसो मधुरादिविलक्षणत्वात् रञ्जनात्मको रसः स्वेप्सितविषयाभिलाषः । रसवर्जं विषयस्पृहां विना विषयाः विषयोपलक्षितानि इन्द्रियाणि स्वार्थेभ्यो विनिवर्तन्ते । विषयग्रहणाशक्तितो विषयानुभवे निवृत्ते ऽपि विषयतृष्णा न निवर्तत इत्यभिप्रायः । तर्हि रसः केनोपायेन निवर्तते इति तत्राह—परमिति । अविद्याद्वयतत्कार्यातरं ब्रह्माहमस्मीति दृष्ट्वा साक्षात्कृत्य स्थितस्य स्थितप्रज्ञस्यास्य रसो विषयेच्छा ऽपि निवर्तते । यतः सम्यग्ज्ञानमन्तरेण न रसोच्छेदः स्यात्, अतो निर्वीजब्रह्मापरोक्षायेन्द्रियैरिन्द्रियार्थाग्रहणपूर्वकं स्थितप्रज्ञता संपादनीया । न च सम्यग्ज्ञानमन्तरेण रागानिवृत्ते रागिणस्तावत्सम्यग्ज्ञानानुत्पत्तेस्तयोरितरेतराश्रयता स्यादिति वाच्यम् । रागस्थूलसूक्ष्मबीजांशानां ज्ञानविज्ञानसम्यग्ज्ञाननाश्यत्वात् । परमेश्वराराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्धेरीयद्रागाभिभवो भवति । ततो वेदान्तश्रवणादौ श्रद्धा जायते । ततः साधनचतुष्टयसंपन्नो भूत्वा वेदान्तश्रवणे तदव्यापारसंन्यासपूर्वकं वेदान्तश्रवणं करोति । ततः श्रुत्याचार्यप्रसादेन केवलशास्त्रार्थज्ञानमुदेति । तावन्मात्रेण रागस्थूलांशो विलीयते । तेन श्रुत्याचार्यप्रसादलब्धं ज्ञानमनुभवारूढं सद्विज्ञानपदं भजति । तेन रागसूक्ष्मभागो विलीयते । ततः पूर्वोक्तं विज्ञानं संशयविपर्यासविरूपविलयपूर्वकं प्रत्यगभिन्नब्रह्मचरमसाक्षात्कारतामेत्य सम्यग्ज्ञानतापदं भजति । तेन रागबीजभागो ऽपि निःशेषं विलीयते । अत एवाह भगवान् 'रसो ऽप्यस्य परं दृष्ट्वा निवर्तते' इति । यत एवमतः सम्यग्ज्ञानतो रागनिवृत्तेर्न तयोरितरेतराश्रयतोत्यदोषावकाशः स्यादित्यर्थः ॥५९॥

एवं सम्यग्ज्ञानेन रागनिवृत्तिः स्थितप्रज्ञतायां सत्यां स्वार्थेभ्य इन्द्रियाणि स्वयमेव निवर्तन्ते; किं बहुलतरायाससाध्येनेन्द्रियनिग्रहेणेत्यपेक्षायां सम्यग्ज्ञानवतां स्वव्यतिरेकेणेन्द्रियेन्द्रियार्थतद्व्यवृत्तिनिवृत्तिनिग्रहादिव्यापाराभावप्रमाणाचेपामिन्द्रियाणि स्वयमेव निवर्तन्तां नाम । तद्विपरीतानां

साधकावस्थाऽऽरूढत्वेन सम्यग्ज्ञानप्राप्त्यत्यगभिन्नब्रह्मणि प्रज्ञाऽऽरोहाया-प्रमत्ततया बहुलतरप्रयत्नेनापि स्वार्थम्य इन्द्रियनिग्रहः कर्तव्य एवेति प्रतिपादयितुं किमासीतेति तृतीयप्रश्नस्योत्तरमाह—यततो इति द्वाभ्याम् ।

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

यतत इति । हे कौन्तेय! विशेषेहेतुं पराभावं विहाय तद्विपरीत-भ्रेयभावारोहणाय निश्चितबुद्धिर्विपश्चित्, तस्य विपश्चितः शास्त्रार्थज्ञानिनो विषयेषु भूयो भूयो दोषदर्शनपूर्वकमिन्द्रियनिग्रहाय यततो ऽपि श्रुत्याचार्य-प्रसादलब्धज्ञानसंस्कृतं मनो ऽन्त करणं प्रसभं बलात्प्रमथन्ति विक्षोभयन्तीति प्रमाथीनि प्रमथनशीलानि चक्षुरादीनीन्द्रियाणि हरन्ति । उक्तार्थप्रसिद्धि-द्योतको 'हिशब्द' ॥ ६० ॥

एव निग्रहासक्तमन्त करण प्रमथ्येन्द्रियाणि हरन्ति चेत् किं कर्तव्यमिति तत्राह—

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

तानीति । यानि प्रमथनशीलानि तानि सर्वाणि चक्षुरादीनीन्द्रियाणि तद्विषयदोषदर्शनत शनै शनैः सयम्य स्ववशीकृत्य गृहीतकरणग्रामत्वेन युक्तो योगी प्रत्यगभिन्नवासुदेवो ऽहमेव पर परायणं यस्य सो ऽय मत्परो-मद्भावारूढ सन्नासीत,

'नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।
य स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ॥'

इति स्मृतेः । एवमासीनस्य यस्य योगिनः अभ्यासपाटवेन चक्षुरादीनीन्द्रियाणि वशे वर्तन्ते तस्य प्रज्ञा ब्रह्मणि प्रतिष्ठितेत्यर्थः ॥ ६१ ॥

बाह्येन्द्रियनिग्रहस्यान्तरिन्द्रियनिग्रहपूर्वकत्वात्तदकुर्वाणाः पराभविष्यन्त इति निगमयति—ध्यायत इति द्वाभ्याम् ।

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधो ऽभिजायते ॥ ६२ ॥**

ध्यायत इति । विषयान् सुखदुःखसाधनत्वेन ध्यायतः संकल्पयतः पुंसः तेषु विषयेषु सङ्ग आसक्तिः उपजायते । तेन किं जायत इति तत्राह— काम इति । विषयसंकल्पसङ्गतः तद्विषयकः कामो ऽभिलाषः संजायते । कामतः किं स्यादिति तत्राह—क्रोध इति । येन केनचित् कुण्ठितात् कामात् क्रोधो ऽभिजायते ॥ ६२ ॥

ततः किमित्यत आह—

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

क्रोधादिति । क्रोधात्कर्तव्याकर्तव्यविवेकविकलः संमोहो भवति । साधुरप्यत एव क्रोधजसंमोहवशात् गुरूनप्याक्रोशति । तेन किं भवतीति तत्राह—स्मृतिविभ्रम इति । संमोहात् श्रुत्याचार्यप्रसादलब्धसर्ववेदान्तसिद्धान्ततात्पर्यार्थस्मृतिविभ्रमो भवति । स्मृतिभ्रंशे ऽपि बुद्धिः स्यादिति तत्राह—बुद्धिनाश इति । स्मृतिभ्रंशात् कर्तव्याकर्तव्यविवेककुशलबुद्धिनाशो भवति । यावद् बुद्धिः कार्याकार्यविवेककुशला भवति, तावदेव पुंसः

पुंस्त्वम् । अत एव बुद्धिनाशात्प्रणश्यतीत्युक्तम् । नाशो नाम परमपुरुषार्थच्युतिः । यतो विषयाभिध्यानं सर्वानर्थमूलं तत्प्रयत्नेनातो निराकर्तव्यमित्यर्थः । तथा च श्रुतिः —

'शब्दस्पर्शादयो ये ऽर्था अनर्था इव ते स्थिताः ।
येषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम् ॥' ॥ ६३ ॥

इन्द्रियाणां विषयप्रावण्यशीलत्वेन स्वार्थतो निरोद्धुमशक्यत्वाच्चञ्चलस्य दोषस्य दुर्निवारत्वेन स्थितप्रज्ञता कथमित्याकाङ्क्षायाम् 'व्रजेत किम्' इति चतुर्थप्रश्नस्योत्तरच्छलेन तच्छङ्कां व्युदस्यति—रागद्वेषेति द्वाभ्याम् ।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

रागद्वेषेति । इष्टविषये स्पृहा रागश्च तद्विपरीतविषये द्वेषश्च रागद्वेषौ; ताभ्यां वियुक्तैः पृथग्भूतैः, अत एव आत्मनो मनसो दासवद्वश्यैश्चक्षुरादिभिरिन्द्रियैः शरीरस्थितिमात्रप्रयोजनान्यथाऽनुपपत्त्या स्ववर्जनीयान्नपानादीन्विषयाश्चरन्नश्नन्, विधेयो वशीकृत आत्मा ऽन्तःकरणं यस्य सो ऽयं विधेयात्मा योगी प्रसादं चित्तस्वास्थ्यमधिगच्छति । ब्रह्मणि स्थिरचित्तो भवतीत्यर्थः ॥ ६४ ॥

एवं मनःप्रसादे किं स्यादिति तत्राह—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

प्रसाद इति । अस्य श्रवणाद्यनुष्ठानवतो यतेः मनःप्रसादे स्थैर्ये सति तद्विषये सत्यनिर्वाणमाध्यात्मिकादिसर्वदुःखानां हानिर्नाश उपजायते ।

एवं नि शेषमाध्यात्मिकदु खनाशो किं स्यादिति तत्राह—बुद्धि पर्यवतिष्ठत इति। हि यस्मात् कामसंकल्पादिदृष्टिसहस्राकुण्ठितत्वेन प्रसन्नं प्रत्यक्परचिदैक्यभावापन्नं चेतो यस्य तस्य प्रसन्नचेतसो यते, आशु शीघ्रं बुद्धि विजातीयप्रत्ययतिरस्कारपूर्वकं ब्रह्मैवाहमहमेव ब्रह्मेति सजातीयप्रत्ययप्रवाहफलीभूताखण्डाकारचरमवृत्ति प्रत्यक्परविभागासहसत्तासामान्यब्रह्मणि उपाधिविनिर्मुक्तघटाकाशमिव परि समन्तादवतिष्ठते। स्वमायाकबलितत्वाविद्यातत्कार्यजालविदेहकैवल्यरूपेणावतिष्ठत इत्यर्थ ॥ ६५ ॥

यतो रागद्वेषवियुक्तैरिन्द्रियै देहस्थितिमात्रप्रयोजनयदृच्छाप्राप्तान्नपानादिभोगानसक्ततया ऽश्नत प्रसन्नचेतसो यते कृतकृत्यता प्रतिपादिता खलु, अत कृतकृत्यताहेतवे मुमुक्षुभिरवश्यमप्रमादेनेन्द्रियद्वयनिग्रह कर्तव्य इति व्यतिरेकमुखेण कथयति—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६॥**

नास्तीति। अवशीकृतवाह्यान्तरिन्द्रियवर्गेणायुक्तस्य श्रुत्याचार्यप्रसादवियुक्तस्य मूढस्य ब्रह्माहमहमेव ब्रह्मेति ब्रह्मात्मविषया बुद्धिर्नास्ति। तादृशबुद्ध्यभावे ऽपि तद्विषयकभावना किं न स्यादिति तत्राह—न चेति। विक्षेपयुगलकलितचित्तत्वेन ब्रह्मात्मविषयकबुद्ध्यावयुक्तस्य निष्कलब्रह्मभावना तदुपायभूता सकलब्रह्मभावना वा स्वात्मत्वेन स्वमिथत्वेन वा न॰ चास्ति। एव भावनाद्वयाभावे ऽपि कालान्तरे परमशान्तिर्भवतीति तत्राह—न चेति। श्रुत्याचार्यप्रसादाद्वेदवेदान्तसिद्धान्ततात्पर्यविरुत्वेन निष्कलसकलब्रह्मविषयकभावनाऽन्यतरमप्यभावयत॰ स्वाविद्याद्वयतत्कार्यजातनिवृत्तिरूपपरमशान्ति स्वप्ने ऽपि प्रमादतो वा न च जात्वस्ति। एवंविधपरमशान्त्य-

भावे ऽपि ब्रह्मात्मैक्यसुखस्यापरिच्छिन्नत्वेन तत्सुखं स्वयमेव स्यादिति तत्राह—कुत इति । अक्षीणाविद्याद्वयतत्कार्यजातावृतापरिच्छिन्नानन्दस्वरूपावस्थानलक्षणकैवल्यसुखत्वेनाशान्तस्य तादृशं सुखं कुतः? न च तादृशसुखाभावे ऽपि वैषयिकं सुखं निरङ्कुशमिति वाच्यम्; तात्कालिकप्रातिभासिकसुखस्यापि परिणामे दुःखमात्रपर्यवसानात्तत्सुखाभासतृष्णानिवृत्तिरेव खलु परमसुखम्; तद्विधुरस्य कुत्रापि सुखगन्धो नास्तीत्यर्थः । ब्रह्मात्मविषयकबुद्धियुक्तस्य तद्विषयकभावना जायते । तादृशभावनायुक्तस्य परमशान्तिरुदेति । एवं परमशान्तिमारूढस्यैव निरतिशयब्रह्मसुखलक्षणं कैवल्यं भवतीत्यर्थः ॥ ६६ ॥

अवशीकृतेन्द्रियद्वयस्य ब्रह्मात्मविषयकबुद्धिभावनाशान्तिसुखाभावे हेत्वन्तरमाह—

**इन्द्रियाणां हि चरतां यन्मनो ऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

इन्द्रियाणामिति । स्वार्थेषु निरङ्कुशं चरतां चक्षुरादीनां सर्वेषामिन्द्रियाणां यन्मनो ऽन्तःकरणमनुविधीयते, इन्द्रियवशं प्राप्य तदनुकूलतया प्रवर्तत इत्यर्थः । अस्य मुमुक्ष्वाभासस्य तन्मनः श्रुत्याचार्यप्रसादात्तात्मानात्मविवेकजां प्रज्ञां वायुरम्भसि समुद्रे ऽकुशलकर्णधाराधिष्ठितां नावमिव हरति । हि यस्मादेवं तस्माद्विक्षिप्तचित्तस्य ब्रह्मात्मबुद्धिभावनाशान्तिसुखानि न सिध्यन्तीत्यर्थः ॥ ६७ ॥

यततो ह्यपीत्यारभ्योपपादितमर्थमुपसंहरति —

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

तस्मादिति । हे महाबाहो ! यस्माद्यथेच्छं स्वार्थानुचारीन्द्रियानुकूलतया चरतो मनसो दोषः स्फुटीकृतः, तस्माद्यस्य मुमुक्षोरिन्द्रियाणि स्वार्थेभ्यः शब्दादिविषयेभ्यः स्वापावस्थायामिव सर्वशः सर्वप्रकारेण निगृहीतानि उपरमितानि भवन्ति, तस्य यतेः प्रज्ञा ब्रह्मात्मनि प्रतिष्ठितेति मन्तव्यमित्यर्थः ॥ ६८ ॥

इन्द्रियद्वयव्यापृत्तिरहितत्वं स्थितप्रज्ञत्वमिति यदुक्तं तदसाधु, सुषुप्तपुरुषवत्सर्वात्मना ऽन्तर्बाह्यविलसिनेन्द्रियद्वयव्यापृतिशून्यो न कश्चिदस्ति, कुताप्यदर्शनादित्यत्रोच्यते—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

येति । सर्वेषां भूतानामतद्भावारूढानामज्ञानां या सर्वकर्मसंन्यासलक्षणा ऽद्वितीयब्रह्मात्मनिष्ठा निशेव निशा ब्रह्मानन्दाविवेककरी भवति । यथा चक्षुष्मता प्रचण्डमार्त्तण्डदीधितिव्याप्तमहरेव दिवाभीताना चक्षुरावारिका निशा भवति । तथोलूकस्थानीयानामज्ञानामद्वितीयब्रह्मनिष्ठा स्वयंप्रकाशरूपा ऽपि निशा भवतीत्यर्थः । तस्यामज्ञवृन्दनिशाभूतायामद्वैतनिष्ठायामिन्द्रियद्वयसंयमवान् स्थितप्रज्ञः संन्यासी जागर्ति, यथोक्तलक्षणब्रह्मज्ञानाग्निभस्मीकृतस्वस्वरूपावारकाज्ञानतूलराशित्वात् । यस्यां ग्राह्यग्राहकभेदलक्षणायां स्वावरणरूपायां स्वाविद्याद्वयतत्कार्यमहामोहनिद्रायां परमार्थतत्त्वज्ञातिरिक्तानि भूतानि जाग्रति तद्व्यापारवन्ति भवन्ति अहमेव ब्रह्म ब्रह्मैवाहमिति प्रत्यगभिन्नं ब्रह्म पश्यतो मुने संन्यासिन सैव स्वाविद्याविजृम्भितद्वैतनिष्ठा निशा रात्रिर्भवति । तादृशब्रह्मात्मनिष्ठस्य ग्राह्यग्राहकलक्षणद्वैतप्रपञ्चप्रवृत्तिनिवृत्त्यभावात्—

'नैतज्जाग्रन्न च स्वप्नः संकल्पानामभावनात् ।
सुषुप्तभावो नाप्येतदभावाज्जडतारिथतेः ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥'
'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'

इत्यादिद्वैतप्रपञ्चप्रवृत्तिनिवृत्त्यभावश्रुतेः । यस्यैवं भेदजातं निशेतिज्ञानं तस्य सर्वकर्मसंन्यास एवाधिकारो न कर्मणि, तद्वेत्वज्ञानाभावात् । अत एव विधेयोदयात्प्रागविद्यावस्थायामविदुषः कर्माणि चोद्यन्ते । उदिते त्वविद्यासवितरि क्रियाकारकफलात्मकस्याविद्याकर्मध्वान्तादर्शनात्तत्प्रवृत्तिनिवृत्तिर्वा न संभवति । अत एव ब्रह्मात्मनिष्ठस्य स्वाधिष्ठेयेन्द्रियद्वयतत्कार्याणां ब्रह्मात्मरूपत्वेन सुषुप्तपुरुषवत्प्रवृत्तिनिवृत्त्योरभावात्स्थितप्रज्ञलक्षणं साध्येयेत्यर्थः ॥ ६९ ॥

स्थितप्रज्ञस्य ब्रह्मात्मदृष्टित्वेन विषयपराङ्मुखत्वमुक्तम्; इदानीं विषयभोक्तृत्वे ऽपि न तस्य काचिद्विक्रितिरस्तीत्याह—

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

आपूर्यमाणमिति । नानानदनदीजलैरा समन्तात्पूर्यत इत्यापूर्यमाणः । न चलतीत्यचलः, अचलत्वप्रतिष्ठा स्थितिः यस्य सो ऽयमचलप्रतिष्ठः, स्ववेलाऽवधि स्वस्मिन्नेवाविकारतया स्थितत्वात् । तमेवंभूतं सर्वत्र मुक्तवत्स्वधामतो न-

द्रवन्त समुद्र प्रावृड्ग्रीष्मकालयो वृद्धिह्लानिशून्यत्वेनाविक्रिय यद्वदापो नानानदनदीमुखा प्रविशन्ति तद्वदिच्छाविशेषा सर्वे कामा किंचिद् प्यविकुर्वन्त सन्तो ब्रह्मात्मनिष्ठ स्वे महिम्नि तिष्ठन्त य प्रविशन्ति, सो ऽय ब्रह्मात्मनिष्ठ स्थितप्रज्ञ सन्यासी स्वसत्ताकवलिताविद्यातत्कार्यरूपा कै वल्यरूपिणीं शान्तिमाप्नोति । न च 'आहारशुद्धौ सत्त्वशुद्धि सत्त्वशुद्धौ ध्रुवा स्मृति स्मृतिलम्भे सर्वग्रन्थीना विप्रमोक्ष ' इति श्रुते शुद्धमाहारम श्नत क्रमेण सर्वग्रन्थिविप्रमोक्षो न तद्विपरीतस्यति वाच्यम् । तस्यारुरुक्षु विषयत्वात् तद्विपरीतस्य सर्वग्रन्थ्यतीतब्रह्मात्मभावमारूढस्यारुरुक्षवाचरणीय नियमानियमप्रवृत्तिनिवृत्तिप्त प्रयोजनाभावात् । तथा ऽपि लोकसग्रहार्थमा रुरुक्षुवत्सर्वमाचरणीयमिति चेन्न , लोकसग्रहार्थानुष्ठानस्यारुरुक्ष्वारूढयोर्न्तरा लावस्थाऽऽपन्नमुन्यधिकारात् । तथा च श्रुति —

'आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥
न चास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् '

इत्यादि । एव कर्तव्याभावे भोक्तृत्व कुत इति चेन्न, ब्रह्मात्मनिष्ठस्य स्वव्यतिरिक्तभोक्तृभोग्याभावेन कुत्राप्यात्मत्वात्मीयत्वाभिमानाभावात्परारो पित प्रातिभासिक भोक्तृत्व विदुषो न दोषाय कल्पने । 'सत्य ज्ञानमनन्त ब्रह्म । यो वेद निहित गुहाया परमे व्योमन् । सो ऽश्नुते सर्वान्कामान् सह । ब्रह्मणा विपश्चितेति ।'

'यथा रवि सर्वरसान्प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्ष ।
तथैव योगी विषयान्प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्ध '॥
अहमन्न सदा ऽन्नाद इति हि ब्रह्मवेदनम्'।
ब्रह्मविद् ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ॥'

इत्यादिश्रुतिप्रमाणतो ब्रह्मात्मनिष्ठस्य विषयभोक्तृत्वे ऽपि न काचित्क्षतिरस्ति। अविदुषः कामिनो ऽपि तथा ऽस्त्विति चेत्तत्राह—नेति। काम्यन्त इति कामाः विषयाभिलाषाः। तानात्मीयत्वाभिमानेन कामयितुं शीलं यस्य देहादावात्माभिमानिनः सो ऽयं कामकामी भोक्तृत्वं स्वस्मिन् स्वेतरेषु भोग्यत्वं चारोप्य मोमुह्यमानः सन् पूर्वोक्तां शान्तिं नाप्नोति। 'विदुषः स्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न त्वसन्न्यासिनः कामकामिनः' इति भाष्यकारोक्तेः अकामिन एव मोक्षः, न कामिन इत्यर्थः ॥ ७० ॥

त्यक्तैषणस्याकामिन एव मोक्षो न कामिन इति यदुक्तं तद्विचिकित्स्यम्, परिव्राजकेतरस्यापि मोक्षसंभवात् स्वशरीरेन्द्रियतत्सनन्धिदारपुत्रधनक्षेत्रादावात्मत्वात्मीयत्वाभिमानविकलेन कामकामिना गृहस्थेनापि मोक्षस्य प्राप्तुं शक्यत्वेन सर्वकर्मसन्न्यासमौनादेरकिंचित्करता स्यादित्येवं प्राप्ते, तत्रोच्यते—स्वदेहदारादावहममाभिमानाभावेन तैः प्रयोजनाभावतस्तेषु विरक्तः,

'विरक्तः प्रव्रजेद्धीमान् सं रक्तस्तु गृहे वसेत्।
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ॥'

इति श्रुतेः प्रथमपादपर्यालोचनया परिव्राट्पदमेव भजेत। यतो द्वितीयादिपादावष्टम्भेन न भजते, अतो दारादिन्यस्ताभिमानं दुस्त्यजं मत्वा माक्षिकमध्यपतितमक्षिकावत्तत्रैव मोमुह्यमानस्य तदवस्थां विना तद्विपरीतसर्वैषणापरित्यागलक्षणसर्वकामप्रासकमोक्षकथाया अपि दुर्लभत्वादन्तर्बाह्यविलसितविक्षेपद्वयावृतदृष्टेः कामकामिनो न मोक्षावकाश इति सिद्धत्वान्न सन्न्यासमौनयोरकिंचित्करतेति सिद्धम्। न च सन्न्यासिनो बाह्यविक्षेपालम्बनाभावे ऽपि नानासंकल्पादिवृत्तिमन्मनसः सत्त्वेनान्तर्विक्षेपध्रौव्यान्न मोक्षप्रसक्तिरिति वाच्यम्। बाह्यालम्बनाभावे प्रचारप्रदेशाभावतो ऽन्तर्विक्षेप

स्यापि कामुकादिपुरुषप्रष्टकामिनीकुचवत्स्वात्मन्येव विलयसंभवात् यत्किंचिदवशिष्टान्तर्विक्षेपतूलाद्रेर्वेदान्तश्रवणमनननिदिध्यासनारणिचिरमथनाविर्भूतसम्यग्ज्ञानवह्निना निःशेषभस्मीकरणादेवमन्तर्बाह्यविक्षेपद्वयाभावतस्यैवैकपण्स्य संन्यासिन एव सर्वसंकल्पतज्जसर्वकामतज्जसर्वकर्मसंन्यासलक्षणब्रह्मनिष्ठता स्यादित्यत एव भगवानाह—

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

विहायेति । परमपुरुषार्थभाक्त्वात् यः पुमान् संन्यासी स्वमात्रावशेषतया ऽशेषतः स्वान्तर्बाह्यविजृम्भितान्सर्वान्कामानिविहाय स्वात्मत्वेन प्रविलाप्य शरीरधारणामात्रहेतुचेष्टाऽवशेषः सक्विड्वत् सर्वासु दिक्षु चरति पर्यटति, स शान्तिमधिगच्छतीति योजना । एवं पर्यटतो यतेः भक्तोपनीतभिक्षाऽऽदाविदं ममेति ममत्वसंभवाच्छान्तिः कथं स्यादिति तत्राह— निर्मम इति । शरीरधारणामात्रहेतुत्वेनावर्जनीयान्नपानादिपरिग्रहे ऽपि ममेदमित्यभिमानविकलत्वात् निर्गतो ममकारो यस्मात् सो ऽयं निर्ममः । स्वदेहादन्यत्र ममकाराभावे ऽपि स्वदेहमात्रे ऽहंकारस्य भौव्यात्कथमुक्तलक्षणा शान्तिर्भवतीति तत्राह— निरहंकार इति । निर्गतो ऽहंकारो यस्मात् सो ऽयं निरहंकारः स्वाविद्याविजृम्भितदेहादावहंभावध्वान्तस्य स्वविद्याभिध्याह्नप्रचण्डमार्तण्डदीधितिकबलितत्वात्स्वदेहे तदन्यत्र वा अहंकारममकाराभावे ऽपि देहधारणस्पृहया अनिवार्यत्वाच्छान्तिः कुत इति तत्राह— निःस्पृह इति ।

'नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥'

इति श्रुत्यनुरोधेन स्वदेहधारणाधारणयोरपि निर्गता स्पृहा तृष्णा यस्मात्सोऽयं निःस्पृहः। एवंविशेषणविशिष्टः स्थितप्रज्ञो मुनिरेवाविद्यातत्कार्यविजृम्भितसर्वसंसारप्रवृत्तिनिवृत्त्युपरमलक्षणां संशान्तविक्षेपद्वयपुरुषप्राप्यां विदेहकैवल्यरूपिणीं शान्तिमधिगच्छति। विदेहमुक्तो भवतीत्यर्थः।

'यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्यो ऽमृतो भवत्येतावदनुशासनम्॥'

इति श्रुतेः॥ ७१॥

पूर्वोक्तसर्वकर्मसंन्यासलक्षणब्रह्मनिष्ठां स्तुवन्नुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।**
**स्थित्वा ऽस्यामन्तकाले ऽपि ब्रह्मनिर्वाणमृच्छति॥७२॥**

इति श्रीमद्भगवद्गीता० सांख्ययोगो नाम द्वितीयो ऽध्यायः

एषेति। एषा सर्ववेदान्तप्रसिद्धा सर्वकर्मसंन्यासपूर्वकमत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षणेयं ब्राह्मी स्थितिः निष्ठा सर्वव्यापिका ऽपि 'यश्च श्रोत्रियो ऽवृजिनो ऽकामहतः स एको ब्रह्मलोक आनन्दः'[1] इत्यादिश्रुत्यनुरोधेनाकामिष्वेव सर्वोत्कर्षेण वर्तते। न चास्यां निष्ठायां काम्यकामिनोस्तुल्याधिकारत्वेन फलस्यापि समत्वेन च केवलमायासपर्यवसायी संन्यास इति वाच्यम्,

'द्वाविमौ न विराजेते विपरीतेन कर्मणा।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः॥'

[1] बृ. ४. ३. ३३.

इति श्रुतिप्रमाणत कामिनो निरारम्भलक्षणब्रह्मनिष्ठतावैरल्यात्, तथा ऽपि तदारोढुमिच्छायामपि बहुलतरान्तरायसंभवात् श्रुत्याचार्यप्रसादतो वेदान्तश्रवणकालमारभ्य देहपतनपर्यन्तं स्वान्तर्बाह्यविजृम्भितसंकल्पकामकर्मसंन्यासपूर्वकत्वाद् ब्रह्मनिष्ठाया अकामिनो निरारम्भकत्वेन तत्रान्तरायाभावात् अस्यामकाम्येवाधिक्रियते न कामी ।

> 'श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीर ।
> श्रेयो हि धीरो ऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते[1] ॥'

इत्यादिश्रुत्यनुरोधेन कामिन फलं प्रेयो ऽभ्युदयं तद्विपरीतस्याकामिन फल नि श्रेयसमिति फलस्यापि वैषम्यात्तदन्यथाभावणे, 'सो ऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति[2]'

> 'यदा सर्वे प्रमुच्यन्ते कामा ये ऽस्य हृदि श्रिता ।
> अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुते[3] ॥'

इत्यादिसद्योमुक्तिविधायिन्य सर्वकामत्यागोत्तरक्षणे प्रत्यक्परविभागासहसत्तासामान्यब्रह्मस्वरूपावस्थानलक्षणविदेहकैवल्यप्रमाणभूता श्रुतय कुप्येरन् । तस्मादस्या निष्ठायामकामिन एवाधिकार इति सिद्धान्त । दुस्त्यजसंसारत्यागपूर्वकमस्यामकामिन एवाधिकारिता ऽस्तु । कदाचित्तन्निष्ठातो ऽकाम्य पि च्यवन् प्रमादत पुन ससारमोहमाप्नुयादिति तत्राह—न मुह्यतीति । उक्तलक्षण परिव्राड् ब्राह्मीमेना निष्ठा प्राप्य कदाचिदपि स्वाविद्याद्वय-

[1] क २ २
[2] बृ ४ ४.६
[3] क ६ १४

विजृम्भितजीवेशादिनानाभेदास्पदे संसारे न मुह्यति । ब्रह्मात्मनिष्ठाकबलितस्वाविद्याद्वयतत्कार्यमोहत्वादेना प्राप्य अकामी न मुह्यतीत्युक्त्या तद्विपरीतः कामी प्रातिभासिकत्वयैना प्राप्तो ऽपि संसारे मुह्यतीति द्योत्यते । तर्ह्येवंप्रभावभूतायामनुद्धाक्षारूढस्यैव कैवल्यप्राप्ति·; न मध्यमवयस्यारूढस्येति तत्रोच्यते—अन्तकाले ऽपीति । स्वायु·कालं चतुर्धा विभज्य तत्र भागत्रयं संसरन्नन्तकाले चरमभागे ऽपि सर्वकर्मसंन्यासपूर्वकमस्यां ब्राह्मयामप्रमादत स्थित्वा ब्रह्मात्मावशेपेण स्वाध्यस्ताविद्याद्वयतत्कार्यस्य निर्वापणं विलापनम्, ब्रह्मनिर्वाणं कैवल्यमृच्छति । अन्तकाले ऽपीत्यपिशब्दस्वारस्यात् ब्रह्मचर्यादेव संन्यस्यास्यां निष्ठाया स्थितो ऽकामी ब्रह्मनिर्वाणमृच्छतीति किमु वक्तव्यमिति द्योत्यते । ब्रह्मचर्यादेव संन्यस्य संन्यासाज्जातरूपधर. कृतकृत्यो भवति—

> ‘संसारमेव नि सारं दृष्ट्वा सारदिदृक्षया ।
> प्रव्रजन्त्यकृतोद्वाहा परं वैराग्यमाश्रिता ॥’

इत्यादिश्रुते । इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ ७२ ॥

> यो बुद्धिद्वयजालेन शोकमोहार्णवं गतम् ।
> उज्जहार क्षणात्पार्थं नमस्तस्मै दयालवे ॥

इति श्रीमद्भगवद्गीताऽर्थप्रकाशिकायां द्वितीयो ऽध्याय·

## अथ तृतीयो ऽध्यायः

बुद्धिद्वयश्रुतेः पार्थे संदिग्धे तन्निवृत्तये ।
उपायोपेयभेदेन तदेवाह पुनर्हरिः ॥

पूर्वाध्याये गीताशास्त्रप्रवृत्तिविषयभूतं बुद्धिद्वयं भगवता प्रतिपादितं खलु; तत्र सांख्यबुद्धिनिष्ठा ये स्थितप्रज्ञास्तेषां प्राधान्येन 'अशोच्यान्' इत्यारभ्य 'एषा ब्राह्मी स्थितिः' इत्यन्तेन ग्रन्थेन सर्वकर्मसंन्यासपूर्वकसांख्यनिष्ठातः कृतार्थता ऽभिहिता । त्वन्नाथायात्यन्तभक्ताय मुमुक्षवे मह्यं पदे पदे 'कर्मण्येवाधिकारस्ते' 'तस्माद्युध्यस्व भारत' इत्यादिना सांख्यबुद्ध्युपायभूतां योगबुद्धिमाश्रित्य भगवता त्वया सांख्यबुद्धिनिकृष्टकर्मबुद्धिनिष्ठा चोदितेति व्याकुलीकृतचित्तः सन् भगवन्तं प्रत्यर्जुन उवाच—ज्यायसीति द्वाभ्याम् ।

अर्जुन उवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

ज्यायसीति । हे जनार्दन ! प्रत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षणं मोक्षं प्रत्यन्तरङ्गत्वेन कर्मयोगबुद्धिनिष्ठातः सांख्यबुद्धिनिष्ठा ज्यायसी मता चेत् ते तव, तर्हि हे केशव ! घोरे हिंसारूपे कर्मणि 'तस्माद्युध्यस्व' 'तस्मादुत्तिष्ठ' इत्यादिना भूयो भूयः किमर्थं मां नियोजयसि प्रेरयसीत्यर्थः ॥ १ ॥

'धर्म्याद्धि युद्धाच्छ्रेयो ऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिना कर्मणो ऽपि श्रेष्ठत्वमुक्तं तत्राह—

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयो ऽहमाप्नुयाम् ॥ २ ॥**

व्यामिश्रेणेति । क्वचित्कचिज्ज्ञानप्रशंसा क्वचित्कचित् कर्मप्रशंसेत्येवं व्यामिश्रेण संदेहास्पदेन वाक्येनेव मे मम बुद्धिं मोहयसीवेति प्रतिभाति । इवशब्दद्वयतो विस्पष्टार्थाभिधायिनो भगवतः परमदयालुत्वेन मद्बुद्धिगत-महामोहनिवृत्तये प्रवृत्तत्वात् युक्तायुक्तविवेकविकलस्य मम बुद्धिदोषादेवं प्रतिभातीति द्योत्यते । एवंविधं मदपराधं क्षमस्वेत्यर्थः । त्वदुक्तबुद्धिद्वया-नुष्ठानस्य भिन्नपुरुषकर्तृकत्वेन मयैकेन युगपदनुष्ठातुमशक्यत्वात् तयो-र्मध्ये येन त्वदुपदिष्टबुद्ध्यनुष्ठानेनाहं श्रेयो निःश्रेयसमवाप्नुयाम्, अर्जुनायेदं योग्यमिति निश्चित्य तदेकं तयोरन्यतरसाधनं वद केवलदययोपदिशेत्यर्थः । न च 'अशोच्यान्' इत्यारभ्य यावदध्यायपरिसमाप्ति भगवता बुद्धि-द्वयस्योक्तत्वेनार्जुनेनावधारितत्वेन च तयोर्बुद्धिद्वयसमुच्चयो ऽभिमत इति सिद्धे, तत्र कामीतराणामधिकारासंभवेनाश्रमान्तरासिद्धिरिति वाच्यम् । बुद्धिद्वयसमुच्चयस्तयोरभिमतो यदि तदनुरोधेन तदा प्रश्नप्रतिवचने स्याताम्.। न ते दृश्येते । युगपदेकेन पुरुषेण बुद्धिद्वयसमुच्चयानुष्ठानं कर्तुमशक्यं मन्यमानस्यार्जुनस्य तयोः साधनयोरेकमन्यतरत् मदनुष्ठानयोग्य-मिति निश्चित्य वदेति हि प्रश्नवाक्यं दृश्यते, अधिकारितरतमभावमवष्टभ्य तदनुरोधेन सर्वज्ञस्य भगवतः प्रतिवचनमपि । तथा हि, प्रत्यगभिन्नब्रह्मज्ञान-तद्धेतुचित्तशुद्धिविकलस्य तूष्णींभावलक्षणसर्वकर्मसंन्यासापेक्षया 'जाया मे

स्यादथ प्रजायेय वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै कामो नेच्छंश्च नातो भूयः पुत्रेणायं लोकः कर्मणा पितृलोको विद्यया देवलोकः[1] ' इत्यादिश्रुत्यनुरोधेन काम्यबुद्धया वा ' नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्रा ऽपि च ते न प्रसिध्येदकर्मणः ॥ ' इत्यादिना स्वर्गादिफलप्ररोचनेन कर्मणि प्रवर्त्य, अथ ' प्लवा ह्येते अदृढा यज्ञरूपाः[2] ' इत्यारभ्य तत्फलानुभवानन्तरम् ' इमं लोकं हीनतरं वा विशन्ति ' इत्यन्तश्रुत्यनुरोधेन ' त्रैविद्या मां सोमपाः ' इत्यारभ्य ' गतागतं कामकामा लभन्ते ' इत्यन्तेन कर्मफलभोगेषु दोषं दर्शयित्वा तत्रापि ' तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते[3] ' इत्यादिना च कर्मफलस्य नश्वरतां प्रतिपाद्य कर्मकरणमेवमनेकदोषास्पदमिति कर्माकरणे प्राप्ते, ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन[4] ' इत्यादिश्रुत्यनुरोधेन ' यज्ञार्थात्कर्मणो ऽन्यत्र लोको ऽयं कर्मबन्धनः । तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ' ' असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ' इत्यादिनोपात्तदुरितक्षयद्वारा फलाभिसंधिराहित्यपूर्वकमीश्वराराधनलक्षणनिष्कामकर्मानुष्ठानतः कर्मबन्धास्पर्शनपूर्वकं चित्तशुद्धिं प्रतिपाद्य समुत्पन्नचित्तशुद्धीनां प्रत्यगभिन्नब्रह्मज्ञाननिष्ठामारोढुं शक्तानाम् ' किं प्रजया करिष्यामो येषां नो ऽयमात्मा ऽयं लोकः ' इत्यात्मलोकाः सन्तः सकलवेदान्तश्रवणादिना ' एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति ' तत्र कश्चिद्विविदिषुश्चेत् ' ब्राह्मण पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च

[1] बृ. १ ४ १७
[2] मु. १. २ ७.
[3] छा. ८. १ ६.
[4] बृ ४. ४. २२.

निर्विद्याथ ब्राह्मणो विद्वान् स ब्राह्मणः केन स्याद्येन स्यात्'[1] इत्यादिश्रुत्यनुरोधेन । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ॥ नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ।' इत्यादिना सर्वकर्मसंन्यासलक्षणसांख्यनिष्ठा मिथो भगवता असांकर्येण दर्शितेति तत्र तत्रास्मिञ्शास्त्रे दृश्यते । तत्र काम्यनिष्कामकर्मणो-'रैकीकृत्य योगबुद्धिस्तदुपेयभूता सांख्यबुद्धिरिति च 'लोके'ऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मया ऽनघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥' इत्यादिना यतो भगवदुक्तबुद्धिद्वयस्याधिकारिणावप्यसंदिग्ध प्रतिपादितवतो ऽस्मिन् शास्त्रमुदये बुद्धिद्वयसमुच्चयासिद्धिराश्रमान्तरसिद्धिश्च निरङ्कुशेति सिद्धम् । तथा च स्मृतयः—

'द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्त्याख्यस्तथा ऽपरः ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
उपायोपेयतः कर्मतत्संन्यासौ प्रदर्शितौ ॥
समप्रधानौ तौ चेन्न काम्यकाम्यधिकारतः ।
तयोः प्रवृत्तितः सर्वनिवृत्तिः प्रविशिष्यते ॥
प्रवृत्त्या यान्ति संसारं तत्पारं तु निवृत्तितः ।'

इत्याद्याः ॥ २ ॥

[1] बृ ३ ५ १

अर्जुनप्रश्नप्रतिवचनं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**लोके ऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मया ऽनघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

लोक इति । सदाचारकवलिताधत्वात् हे अनघ! पुरा सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनगुरुशिष्यपरंपराऽध्ययनरूपसंप्रदायकारिणा सर्वज्ञेन मया अस्मिन् लोके शास्त्रार्थानुष्ठातॄणां त्रैवर्णिकानां द्विधा निष्ठा विस्पष्टं प्रोक्ता । किं तत्प्रकारद्वयमिति तत्राह—ज्ञानेति । प्रत्यगभेदेन ब्रह्म ज्ञायते ऽनेनेति ज्ञानं तदेव योगः, तेन ज्ञानयोगेन वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां सांख्यानां माधाम्यतः 'प्रजहाति यदा कामान्' इत्यारभ्य यावदध्यायपरिसमाप्ति ज्ञाननिष्ठोक्ता । परिव्राजकेतराणां योगिनां तु 'कर्मण्येवाधिकारस्ते' इत्यादिना कर्मनिष्ठा चोक्ता । एवमर्जुनभगवत्प्रश्नप्रतिवचनाभ्यां ज्ञानकर्मसमुच्चयाभावो घोत्यते । स पुरस्तादेव भगवद्भाष्यकाराभ्यां निराकृत इत्यर्थः ॥ ३ ॥

यतः चित्तशुद्धिज्ञानहेतूपायोपेयमेवेदं निष्ठाद्वयमुक्तम्; अतः चित्तशुद्धया ज्ञानोत्पत्तिपर्यन्तं तत्तद्वर्णाश्रमोचितानि कर्माणि मुमुक्षुणा कर्तव्यान्येव; अन्यथा चित्तशुद्धयनुदयेन ज्ञानानुत्पत्त्या कदा ऽपि पुरुषार्थो न सिध्यतीत्याह—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषो ऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

न कर्मणामिति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन' इत्यादिश्रुत्यनुरोधेन पुरुषार्थहेतुकर्माधिकारी पुरुषो

ब्रह्मात्मज्ञानप्रतिबन्धोपात्तदुरितक्षयद्वारा चित्तशुद्धिमाप्यज्ञानोत्पत्तिहेतुत्वं स्वाश्रमोचितयज्ञदानकृष्यादिकर्मणामनारम्भादननुष्ठानात् नैष्कर्म्यं नाश्नुते। स्वव्यतिरेकेणेदं क्रियाकारकफलात्मकं कर्म न भवतीति निष्कर्म, तस्य भावो नैष्कर्म्यं प्रत्यगभिन्नब्रह्मज्ञानं न प्राप्नोतीत्यर्थः। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादया संन्यासस्य मोक्षफलत्वश्रुत्या चित्तशुद्ध्यभावेऽपि मोक्षसंभवात् बहुलतरायाससाध्यचित्तशुद्धिपर्यवसायिस्वाश्रमोचितनिष्कामकर्मानुष्ठानेन किमिति तत्राह—न चेति। चित्तशुद्धिप्राक्कृतकेवलकर्मपरित्यागलक्षणसंन्यासात्साधनचतुष्टयसंपत्तिवैकल्ये पारिव्राज्यधर्माननुष्ठानलक्षणात् द्वेषमात्रपर्यवसानादेव नैष्कर्म्यलक्षणां सिद्धिं नाधिगच्छति।

'वमनाहारवदस्य भाति सर्वेषणाऽऽदिषु।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये॥
पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति।
तमारूढच्युतं विद्यादिति वेदानुशासनम्॥
तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः।
भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा॥'

इत्यादिश्रुतिभ्यः विस्मृतपिष्टचमूलवणाभावोक्तिवत् ज्ञानतदुपायचित्तशुद्धिरहितकेवलकर्मत्यागलक्षणवेषमात्रसंन्यासो निरर्थक इत्यर्थः॥ ४॥

अनुत्पन्नज्ञानतदुपायचित्तशुद्धीनां केवलकर्मसंन्यासो न कर्तव्य इत्यत्र हेत्वन्तरमाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥ ५॥**

[1] बृ. ४. ४. २२.

न हीति । हि यस्मात् अज्ञः सर्वो जनः पूर्वजन्माद्यनन्तकोटिजन्मानुगतवासनामयी प्रकृतिः, तस्याः प्रकृतेः सकाशादुत्थैः रागद्वेषादिहेतुभिः सत्त्वादिभिर्गुणैरवशः अस्वाधीनः सन् कार्यते उच्चावचकर्मणि प्रवर्त्यते; तस्मात् क्षणमात्रमपि कश्चित् जन्तुरकर्मकृत् निर्व्यापारतया न तिष्ठति। न च सर्वशब्दस्य संकोचे मानाभावात् अज्ञेन सह ज्ञो ऽपि स्वप्रकृतिजैर्गुणैः स्वोचितकर्मसु प्रवर्त्येतेति वाच्यम्। प्रकृतिप्राकृतास्पृष्टनिर्गुणप्रत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षणनैष्कर्म्यपदमारूढस्य ज्ञस्य प्रकृतिद्वयतत्कार्यत्रिगुणतत्कार्योच्चावचकर्मपूगप्रवृत्तिनिवृत्त्यतीतत्वेन 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते[1]', 'गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते', 'गुणैर्यो न विचाल्यते', 'तस्य कार्यं न विद्यते' इत्यादिकर्माभावप्रमाणतः सर्वातीतत्वात् न तस्य सर्वान्तःपातित्वेन प्रकृतिवशगता स्यादिति भावः ॥ ५ ॥

भूरितरायाससाध्यकर्मकरणापेक्षया ज्ञवदज्ञस्यापि कर्मसामान्याकरणलक्षणस्तूष्णींभाव एव वरमिति तत्राह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याऽऽचारः स उच्यते ॥६॥**

कर्मेति। यः पुमान् वागादिकर्मेन्द्रियाणि संयम्य मनमेश्वरं ध्यायामीति व्याजेनेन्द्रियार्थान् शब्दादीन् स्मरन्नास्ते तस्याशुद्धान्तःकरणत्वेन स्वाज्ञानतो विमूढ आत्मा ऽन्तःकरणं यस्य सो ऽयं विमूढात्मा मिथ्याऽऽचारो दम्भाचारः पापाचार इत्युच्यते ॥ ६ ॥

[1] श्वे. ६. ८.

तद्विपरीतस्य फलाभिलाषवैकल्येन विहितं कर्माचरतः सदाचारत्वेन मिथ्याऽऽचाराद्वैशिष्ट्यमाह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

यस्त्विति । हे अर्जुन ! तुशब्दो निष्कामकर्माधिकारितापदर्शनार्थः । यः कर्माधिकारी मनसा शब्दादिविषयेभ्यः श्रोत्रादिज्ञानेन्द्रियाणि संयम्य वागादिभिः कर्मेन्द्रियैः कर्मयोगम् असक्तः कर्मफलाभिलाषरहितः सन् आरभते स पुरुषो मिथ्याऽऽचारात् विशिष्यते ; उत्कृष्ट इत्यर्थः ॥ ७ ॥

ज्ञानतद्धेतुचित्तशुद्धिविकलानां कर्मसंन्यासापेक्षया कर्तव्यं कर्म भोक्तव्यं तत्फलमिति फलाभिसंधिपूर्वकं वा कर्मकरणमेव श्रेय इत्याह—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

नियतमिति । हि यस्मात् ज्ञानतद्धेतुचित्तशुद्धिविकलादकर्मणः कर्माकरणात्केवलकर्मसंन्यासात्फलोद्देशेन वा कर्मकरणं ज्यायः प्रशस्यतरं तस्मात् त्वं यो यत्कर्मण्यधिकृतः तस्य तत्फलसिद्धिर्भवतीति धिया नियतमवश्यं नित्यनैमित्तिकादि कर्म कुरु । कर्माकरणे तत्फलासंभवेऽपि शरीरयात्रा सिध्यतीति तत्राह—नेति । अकर्मणः कर्माकर्तुस्तव आधिव्याधिभिः शीर्यत इति शरीरं तस्य यात्रा तद्धारणरूपा स्थितिरपि न प्रसिध्येत् कर्मायत्तत्वाच्छरीरस्येत्यर्थः ॥ ८ ॥

कर्मफलाकाङ्क्षया शरीरस्थित्यर्थं वा कर्म कुर्वीति यदुक्तं तन्न रमणीयम्, कर्मण फलपर्यवसायित्वेन तत्फलस्य च पुनर्जन्मादिहेतुत्वेन चारमणीयत्वात् कर्मकरणात् कर्माकरणं ज्याय इति तत्राह—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

यज्ञेति । हे कौन्तेय ! 'यज्ञो वै विष्णु' इति श्रुत्या यतो यज्ञार्थात् यज्ञस्य विष्णोराधनरूपात् कर्मणोऽन्यत्रायं लोको ज्ञजन कर्मण्यधिकृतत्वात् तत्फलेच्छया 'कर्मणा बध्यते जन्तुः' इति श्रुत्या कर्मैव बन्धनं यस्य सोऽयं कर्मबन्धनो भवति, अत तद्विष्णोराधनार्थं तत्कर्मफलेषु निष्कामत्वेन मुक्तसङ्ग सन् श्रुतिस्मृतिविहितं स्वाश्रमोचितं नित्यनैमित्तिकादि कर्म समाचर निर्वर्तयेत्यर्थं ॥ ९ ॥

प्रजापतिवचनादप्यधिकृतेन नित्यादि कर्म कर्तव्यमिति निगमयति— सहेति चतुर्भि ।

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

सहेति । प्रजाना सृष्ट्यादिहेतुत्वात् प्रजापतिर्ब्रह्मदेव पुरा सर्गादौ यज्ञेन सह वर्तन्त इति सहयज्ञाः यज्ञाधिकारिण त्रैवर्णिकात्मन प्रजा. सृष्ट्वोवाच । किमुवाचेति तत्राह —प्रसविष्यध्वमिति । यूयमनेन यज्ञेन प्रसविष्यध्वम् उत्तरोत्तराभिवृद्धिं कुरुतेत्यर्थ । कथमस्माभिरनेन यज्ञेन वृद्धि कर्तुं शक्येति तत्राह—कामधुगिति । एष यज्ञ वो युष्माकमिष्टान् कामानभिप्रेतान्विषयान् दोग्धीति इष्टकामधुगस्तु भवतु ॥ १० ॥

कथं पुनः यज्ञस्याभीष्टफलहेतुत्वं देवताप्रसादसम्यग्ज्ञानाभ्यामृते ऽभ्युदयनिःश्रेयसयोर्दुष्प्रापत्वादिति तत्राह—

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवानिति । हे प्रजाः ! यूयं चरुपुरोडाशादिहविर्भागप्रदानलक्षणेनानेन यज्ञेन सकामा निष्कामा वा सन्तो देवानिन्द्रादीन् तदन्तर्यामिणं वा भावयत अभिवृद्धिं भजत वा कुरुतेत्यर्थः । अस्माभिर्भाविता देवाः किं कुर्वन्त्विति तत्राह—भावयन्तु व इति । ये युष्माभिर्भाविताः ते देवाः तदन्तर्यामी वा सकामान् निष्कामान्वा युष्मान् वृष्ट्यादिना चित्तशुद्ध्या वा भावयन्तु तोषयन्त्वित्यर्थः । मिथो भावनेन किं स्यादिति तत्राह—श्रेय इति । यूयं देवाश्चैवमुक्तप्रकारेण परस्परं भावयन्तः सन्तः श्रेयः इहामुत्र च स्रक्चन्दनादिस्वर्गादिभोगरूपं तद्वैराग्यतो निष्कामकर्मानुष्ठानजनितचित्तशुद्धिगम्यं ब्रह्मज्ञानं वा क्रमेण अवाप्स्यथ ॥ ११ ॥

कथं पुनरस्माभिर्भाविताः देवाः पुनरस्मान् भावयन्तीति तत्राह—

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

इष्टानिति । इन्द्रादयो देवा युष्मत्कृतज्योतिष्टोमादियज्ञविहितहविर्भागैर्भाविता तोषिताः सन्तो वो युष्मभ्यमिष्टानभिप्रेतान् दारपुत्रमित्रपशुवित्तस्वर्गादिसम्भवान् भोगान् दास्यन्ते वितरिष्यन्तीत्यर्थः । देवानां सत्त्वप्रधानत्वेन स्वातृप्त्यपोषणार्थं ते ऽस्मानेव भावयन्तु, तद्विपरीतो ऽयं लोको न तथा भावयितुमर्हतीति तत्राह—स्तेन इति । तैर्देवैर्यैरपितृभिः दत्तान्

वृष्ट्याद्युत्पन्नान्नपानादिभोगानेभ्यो देवर्षिपितृभ्यो यज्ञब्रह्मचर्यशास्त्रीयप्रजोत्पत्तिद्वारतः पुनरप्रदायानृण्यमकृत्वा केवलं कार्यकरणसंघातलक्षणस्वकलेवरपोषणाय यो भुङ्क्ते देवर्षिपितृस्वापहारिलेन, स स्तेनः तस्कर एव भवतीत्यर्थः ॥ १२ ॥

देवर्षिपितृभ्यो विभागशः स्वस्वभागप्रदानानन्तरं भुञ्जानस्य पापाभावं प्रकटयति—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

यज्ञेति । ये कर्मण्यधिकृताः पुरुषाः देवपितृभूतमनुष्यब्रह्मयज्ञशिष्टमशनमशितुं शीलं येषां कर्मठानां ते यज्ञशिष्टाशिनः सन्तः पञ्चसूनासंभवैः सर्वैः किल्बिषैः पापैः मुच्यन्ते ।

'खण्डिनी पेषिणी चुल्ली चोदकुम्भी च मार्जनी ।
पञ्चसूना गृहस्थस्य पञ्चयज्ञात्प्रणश्यति ॥'

इति स्मृतेः । यज्ञशिष्टाशिविपरीतानुदरंभरिणो दूषयति—भुञ्जते ते त्वघमिति । भोज्यवर्गं ये पचन्ति, किमर्थम् ? आत्मनः स्वशरीरस्य कारणात् पोषणार्थमुदरंभरित्वात् ते तु कर्मठाः पापा दुराचाराः सन्तो ऽघं पापं भुञ्जते रौरवादिनरकमनुभवन्तीत्यर्थः ॥ १३ ॥

इतश्च कर्मणो जगचक्रप्रवृत्तिहेतुत्वादप्यधिकृतेन कर्मैव कर्तव्यमित्याह—अन्नादिति त्रिभिः ।

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

अन्नादिति । शुक्रशोणितरूपेण परिणतादन्नात् भूतानि शरीराणि भवन्ति । तदन्नं केन जायत इत्यत आह—पर्जन्यादिति । पर्जन्यात् वृष्टे अन्नस्य संभव अन्नसम्भव । वृष्टेरन्नोत्पत्ति स्यादित्यर्थ । स पर्जन्य केनोद्भूत इति तत्राह—यज्ञादिति । कर्मजन्यापूर्वरूपाद्यज्ञात् पर्जन्यो वृष्टि-र्भवति । स यज्ञ केन समुत्पद्यत इत्यत आह—कर्मेति । पत्नीयजमानर्त्वि-गादिव्यापाररूपं कर्म यस्योत्पत्तौ हेतु स यज्ञ कर्मसमुद्भव तत्तद्देवता-ध्यानपूर्वकं तत्तद्देवतोद्देशेनाग्नौ हुता ऽऽहुतिरादित्यरश्मिद्वारेणादित्यं प्राप्य पुनस्तद्रश्मिद्वारा वृष्टयात्मना धरणीमण्डलं प्रविश्य व्रीह्याद्यन्नभावमुपेत्य संस्कारभेदत प्राणिजठरं प्रविश्य शुक्रशोणितरूपेण परिणता सती प्रजा-भावमुपैतीत्यर्थ । तथा च स्मृति —

'अग्नौ प्रास्ता ऽऽहुति सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत प्रजा ॥' इति ॥ १४ ॥

ऋत्विगादिव्यापाररूपं कर्म केन जायत इत्यत आह—

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

कर्मेति । अपूर्वहेतु कर्म ब्रह्मोद्भव सर्वेस्य ब्रह्मोद्भवाविशेषादिति तत्राह—ब्रह्मेति । सर्वार्थानाबृंहणात् ब्रह्मशब्देन वेद एवोच्यत इत्यर्थ । तस्मात् ब्रह्मणो वेदादुद्भव संभूति यस्य कर्मण तत्कर्म ब्रह्मोद्भव विद्धि विजानीहि । अक्षरात्मनो वेदस्याक्षरात् संभूतिरनुपपन्नेति तत्राह—अक्षर-समुद्भवमिति । न क्षरतीति व्युत्पत्त्या ऽक्षरशब्देन पर ब्रह्मोच्यते । तस्मा-दुद्भव संभूति यस्य वेदस्य ब्रह्मण तद् ब्रह्मसमुद्भव विद्धि 'अस्य महतो

भूतस्य 'निःश्वसितमेतद्यदृग्वेदः'[1] इत्यादिश्रुतेः । वेदस्य पौरुषेयत्वेन तदुक्तकर्मणामप्यप्रामाणिकत्वादक्षराख्यं ब्रह्म कासनमर्हतीति तत्राह—यज्ञ इति । वेदो यस्मादक्षरात् आविर्भूतो नोत्पन्नः तस्मादपौरुषेयत्वेन नित्यत्वात् तत्प्रकाशितयज्ञादेरपि तथात्वात् वेदाविर्भावहेतोरक्षरस्यापि सर्वगतत्वात् यज्ञस्यापि स्वाराधनबुद्ध्या ऽनुष्ठातॄणां चित्तशुद्धिद्वारा स्वप्रापकज्ञानहेतुत्वात् तस्मादाकाशवत् सर्वगतमपि परमार्थसत्यत्वाच्चदेतन्नित्यमक्षराख्यं ब्रह्म यज्ञे प्रतिष्ठितम् । यतो यज्ञोपायगम्यमक्षरमतो यज्ञादिकं कर्म मुमुक्षुभिरप्रमादेनानुष्ठेयमित्यर्थः ॥ १५ ॥

एवंभूतस्य जगच्चक्रस्य परमेश्वरेणैव प्रवर्तितत्वात् कर्मण्यधिकृतेन वेदाध्ययनपूर्वकं जगच्चक्रमनुवर्तयितव्यं तद्विपर्ययकृदीश्वराज्ञालङ्घनदोषतः प्रत्यवैति, तज्जीवनमपि व्यर्थमित्याह—

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

एवमिति । हे पार्थ ! इहास्मिन् लोके यः कर्मण्यधिकृतः पुमानीश्वरेण 'अन्नाद्भवन्ति भूतानि' इत्यादिश्लोकद्वयोक्तप्रकारेण प्रवर्तितं कर्मनद्धं चरति क्रमादिति जगच्चक्रं नानुवर्तयति नानुकरोति स कर्मठः अघं पापमेव आयुर्जीवनं यस्य सोऽयमघायुः भूत्वा इन्द्रियैरिन्द्रियार्थेष्वेवारमणमाक्रीडा यस्य सोऽयमिन्द्रियारामः सन्मोघं व्यर्थं जीवति । यतः स्वाज्ञानतः कर्माधिकारिता चोदिता अतः स्वज्ञानपर्यन्तमेवमप्रमादतया कर्म कर्तव्यमिति प्रकरणार्थः । न चैवमनुवृत्तनखज्ञानविजृम्भितव्यावृत्तजगच्चक्रस्येश्वरेण प्रवर्तितत्वेन ज्ञाज्ञयोस्तदन्तःपातित्वेन च ताभ्यामविशेषं तदनुवर्तनीयमेवेति वाच्यम् । तत्प्रवर्तकज्ञानसत्त्वासत्त्वाभ्यां कर्मकर्तव्याकर्तव्यत्वेन

[1] बृ २ ४ १०

'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेण योगिनाम्' इत्यादिना ज्ञाज्ञयोः पृथगुपदेशदर्शनात् स्वप्रयोजनमुद्दिश्याज्ञः कर्मण्यधिकृतः प्रवर्तते तद्विपरीतस्य ज्ञस्य स्वव्यतिरेकेण प्रयोजनाभावानुभवप्रमाणतः तत्प्रवृत्तिरनुपपन्ना स्यात्तराम् । किं च इहामुत्रफलभोगार्थमुत चित्तशुद्ध्यर्थमथ वा ज्ञानार्थमाहोस्वित् ज्ञानोपत्त्यनन्तरं शरीरस्थितिनिर्वाहार्थं वा तत्तत्कार्योचितकर्मप्रवृत्तिः स्यादिति चेत्, नाद्य, नित्यादिसाधनचतुष्टयसम्पद्दशायामेवेहामुत्रविजृम्भितस्रक्चन्दनादिस्वर्गादिसम्भवभोगतृष्णायाः वान्ताशनमूत्रपुरीषादिवत् परित्यक्तत्वात् नेहामुत्रफलभोगसिद्धये पुनः कर्मप्रवृत्तिरुपपद्यते । चित्तशुद्ध्यर्थं वा प्रवृत्तिरिति चेत्, न द्वितीयः, चित्तशुद्धिहेतुकज्ञानस्य पुरैवोत्पन्नत्वात् न तदर्थमीश्वराराधनलक्षणनिष्कामकर्मप्रवृत्तिरुचिता । वेदान्तश्रवणादिकर्म करणीयमिति चेत्, न तृतीयः, चित्तशुद्धिज्ञानान्तरालापेक्षितश्रवणादेः ज्ञानोदये सति तत्प्रतियोग्यज्ञानेन सार्धं परिसमाप्तत्वात् न श्रवणादिकर्मणः करणीयताऽवकाशः । उत्पन्नज्ञानस्यापि शरीरस्थितिनिर्वाहार्थं किंचित्कर्तव्यं स्यादिति चेत्, न चतुर्थः, ब्रह्मैवाहमहमेव ब्रह्मेति प्रत्यगभिन्नब्रह्मज्ञानं प्राप्य निवृत्तस्वाज्ञानः सन्नज्ञजनदुस्त्यजैषणात्रयतो व्युत्थाय शरीरस्थितिमात्रप्रयोजनो भूत्वा नैष्कर्म्यपदमारूढ ब्रह्मात्मना यो ऽवतिष्ठते शरीरस्थितिमात्रप्रयोजनभिक्षाचरणादावपीदं ममेत्यभिमानवैकल्येन स्वाद्वस्वादुविचारणहेतुस्पृहाऽभावान्न तत्कर्मतापदमर्हति । तस्मात् ज्ञस्य सर्वप्रमाणैः कुत्रचित्कचित् कस्यचित्कर्तव्यस्य कथा ऽपि दुर्लभेति सिद्धम् ॥ १६ ॥

यतः 'न कर्मणामनारम्भात्' इत्यादिना 'मोघं पार्थ स जीवति' इत्यन्तेन चित्तशुद्धिपर्यन्तमधिकृतेन कर्म कर्तव्यमिति प्रतिपाद्य ततः चित्तशुद्ध्या सर्वकर्मसन्यासलक्षणज्ञानोत्पत्तौ ज्ञानिनः किंचिदपि कर्तव्यं नास्तीति सर्वज्ञो भगवानतः एवाह—यस्त्विति द्वाभ्याम् ।

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

यस्त्विति । यस्तु सर्वकर्मसंन्यासलक्षणसाङ्ख्यनिष्ठामारूढो योगी । अज्ञजनवैलक्षण्यद्योतकस्तुशब्द । तुशब्दार्थं स्पष्टयति—मानव इति । नवं नव सकल्पविषयजात कामयत इति नव कामी अयं नवो मेति तद्विपरीतो मानव अकामी सन्यासीत्यर्थ । स्वरतिहेतुदारादिपरित्यागात् न तस्य रतिरस्तीति तत्राह—आत्मेति । प्रत्यगात्माभिन्नपरमात्मन्येव रति रमणं विश्रान्ति यस्य सो ऽयमात्मरतिरेव स्यात् 'स वा एप एव पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्माऽऽनन्द स स्वराड् भवति'[१] इति श्रुते । यत एवमत संन्यासिना स्वात्मरतिं विहाय स्वव्यतिरिक्तशब्दादिविषयरति न कार्येत्यर्थ । शब्दादिविषयरमणाभावे कथं तृप्ति स्यादिति तत्राह--आत्मेति । यथा आत्मरति तथा आत्मन्यपि तृप्तश्च भवति । बाह्यशब्दादिविषयनैरपेक्ष्येण भूमब्रह्मात्मानन्देनैव तृप्तत्वात् । 'नित्यतृप्तो ऽप्यभुञ्जानो रमते स्वात्मना ऽऽत्मनि ।' इति श्रुते । बाह्यविषयमभुञ्जानस्य संतुष्टि कथमिति तत्राह— आत्मेति । यद्वदात्मरति आत्मतृप्त तद्वत् ब्रह्मात्मन्येव च स संतुष्टो भवति । ब्रह्मात्मव्यतिरेकेण बाह्यवैषयिकतुष्टिहेत्वज्ञानाभावात् .

'संतोषामृतपानेन ये शान्तास्तृप्तिमागता ।
आत्मारामा महाऽऽत्मानस्ते महापदमागता ॥'

इत्यादिश्रुते । न च रतितृप्तितुष्टीनामेकार्थत्वेन पुनर्वचो मन्तव्यम्, अर्थभेदसद्भावात् । प्रत्यगभिन्नब्रह्मविषयकाभिलापो मोदो रतिरित्युच्यते । विषया-

[१] छा. ७ २५

न्तरस्मृतावुदितायामपि तदुपेक्षया ब्रह्मात्मसुखानुभव प्रमोद तृप्तिरित्युच्यते । विषयान्तरविस्मरणपूर्वकं प्रत्यगानन्दाभिन्नपरमानन्दस्वरूपेणावस्थान परमानन्द संतुष्टिरित्युच्यते । 'मोद प्रमोद आनन्द' इति श्रुते । एवमात्मरतेरात्मतृप्तस्यात्मसंतुष्टस्यापि संन्यासिनो विदेहकैवल्यावाप्तये किंचित्कर्तव्यं स्यादिति तत्राह---नेति । तादृशब्रह्मात्मनिष्ठस्य कृतार्थतापदमारूढस्य कदाचित्कुत्रचित्कथंचिदपि कार्यमकार्यं कर्तव्यमकर्तव्यं वा कर्म न विद्यते, 'न तस्य कार्यं करण च विद्यते',

'कृतकृत्यमद्य मे नष्ट कर्तव्य वा ऽपि न कश्चित्'

इत्यादिश्रुते ॥ १७ ॥

तादृशस्य नैष्कर्म्यपदमारूढत्वेन कर्तव्यकर्माभावे ऽपि तत्करणे कश्चिदर्थो भविष्यतीति तत्राह—

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

नैवेति । कर्माकर्तृतापदमारूढस्य तस्य ब्रह्मात्मविद सन्यासिन कृतेन स्वाश्रमोचितेन कर्मणा तद्विपरीतेन वा अर्थ प्रयोजन नैव विद्यते ।

'नैव तस्य कृतनार्थो न श्रुतिस्मृतिविभ्रमै ।
निर्मन्दर इवाम्भोधि स तिष्ठति यथा स्थित'

इति श्रुत । कर्मकरणत प्रयोजनाभावे ऽपि प्रत्यवायानुत्पत्तये स्वरूपाच्युतय वा कर्म कर्तव्य स्यादिति तत्राह—न कश्चनेति । अकृतेन कर्माकरणेन कश्चन कश्चिदपि कर्माकरणप्रभव प्रत्यवायो न चास्ति । नैष्कर्म्यलक्षणब्रह्मात्म

निष्ठाऽच्युतस्य निरहंभावस्य संन्यासिनो विधिनिषेधातीतत्वात् 'वाचामतीतविषयो विषयाशादशोज्झित ' इति श्रुते । एवं विधिनिषेधातीतत्वेऽपि स्वप्राप्यत्वेन मोक्षरूपो यो ऽर्थः तं प्रति देवमनुष्यभूतकृतविघ्नशान्तये शरभविनायकदुर्गाऽऽदिदेवतोद्देशेन किंचित्कर्म कर्तव्य स्यादित्यत आह—नचेति । अस्य ब्रह्मात्मनिष्ठस्य ब्रह्मादिस्तम्बान्तभूतेषु स्वाविद्याद्वयतत्कार्यमोक्षेऽर्थे मात्मत्वादिदोषरहिते नित्यासे मिथ्याभूतदेवमनुष्यभूतविघ्नशान्तये कश्चिदपि व्यपाश्रय आश्रयणीयत्वेन न चास्ति । सम्यग्ज्ञानोदयमात्रेण स्वाज्ञाननिवृत्तिसमकालमेवाविद्याद्वयतत्कार्यनिवृत्तिलक्षणस्य मोक्षस्य प्राप्तत्वात् तदा स्वव्यतिरेकेण देवमनुष्यभूततत्कृतविघ्नतन्निवर्तकशरभविनायकदुर्गाऽऽदीनामभावात् किंचिद्व्यपाश्रयता स्यादित्यर्थ । मुक्तस्यैवमस्तु, मुमुक्षोर्मोक्षविघ्नशान्त्यै किंचिद्व्यपाश्रयता स्यादिति चेन्न, देवादीना तद्विघ्नकरणासमर्थत्वात् 'तस्य ह देवाश्च नाभूत्या ईशते' इति श्रुते । एवभूतस्याधिकारिणो न किंचित्कर्तव्यमस्तीति फलितो ऽर्थ ॥ १८ ॥

यस्मादेवं ब्रह्मात्मनिष्ठस्य

'नैष्कर्म्येण न तस्यार्थस्तस्यार्थो ऽस्ति न कर्मभिः ।
न समाधानजाप्याभ्या यस्य निर्वासनं मन ॥'

इति श्रुत्यनुरोधेन कस्यचिदपि कर्तव्यस्याभाव प्रदर्शित । तस्माच्च सर्वत - संप्लुतोदकस्थानीयब्रह्मात्मज्ञानहेतुचित्तशुद्ध्यभावाद्दर्थं त्वया कर्मैव कर्तव्यमित्याज्ञापयति—

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

तस्मादिति । यस्मादकिंचित्कर्तव्यतात्स्वलक्षणज्ञाननिष्ठाविकलोऽसि चित्तशुद्ध्यभावात् कर्मफलासक्तचेतसामनर्थपरंपराया अनिवार्यत्वाच्च, तस्मात्तादृशानर्थनिवृत्तिहेतोर्बाधककर्मफलप्रसक्तकर्तृत्वाभिमानविकलः सन् श्रौतस्मार्तानुगृहीतं स्वाश्रमोचितं नित्यं नैमित्तिकं च कर्म मया कार्यं कर्तव्यमिति समाचर सम्यगनुष्ठानं कुरु । यावज्जीवमनुष्ठेयं किमिति तत्राह—सततमिति । चित्तशुद्धिपर्यन्तमित्यर्थः । एवं निष्कामकर्मानुष्ठानतः किं स्यादिति तत्राह—परमिति । हि यस्मात्कर्मफलेष्वसक्तः पूरुषः पुरुषो निष्कामकर्मानुष्ठाता स्वाश्रमोचितं कर्म समाचरन्सन् चित्तशुद्धिसंजातज्ञानद्वाराऽविद्याद्यतत्कार्यपरत्वेन विमानात् परं ब्रह्मात्मस्वरूपावस्थानलक्षणं मोक्षमाप्नोति, 'ब्रह्मविदाप्नोति परम्'[1] इति श्रुतेः ॥ १९ ॥

कथं पुनर्निष्कामकर्मानुष्ठानान्मोक्षप्राप्तिरित्यत्र शिष्टाचारं प्रमाणयति—

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

कर्मणेति । ईश्वराराधनलक्षणेन चित्तशुद्धिपर्यवसायिना स्वाश्रमोचितेन निष्कामकर्मणैव पूर्वे त्वादृशा विद्वांसः क्षत्रियाः संसिद्धिं प्रत्यगभिन्नब्रह्मरूपावस्थानलक्षणां मुक्तिम् आस्थिताः प्राप्तुमुद्यताः । के ते ? स्वयमनुष्ठाय जनैरपि निष्कामकर्म कारयतीति जनकः, औरसानामिव प्रजानां परिपालकत्वाद्वा जनकः, 'जनको जनक' इति वा उ जना धावन्ति'[2] इति श्रुतेः । यद्वा स्वाज्ञानोत्थे जगति स्वज्ञानतो नष्टेऽथ कः पुमान्

[1] तै २ १
[2] बृ २ १

शिष्यते इति तद्भावापन्नो जनकः। एवंरूपो जनक आदिर्येषां ते जनकादयः। आदिशब्देन अश्वपतिप्रभृतयो गृह्यन्ते। तेषां प्रसिद्धिद्योतको हिशब्दः। ते जनकादयः संप्राप्तसम्यग्दर्शना उत तत्पदमारोढुमिच्छवः? संप्राप्तसम्यग्दर्शना यदि ते क्षत्रियाणां कर्मसंन्यासाभावप्रमाणतः कर्मसामान्यसंन्यस्य मिथ्या प्रारब्धायत्ता इव लोकस्योन्मार्गनिवृत्तये कर्म कुर्वन्तः सन्तः संसिद्धिमास्थिताः मुक्तिं प्राप्ताः। यदि ते सम्यग्ज्ञानपदमारोढुमिच्छवस्तदा निष्कामकर्मानुष्ठानजनितचित्तशुद्धिहेतुकसम्यग्ज्ञानद्वारा क्रमेण संसिद्धिमास्थिताः, इदानीं चित्तशुद्धिसाधने प्रवृत्ता इत्यर्थः। कर्मयाथात्म्यमजानद्भिः जनकादिभिः कृतमिति तद्याथात्म्यविदामपि करणीयं किमिति तत्राह—कर्तुमर्हसीति। कर्मयाथात्म्यं ते न जानन्त्यहमेव जानामीति यदि मन्यसे कृतकृत्यानां जनकादीनामिव तादृशं ज्ञानं न तवास्ति, प्रारब्धकर्मायत्तत्वात्; यदि स्यात् तथा ऽपि लोकस्य स्वेच्छाऽऽचारनिवारणं लोकसंग्रहः, तमेवापि प्रयोजनं पश्यन् जनकादय इव कर्मकर्तुमर्हसि, न त्यक्तुमित्यर्थः॥ २०॥

कर्मयाथात्म्यविदा लोकसंग्रहार्थं किंचिदपि कर्म न करणीयमित्यत्र श्रुताध्ययनसंपन्नत्वेन यद्यप्यभिमतस्त्वं तथा ऽपि लोकस्योन्मार्गनिरसनादीश्वरप्रसादेन झटिति सम्यग्ज्ञानमुदेति इति निश्चित्य नित्यकर्म करोषि चेत् त्वामनुसृत्य सर्वे ऽपि प्रवर्तन्त इत्याह—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ २१॥**

यदिति। श्रुताध्ययनतदर्थानुष्ठातृत्वेन दिगन्तविश्रान्तकीर्तिः श्रेष्ठः विद्वान् यद्यच्छ्रुतिस्मृतिविहितं तत्प्रतिषिद्धं वा कर्माचरति, तत्तदेव विहितं प्रतिषिद्धं वा सामान्यजनो ऽपीतरः कर्माचरति। अज्ञस्य विवेकयनुकरणं

कथमिति तत्राह—अनुवर्तत इति । स प्रसिद्धो विद्वान् यत्कर्मकाण्डमुपासनाकाण्डं ज्ञानकाण्डं वा प्रमाणं कुरुते, अज्ञजनो ऽपि तदेवानुवर्तते ; स्वतो विवेकाभावात्तदाचरणावलोकनतस्तत्राभिनिवेशपूर्वकं प्रवर्तत इत्यर्थ ॥२१॥

लोकमर्यादास्थापनहेतुकर्माचरणे यदि ते विचिकित्सा स्यात् , तदा तत्र कर्तव्याकर्तव्यसंबन्धास्पृष्टमपि सदाचारे प्रवृत्तं सर्वात्मभूतं परमेश्वरं मा दृष्टान्तत्वेन किं न पश्यसीत्याह—न म इति त्रिभि. ।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

न म इति । हे पार्थ ! वागगोचरनिराकारपरब्रह्मस्वरूपो ऽहमेवेति सर्ववेदान्तप्रसिद्धत्वेन ज्ञानिभि भावनीयस्य परमेश्वरस्य मे मम त्रिषु लोकेषु तदुपलक्षितेष्वनन्तकोटिब्रह्माण्डेषु किंचनाण्वपि न कर्तव्यं कर्मास्ति, स्वेतरकलनाऽभावात् ; 'निरस्ताविद्यातमोमोहो ऽहमेव' इति श्रुते । अनवाप्तावाप्तयं त्वया ऽपि किंचित्कर्तव्यं स्यादिति तत्राह—नेति । अनवाप्तं सदवाप्तव्य प्रापणीय न मे वस्तुजातमस्ति, अवाप्तसमस्तकामत्वात् ; 'आत्मकाम आप्तकामो निष्कामो जीर्णकाम·' इत्यादिश्रुते । तव आप्तकामत्वेन कर्मणो ऽकिंचित्करत्वात् त्वया ऽपि कर्म नानुष्ठेयमिति तत्राह—वर्त इति । कर्मकरणाकरणाभ्यामभ्युदयप्रत्यवायाभावे ऽपि त्वादृशलोकस्योन्मार्गनिरसनाय स्वनिश्वासभूतश्रुतिस्मृतिचोदिते नित्यादिकर्मणि प्राकृतलोकवद्वर्त एव च, 'एष सेतुर्विधरण एषा लोकानामसंभेदाय[1]' इति श्रुते । अवधारणचकाराभ्यामेवं कर्मणि वर्तमानं मा न पश्यसि किमिति द्योत्यते ॥ २२ ॥

[1] बृ ४. ४. २२.

ईश्वरप्रसादतो झटिति सम्यग्ज्ञानार्थं खलु लोकसंग्रहाय कर्मानुष्ठानम्। तत्र सम्यग्ज्ञानप्राप्येश्वरत्वात् त्वया लोकसंग्रहार्थं कर्म न कर्तव्यमिति तत्राह—

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

यदि हीति। हे पार्थ! सम्यग्ज्ञानप्राप्य ईश्वरो ऽप्यहमतन्द्रित अप्रमत्त सन् जातु कदाचित् श्रौतस्मार्तकर्मणि न वर्तेय यदि, तदा मदनुष्ठानानुकारिण नैरर्णिका भविष्यन्तीति मनुष्या सर्वेश्वरस्य मम वर्त्म मार्गं सर्वश सर्वप्रकारैरनुवर्तन्ते अनुकरिष्यन्तीति निश्चयद्योतको हिशब्द ॥ २३ ॥

सर्वेश्वरस्य तव वर्त्मानुवर्तनं मनुष्याणामुचितमेव, तत्र नेषा का हानिरिति तत्राह—

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

उत्सीदेयुरिति। सर्वज्ञ ईश्वरो ऽहं नित्यादि कर्म न कुर्यां यदपीश्वरस्य मम तत्करणाकरणाभ्यामभ्युदयप्रत्यवायाभावे ऽपि 'यान्यस्माक सुचरितानि, तानि त्वयोपास्यानि, नो इतराणि[1]' इत्यादिमन्त्रि श्वासभूतश्रुत्यर्थ बहिर्मुखाणामनुग्रहाय जगच्चननिर्वाहक नित्यादि कर्म न कुर्यां चेदह त इमे परमेश्वरानुष्ठानमवलोक्य तथाकारिणो लोका उत्सीदेयु पतिता भवेयु मद्भावविधुरत्वात्। तथा ऽपि त्वया सर्वेश्वरेण कर्म न कर्तव्यमिति तत्राह—

[1] तै १ ११ २

संकरस्येति । कर्म यदि न कुर्यां संकरस्य तत्तद्वर्णानुष्ठेयधर्मलोपस्य चशब्दात् तत्तदाश्रमोचितधर्मानुष्ठानाभावस्य अहमेव कर्ता स्याम् । तेन तव किमिति तत्राह—उपहन्यामिति । मत्यमपिबद्धाज्ञानतो जायन्त इति सर्वाः प्रजाः, ता अहमेवोपहन्यां स्वाविद्याविजृम्भिते जननमरणात्मके संसारे प्रवर्तको ऽहमेव स्याम् । एवं प्रजोपहत्या तव किं स्यादिति चेत मम लोकानां स्वपदप्राप्तिहेतुत्वेनोपायोपेयभूतनिःश्रेयसप्रवर्तकत्वात् तद्वैपरीत्येन प्रजोपहति-रनुपपन्नेत्यर्थ ॥ २४ ॥

यस्मात्सर्वज्ञ परमेश्वरो ऽप्यहं लोकसंग्रहार्थे कर्मणि प्रवृत्तः, तस्मात् मयेव त्वया ऽन्येन वा ऽप्यज्ञानुकम्पया कर्म कार्यमित्याह—

## सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथा ऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

सक्ता इति । हे भारत ! यथा येन प्रकारेण कर्मठा. किंचिद्विकलं कर्म फलोपधायकं न भवतीति भिया नित्यादिकर्मणि सक्ता तत्कर्मफला-भिलाषयुक्ता सन्त कर्म कुर्वन्ति । के ते ? कर्मब्रह्मयाथात्म्यं न विदन्तीत्य-विद्वांस । अविद्वानिव कर्मकरणे बद्ध स्यादिति तत्राह—असक्त इति । तथा कर्मब्रह्मयाथात्म्यं वेत्तीति विद्वानपि स्वकर्तव्येषु नित्यादिकर्मसु कर्तृ-स्वाभिमानवैकल्येन तत्फलेष्वसक्तः फलाभिसन्धिविधुरो भूत्वा लोकमर्यादा-स्थापनमात्रप्रयोजनत्वेन लोकसंग्रहं चिकीर्षु सन् कर्तव्यमिति कर्म कुर्यात् ॥ २५ ॥

स्वफलमिच्छता बन्धकारिषु बहुलतरायाससाध्येषु कर्मसु कर्मठाः प्रवृत्ताः सन्तो मुधा क्लिश्यन्तीति कृपया तान्प्रति सर्वकर्मसंन्यासलक्षणब्रह्म-कैवल्यज्ञानमेवोपदेष्टव्यमिति तत्राह—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्॥ २६॥**

नेति। श्रुताध्ययनसपन्नै अस्माभि कर्तव्य कर्म भोक्तव्यं तत्फलमिति कर्मतत्फलानुषङ्गिना कर्मब्रह्मयाथात्म्याज्ञाना कर्मतत्फलविषयकबुद्धिभेद कर्मविषयकश्रद्धाचालन विद्वान् ज्ञानी कर्मब्रह्मयाथात्म्योपदेशतो न जनयेत, यदि तेषु कृपा स्यात् तदा कर्मब्रह्मयाथात्म्योपदेश विना स्वय निष्कामकर्मणि युक्तो भूत्वा तत्र दृढाभिनिवेशवानिव कर्माणि समाचरन् सन् अज्ञजनैरीश्वराराधनलक्षणनिष्कामकर्मनिष्ठोपदेशत चित्तशुद्धिपर्यवसायीनि सर्वकर्माणि जोषयेत्कारयेदित्यर्थ। अन्यथा चेत् स्वय कृतार्थत्वबुद्ध्या विद्वान् नित्यादिकर्माकुर्वन् कर्मब्रह्मतत्त्वज्ञानरहितो ऽज्ञजनबुद्धिभेदनात् तेषामनन्तकोटिजन्मरूढमूला ऽपि कर्मश्रद्धा निवर्तते। विदुषा केवलकृपयोपदिष्ट ज्ञानमपि चित्तशुद्ध्यभावात् यथावन्नोदेति, तस्मादुभयभ्रष्टा स्यादिति मत्वा स्वस्य कर्तव्याभावे ऽपि तदनुकम्पया स्वय कुर्वन् तैरपि यथावत्कारयेदिति भाव॥ २६॥

अविदुषेव विदुषा ऽपि कर्म कर्तव्य चेत्तयो को विशेष इत्यत आह—प्रकृतेरिति द्वाभ्याम्।

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहंकारविमूढात्मा कर्ताऽहमिति मन्यते॥ २७॥**

प्रकृतेरिति। ज्ञानकर्मेन्द्रियेन्द्रियार्थेष्वात्माध्यासरूपेणाहंकारेण विमूढ आवृत आत्मा ऽन्त करण यस्य सो ऽयमहकारविमूढात्मा कार्यकरणसघाताभिमानी केवलकर्मठ सत्त्वादिगुणसाम्यावस्थाया प्रकृतेरव्यक्तामि-

काया विजृम्भितै सत्त्वादिभिस्त्रिभिर्गुणैस्तत्कार्यैरिन्द्रियैश्च सर्वश सर्वप्रकारै क्रियमाणानि लौकिकवैदिककर्माणि, तेषामहमेव कर्तेति मन्यते ॥ २७ ॥

अविद्वन्निष्ठ कर्तृत्वात्मक विशेषमुक्त्वा तद्वैपरीत्येन विदुषो विशेष माचष्टे—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

तत्त्वविदिति । नाह सत्त्वादित्रिगुणवान् निर्गुणत्वात्, नाह कर्म न मे कर्माविन्त्रियत्वेनाहङ्कारममकाराभावादिति गुणकर्मविभागौ, तयो गुणकर्म विभागयो तत्त्व याथाऽऽत्म्य स्वाविद्याविजृम्भितत्वेन मिथ्यात्वज्ञान तद्विपरी तत्वेन गुणकर्मविभागास्पृष्ट ब्रह्मैवाहम् अहमेव ब्रह्मेति प्रत्यगभिन्न ब्रह्म च वेत्तीति तत्त्ववित् । अतत्त्वविद्विलक्षणत्वद्योतक तुशब्द । हे महाबाहो' एवभूतो ब्रह्मनिष्ठ सन्यासी गुणा गुणकार्याणि इन्द्रियाणि गुणेषु तत्कार्येषु शब्दादिविषयेषु स्वभावतो वर्तन्ते ब्रह्मात्मन सकलविकारास्पृष्टत्वेन तदा स्पदत्वेन च स्वभिन्नेन्द्रियन्द्रियार्थवर्गाभावात् न मे प्रवृत्ति निवृत्तिर्वा कदाचित् कुत्रचिदप्यस्तीति मत्वा कर्तृत्वाद्यभिमानवैकल्येन न सज्जते, आकाशवदसङ्गत्वात्, 'असङ्गो न हि सज्जते[1]' इति श्रुते ॥ २८ ॥

'न बुद्धिभेद जनयत्' इति श्लोकोक्तमर्थमुपसहरति—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

[1] बृ ४ ४ २१

प्रकृतेरिति । ये ऽनात्मविदो गुणसाम्यावस्थायाः प्रकृतेरुद्रिक्तैः सत्त्वादिभिस्त्रिभिर्गुणैः संमूढाः सम्यक् गाढमावृताः सन्तो गुणकर्मसु इन्द्रियेन्द्रियार्थेष्वात्मत्वात्मीयत्वाभिमानदोषतः सज्जन्ते ससक्ता भवन्ति । कर्मफलाभिलाषावृतदृष्टीनां कर्मतत्फलातिरिक्तज्ञानाभावात् सत्कुलप्रसूतैरस्माभिः कर्मैव कर्तव्यम्, तत्फलमवश्यं भोक्तव्यमिति यथा ब्रह्मात्मभावो दुर्लभः यस्मिन्ननुवृत्ते त्रिविधपरिच्छेदशून्यविभवे प्रत्यगभिन्ने ब्रह्मणि तदज्ञानाग्निहेतु मायया क्रियत इति कृत्स्नमविद्याद्वयतत्कार्यजातं व्यावृत्तमभिधीयते, अनुवृत्तरज्ज्वादिसत्ताऽतिरेकेण तद्व्यावृत्तसर्पाभाववदनुवृत्तब्रह्मातिरेकेण व्यावृत्तकृत्स्नाभावात् । कृत्स्नं प्रत्यगभिन्नं ब्रह्म तद्विपरीतमकृत्स्नं तद्विदन्तीत्यकृत्स्नविदस्तानकृत्स्नविदः परिच्छिन्नदृष्टीनत एव मन्दप्रज्ञान् तद्विपरीतब्रह्मात्मभावारूढः कृत्स्नवित् सर्वज्ञो विद्वान् न विचालयेत्, तद्बुद्धिभेदं न कुर्यादित्यर्थः ॥२९॥

अकृत्स्नविद्बुद्धिचालनाभावाय कृत्स्नविदाऽपि स्वचित्तद्वयव्यावृत्ति यावत्तावच्छ्रौतस्मार्तानुगृहीतस्वाश्रमोचितं नित्यादि कर्म कर्तव्यम् । न त्वकृत्स्नवित् सर्वत्रात्मत्वात्मीयत्वाभिमानदर्शनात् 'ब्रह्मविदचित्तो भवति' इति श्रुत्यनुरोधेन कृत्स्नवित्पदारोहाय त्वया मदुक्तप्रकारेण स्वाश्रमोचितं कर्मैव कर्तव्यमिति निर्दिशति—

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

मयीति । प्रत्यगभिन्नब्रह्मरूपे वासुदेवे मयि ब्रह्मात्मानमधिकृत्य यद् कर्म तत्फलजातं भवतीत्यध्यात्मं तस्मिन्नध्यात्मं तदाराधनरूपनिष्कामकर्मणि नाहं कर्मकर्ता न तत्फलभोक्ता सर्वं वासुदेव एवेति तद्भावापन्नं चेतः, तेनाध्यात्मचेतसा विहिताविहितानि सर्वाणि कर्माणि संन्यस्य ततो युध्यस्व ।

आशीर्युक्तस्य कथं त्वयि सर्वकर्मसंन्यासो भवेदिति तत्राह—निराशीरिति । शत्रूणां पराजयपूर्वकमस्माकमेव जयो भवतु इत्याद्याशीः कामना यस्मान्निर्गता स त्वं निराशीः विषयजातसंकल्पशून्यत्वात् संन्यास उपपद्यत इत्यर्थः । स्वशरीरतत्सम्बन्धिना सत्त्वात्तेष्वहंकारममकाराविष्टस्य चित्तशुद्धिहेतुयुद्धकर्मे प्रवृत्तिः कथमिति तत्राह—निर्मम इति । स्वशरीरतत्सम्बन्धिदारपुत्रबन्धुधनक्षत्रादिषु निर्गतो ऽहंकारो ममकारश्च यस्मात् स त्वं निर्ममो भूत्वा पुनः स्वदेहतत्सम्बन्धिषु गतागतेष्वपि विगतः परित्यक्तः ज्वरः शोकः संतापो यस्मात् स त्वं विगतज्वरः सन् युध्यस्व । यतः त्वं क्षत्रियः, युद्धस्य क्षत्रियधर्मत्वात्, अतो युद्धाख्यं कर्म कुर्वित्यर्थः ॥ ३० ॥

एवं स्वमतानुवर्तिनां क्रममुक्तिमादिशति—

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तो ऽनसूयन्तो मुच्यन्ते ते ऽपि कर्मभिः ॥३१॥**

य इति । ये श्रुत्याचार्योपदिष्टे ऽर्थे ऽतीव श्रद्धा ऽऽस्तिक्यबुद्धिर्येषां ते श्रद्धावन्तः उच्चावचकर्मफलेषु मा न विद्यते नव कामो ऽभिलाषो येषां ते मानवाः, निष्कामकर्मानुष्ठातारः त्रैवर्णिकाः सद्यः फलविकलनिष्कामकर्मण्यस्मान् नियोजयतीति परमकारुणिके मय्यनसूयन्तः सन्तो मे मम परमेश्वरस्य श्रुतिस्मृतिसेवितमिदं मतं नित्यं चित्तशुद्धिपर्यन्तमनुतिष्ठन्ति, ते ऽपि चित्तशुद्धिगम्यज्ञानद्वारा कर्मभिः कर्मबन्धैः विमुच्यन्ते क्रमेण मुक्ता भवन्तीत्यर्थः ॥ ३१ ॥

स्वमतविपरीतानुसारिणां प्रत्यवायं प्रकटयति—

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

ये त्विति । ये तु तद्विपरीता एतन्मदीय मतमभ्यसूयन्त सन्तो नानुतिष्ठन्ति । तदनुष्ठानाभावाविर्भूतस्वबुद्धिदोषात् निर्दोषे मदीये मते ऽपि दोषमारोप्य यतो नानुवर्तन्ते तुल्यविषयाऽऽनुतद्दृष्टित्वात्, अत अचेतसः सर्वेषु सगुणनिर्गुणात्मकविराड्हिरण्यगर्भशबलाक्षिज्ञानेषु विक्षेपद्वयकलितदृष्टित्वात् विमूढ चित्त येषां तान् सर्वज्ञानविमूढानत एव नष्टान्विद्धि, नित्यप्रबोधाभावात् ॥ ३२ ॥

केवलराजशासनमपि न केनापि लङ्घयितु शक्यते, यान्विना क्षणमात्रमपि जगच्चक्र न चलति 'भीषा ऽस्माद्वात पवते'[1] इत्यादि श्रुत्यनुरोधेन तादृशा वातादयो ऽपि महाक्रोधवशंवदप्राणान्तिकदण्डोद्यतकरराजपरिसरवर्तिभृत्या इव नित्यं भीता सन्त अद्यापि यच्छासन शिरसा धृत्वा स्वे स्वे कर्मणि प्रवर्तन्ते । एव चण्डशासने त्वयि सति सर्वे त्वन्मतानुसारेण निष्कामा सन्त सर्वेन्द्रियनिग्रहपूर्वक स्वधर्मानुष्ठान विना परधर्मान् कस्मात्कुर्वन्तीति तत्राह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

सदृशमिति । पूर्वजन्मकृतशुभाशुभकर्मसंस्कारतो वर्तमानजन्मनि तद्वासनाऽभिव्यक्ते प्रकृतत्वात् प्रकृतिरित्युच्यते । तस्या वासनारूपाया स्वप्रकृते सदृशमनुरूपं चेष्टते । एव प्रकृतिगुणदोषानभिज्ञ चेष्टता नाम, न तज्ज्ञ इति तत्राह—ज्ञानवानपीति । मिथ्याभूता प्रकृतिरिति ज्ञान यस्य सो ऽपि चेष्टते । अपिशब्दस्वारस्यात् प्रकृतिगुणदोषविचारकस्तु

[1] तै २ ८.

सदसत्पदार्थविवेकाकुशलो ऽज्ञो लोके चेष्टत इति किमु वक्तव्यमिति योत्यते। भूताना स्वतन्त्रत्वेन स्वप्रकृतिवशता नोचितेति तत्राह—यान्तीति। इन्द्रियद्वयानिग्रहाविर्भूतानन्तकोटिजन्मनिदानवासनारूपप्रकृतिवशमनिच्छन्त्यपि तद्वश प्राप्य तया मोमुह्यमानानि सन्ति प्रकृतितो भवन्ति प्रकृतौ तिष्ठन्ति प्रकृतावेव निधन यान्तीति भूतानीत्युच्यन्ते। तानि भूतानि स्वा स्वा प्रकृति यान्ति तेषा स्वाज्ञानकवलितस्वज्ञानत्वेनासमर्थत्वात्। तथा ऽपि तै प्रकृतिर्निग्राह्येति तत्राह—निग्रह इति। तै कृतप्रकृतिनिग्रहोपायभूतेन्द्रियनिग्रह किं करिष्यति? प्रकृत्युन्मूलनाय मदुक्तनिष्ठाद्वयबहिर्मुखेन त्वया ऽन्येन वा स्वऽन्यतिरेकेण मिथ्याभूता ऽपि प्रकृतिर्दुर्निग्रहेत्यर्थ। प्रकृत्युन्मूलनाय त्वया किमुक्तमिति चेदुच्यते। स्वातिरिक्तसद्वासनानन्तकोटिजन्मवासनाऽऽत्मकप्रकृतिनिग्रहाय खलु सर्वज्ञेन मया सर्वेन्द्रियनिग्रहसहस्रतमदाराधनलक्षणनिष्कामकर्मनिष्ठा नैष्कर्म्यलक्षणप्रत्यगभिन्नब्रह्मनिष्ठा चेत्युपायो पेयभेदेन निष्ठाद्वय प्रकटितम्। तत्रोपायभूतनिष्कामकर्मनिष्ठाना स्वाधिष्ठेयमहत्तेर्धाशो निगृह्यते। सरूपविलयमश्नुत इत्यर्थ। महते सरूपविलयाविर्भूतचित्तशुद्धिगम्यसर्वकर्मसन्यासलक्षणब्रह्मज्ञाननिष्ठाना स्वाधिष्ठेयप्रकृतिनि शेष निगृह्यते। विरूपविलयमश्नुत इत्यर्थ। मदुक्तनिष्ठाद्वयानुवर्तिषु प्रकृतिनिग्रहोपाय फलवान्। मच्छासनपराङ्मुखत्वेनोपेक्षणीयेषु निग्रह प्रकृतिनिग्रहोपाय किं करिष्यति? तेषा दुर्लभत्वात् किमपीत्यर्थ ॥ ३३ ॥

सर्वस्य प्रकृतिसदृश प्रवृत्त्येन प्रकृतिशून्यपुरुषस्य दुर्लभत्वात् पुरुषप्रयत्नस्याकिंचित्करत्वेन विधिनिषेधबोधकशास्त्रानर्थक्य स्यादिति तत्राह —

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति वीप्सातः प्रतीन्द्रियमिति योत्यते । तेषामिन्द्रियाणामर्थे शब्दादिविषये अनुकूले रागः प्रतिकूले द्वेषः रागश्च द्वेषश्च रागद्वेषौ प्रतीन्द्रियार्थमवश्यंभावित्वेन व्यवस्थितौ । यस्मादस्य मुमुक्षोः श्रेयोमार्गस्य पथि तस्कराविव रागद्वेषौ परिपन्थिनौ तस्मात् श्रुत्याचार्यप्रसादात्प्रमाणदृष्टिः तयोः रागद्वेषयोः पूर्वबद्वशं नागच्छेत् रागद्वेषपुरःसरत्वात् सर्वप्रकृतेः; तथा सति स्वप्रकृतिं विहाय पुरुषप्रयत्नसाध्यशास्त्रार्थपर्यालोचनया कथमन्यथा भवतीति उच्यते ; नद्यां नक्रमिदृष्टतीति श्रवणादर्वाक् श्रुते ऽपि तदनादृत्य कश्चिद्यथा नदीं प्रविष्टो नक्रग्रस्तो नश्यति । तत्र नक्रो ऽस्तीति परोक्षितश्चेद्धालुः कश्चित् तामस्पृष्ट्वा तत्तारणोपायभूतनौकामारुह्य तां तीर्त्वा तत्पारमासाद्य निर्भयो जीवति, तथा शास्त्रदर्शनादर्वागिष्टानिष्टविषयेषु भवरागद्वेषपाशैः सर्वो ऽपि बध्यते । एवमनेकेषु सत्सु कस्यचित्पुरुषधौरेयस्यानन्तकोटिजन्मसुकृतपरिपाकवशाच्छ्रुत्याचार्यवाक्यश्रद्धेति । ततः परधर्मपरित्यागपूर्वकं स्वधर्मानुष्ठाने प्रवृत्तिर्भवति । ततो विद्वानिष्टविषयभवरागद्वेषौ तद्विषयविमुखीकरणतः स्ववशीकृत्य निःसपत्नः कृतार्थश्चरति । यत एवमतः पुरुषप्रयत्नसाध्यविधिनिषेधबोधकशास्त्रार्थस्य सफलत्वात् नानर्थक्यमित्यर्थः ॥३४॥

क्षत्त्रधर्मस्य पितृभ्रातृहिंसाहेतुत्वेन अननुष्ठेयत्वात् परिव्राडादिधर्मस्य तद्विपरीतत्वेन सुकरत्वात् तयोः धर्मत्वाविशेषात् स्वधर्मं परित्यज्य परधर्म एव कर्तव्य इति तत्राह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

श्रेयानिति । स्वस्य क्षत्रियस्य धर्मः स्वधर्मः युद्धादिः स्वधर्मो विगुणो ऽङ्गविकलो ऽपि श्रेयान् प्रशस्यतरः, कस्मात् ? साङ्गोपाङ्गतया स्वनु-

प्रितात् परिवादादिधर्मादहिंसारूपात् । परधर्मापेक्षया स्वधर्मस्य दुष्टत्वेन त्वाज्यानुष्ठेयमिति तत्राह— श्रेय इति । स्वधर्मे प्रवृत्तस्य निधनमपि श्रेयः स्वर्गादिप्रापकत्वात् । परधर्मानुष्ठाने को दोष इति तत्राह—भयेति । परेषां धर्मः परधर्मः रौरवादिनरकहेतुत्वेन भयमावहतीति भयावहः स्यात् निषिद्धत्वेन शिष्टगर्हितत्वात् । स्वधर्मो विगुणो ऽपि श्रेयानित्यर्थः ॥ ३५ ॥

इन्द्रियार्थध्यानगोचरौ रागद्वेषौ श्रेयोमार्गपरिपन्थिनाविति भगवतोक्तमवधार्य तन्मूलं ज्ञातुमिच्छन्नर्जुन उवाच—

अर्जुन उवाच—

**अथ केन प्रयुक्तो ऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

अथेति । अथशब्दः प्रश्नारम्भार्थः । हे वार्ष्णेय ! पूरुषः पुरुषः स्वानर्थहेतुभूतं पापं कर्तुमनिच्छन्नपि राजप्रेरितभृत्यवत् बलान्नियोजित इव केन हेतुना ऽयं प्रयुक्तः प्रेरितः सन् पापमधर्मं चरति ? तत्प्रवृत्तिरिष्टानिष्टविषयोस्थरागद्वेषप्रयुक्तेति चेत् , श्रुत्याचार्यप्रसादाज्ञातात्मानात्मविवेकतो विषयविमुखतया निगृहीतरागद्वेषस्यापि पुनः पापाचारदर्शनात् तयोर्मूलभूतः कश्चिदन्यः प्रवर्तकः स्यादिति प्रश्नः । न चानर्थमूलस्य परिहर्तव्यत्वेन तद्वेदनस्याकिंचित्करत्वात् न तत्प्रश्नार्हमिति वाच्यम् , तथाथाऽऽत्मज्ञानाभावे , परिहर्तुमशक्यत्वात् तदर्थं प्रश्न उपपद्यत इत्यर्थः ॥ ३६ ॥

अर्जुनप्रश्नानुरूपं प्रतिवचनं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाऽशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

काम इति । ब्रह्मादिस्तम्बान्तजन्तो सर्वानर्थप्राप्ति यन्निमित्ता स एष काम सर्वप्राणिहृदयाश्रितत्वेन प्रसिद्ध । कामापेक्षया क्रोधस्य प्रबलत्वेन कामादन्य क्रोध स्यादिति तत्राह—एष इति । स एष काम केनचित्प्रतिहतश्चेत् क्रोधत्वेन परिणमते । अतो ऽयमेव काम क्रोध एव, न कामाद्भिन्न क्रोधो ऽस्तीत्यर्थ । क्रोधाभिन्नस्य कामस्य कारण कार्यं वा किमिति तत्राह—रज इति । रजोगुणे समुद्भव सभूति यस्य सो ऽय रजोगुणसमुद्भव । रज कार्यमित्यर्थ । यद्वा रजोगुणस्य समुद्भव कारण काम एवेत्यर्थ । कामोत्पत्त प्रागनन्तर वा रजस प्रादुर्भावाद्रज कार्ये पुरुष कामो हि प्रवर्तयति । कामेन प्रेरितो ऽह पाप कर्माचरं तत्फल भोक्ष्यामीति पामरलोकप्रलाप श्रूयते । तर्हि कामितविषयपूरणत काम शाम्यतीति तत्राह—महाशन इति । महदपर्याप्तमशन यस्य सो ऽय महाशन कामस्य दुष्पूरकुक्षित्वप्रसिद्धे । तथा च श्रुति —

'न जातु काम कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥'

इति । तस्येत्यमीश्वरेण सृष्टत्वात् कामस्य तदनुकारिणो वा को दोष इति तत्राह—महापाप्मेति । महदधिक पापमेव यस्य रूप सो ऽय महापाप्मा । पञ्चमहापातकोपपातकादिप्रवर्तकत्वात् कामप्रेरितस्यापि जन्तो योग्यायोग्यविवेकाकुशलत्वेन नियमेन पापकर्मस्वेव प्रवृत्तिदर्शनात् । यत एवमतो रागद्वेषविजृम्भितससारमूल काम एव । तमेन काम वैरिण विद्धि ॥ ३७ ॥

कामस्य वैरित्व दृष्टान्तै स्पष्टयति—

**धूमेनाव्रियते वह्निर्यथा ऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

धूमेनेति । यथा प्रकाशको वह्निरप्रकाशकेन स्वव्याप्येन धूमेनाव्रियते । यथा आदर्शो दर्पण आगन्तुकमलेन चाव्रियते । यथोल्बेन जरायुणा गर्भवेष्टनचर्मणा गर्भः समावृत । तेन कवलितत्वात् तथा प्रकारत्रयवत् स्वव्याप्येनाप्रकाशकेन कामेनेदं प्रकाशात्मकमपि ज्ञानमावृतं कवलितमित्यर्थः ॥ ३८ ॥

इदंशब्दार्थज्ञानावरणस्य कामस्य वैरित्वं प्रत्याययति—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

आवृतमिति । हे कौन्तेय ! इदं ज्ञानमेतेन कामेनावृतमाच्छादितम् । कीदृशेनेत्याकाङ्क्षायामाह—नित्यवैरिणेति । कस्येत्यत आह—ज्ञानिन इति । कामो ऽनर्थकर इति जानातीति ज्ञानी, तस्य नित्यवैरित्वं कथमित्यत्र पुरा ऽनेनाहं सङ्कटे नियोजित, सो ऽय काम सर्वानर्थहेतुरिति तद्दोषात्यस्य ज्ञातत्वात् तदाविर्भावात् पूर्वं कामस्य नावसरं ददाति । कामस्येच्छाज्ञानिनस्तु कामकार्यावस्थायामनेनाहं संसारदु खे पातितो ऽस्मीति वैरित्वे ऽपि तदुत्पत्तिवेलायां तात्कालिकसुखहेतुत्वान्न नित्यवैरित्वम् । ज्ञानिनस्तु तदुत्पत्तिकार्यावस्थयोरपि कामस्यानिष्टत्वात् नित्यवैरित्वं सिद्धमित्यर्थ । तस्य रूपं किमिति तत्राह—कामेति । कामो ऽभिलाष इच्छैव रूप यस्य तेन कामरूपेण कामितार्थपूरणात् पूर्यत इति तत्राह—दुष्पूरेणेति । दु खेनाप्यस्य वुभिः न पूर्यत इत्यर्थ । कामस्य दुष्पूरत्व स्फोरयति—अनलेनेति । यत एवमतो हविषा ऽग्नेरिवालं पर्याप्तिः न विद्यत इत्यनल । तेनैवंविशेषणविशिष्टेन कामेन श्रुत्याचार्यप्रसादलब्धमपि ज्ञानमावृतमित्यर्थ ॥ ३९ ॥

रागद्वेषमूलता कामस्योक्त्वा इदानीं काममूल तज्जयोपायं चाह—इन्द्रियाणीति द्वाभ्याम् ।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

इन्द्रियाणीति । अस्य पूर्वोक्तस्य कामस्य वाक्श्रोत्रादिज्ञानकर्मेन्द्रियाणि कामसकल्पादिवृत्तिमन्मनश्च विषयाध्यवसायात्मिका बुद्धिश्चाधिष्ठान मूलमित्युच्यते, इन्द्रियादीनामस्याश्रयत्वात् । तदाश्रित्य खलु कामो विजृम्भते । स्वार्थेत तन्निरोधे कामो ऽकामो भवतीत्यर्थ । स्वाधिष्ठानमाश्रित्य काम किं करोतीति, उच्यते—आवृत्येति । किमावृणोति? ज्ञानमिति । यो ऽयं विवेकावरणत्वेन प्रसिद्ध स एष काम सदसद्विवेककुशल ज्ञानमावृत्य तिष्ठति । तिष्ठतु नाम, किं तेनेति तत्राह—विमोहयतीति । कम्? देहिन देहाभिमानिनम् । कैर्विमोहयति? तत्राह—एतैरिति । स्वाधिष्ठानैरेतै इन्द्रियादिभि देहिन ससाराटवीं प्रापय्य तत्रैव विविध मोहयति तद्रत स्नेह न मुञ्चतीत्यर्थ ॥ ४० ॥

काममूल प्रदर्श्य तत्समूलोत्पाटनोपायमाह—

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

तस्मादिति । भरता नाम कौरवा, तेषा श्रेष्ठत्वात् हे भरतर्षभ! यस्मात् स्वरूपज्ञानावारकत्वेन स्वाज्ञानतत्कार्यससारे पातयित्वा विमोहकत्वेन च तव काम एव रिपु, तस्मात् त्वमादौ सर्वानर्थमूलकामनिकृन्तनाय

मनोबुद्धिसहितानीन्द्रियाणि नियम्य कामं प्रजहि। स्वरिपुत्वद्योतको हिशब्दः। तेन मे को ऽपराध कृतो येन तं हन्मीति तत्राह—ज्ञानेति। श्रुत्याचार्योपलब्धं ज्ञानम्। तदेव स्वानुभूतिरूढं चेद्विज्ञानमुच्यते। ज्ञानं च विज्ञानं च ज्ञानविज्ञाने नि श्रेयसावाप्तिसाधने, तयोर्नाशकरत्वात् ज्ञानविज्ञाननाशनः, तम्। अत एवायं पाप्मा स्वाश्रिताना नरकपापकत्वेन निर्घृणत्वात् तस्माद्यथोक्तविशेषणविशिष्ट स्वापकारिणं निर्दयं कामं निर्मूलयेत्यर्थ. ॥ ४१ ॥

केन हेतुना कामो जेतुं शक्य इति तत्राह—इन्द्रियाणीति द्वाभ्याम्।

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

इन्द्रियाणीति। स्वमात्रदेहादिविषयेभ्यः चक्षुरादीनीन्द्रियाणि पराण्याहुः; पण्डिता इति शेषः। तद्ग्राहकत्वेन सूक्ष्मत्वात् तथेन्द्रियेभ्यः संकल्पविकल्पात्मकं मन. परमुत्कृष्टं मम चक्षु पट्वित्यादिना चक्षुरादीन्द्रियग्राहकत्वेन तत्प्रवर्तकत्वेन च सूक्ष्मत्वात्। तथा मनसस्तु निश्चयात्मिका बुद्धिः परा, मनोगतसंकल्पादिवृत्तेः निश्चयपूर्वकत्वेन तथात्वरूपेण तद्विलक्षणत्वेन च सुसूक्ष्मत्वात्। य पुन विषयजाततद्ग्राहकेन्द्रियतद्ग्राहकमनस्तद्ग्राहकबुद्धितद्वृत्तीना भावाभावप्रकाशकत्वेन सर्वान्तरो भवति, स एव खलु 'एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्' इति देहिशब्दार्थत्वेन प्रसिद्ध. प्रत्यगात्मैव परात्परतर इत्यर्थ ॥ ४२ ॥

इन्द्रियादिनिग्रहपूर्वकं निष्कामकर्मानुष्ठानचित्तशुद्धिप्राप्यसर्वकर्मसंन्यासलक्षणपरमहंसाश्रमाद् भगवन्तं कामोन्मूलनं भवतीत्युपसंहरति—

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥ इति ॥**

इति श्रीमद्भगवद्गीतासूपनिष० कर्मयोगो नाम तृतीयो ऽध्यायः

एवमिति । इन्द्रियद्वयोत्थकामादिविक्रिया बुद्धेरेव नात्मनः आत्मनस्तावदिन्द्रियद्वयप्रकाशकत्वेन तद्भावाभावप्रयुक्तगुणदोषास्पृष्टत्वेन निरतिशयसूक्ष्मत्वेन सर्वप्रत्यक्त्वेन न बुद्ध्यादेः परत्वादित्येवमुक्तप्रकारेण बुद्धेरन्तःकरणात् परं प्रत्यगात्मानं परमात्माभेदेन ब्रह्मैवाहमहमेव ब्रह्मेति बुद्ध्वा तद्भावापन्नात्मना ऽखण्डाकारबुद्धिवृत्त्या संकल्पविकल्पात्मकमात्मानं मनः संस्तभ्य कामसंकल्पादिवृत्तिशून्यं कृत्वा दुरासदशत्रुहननदक्षत्वात्त्वं हे महाबाहो ! मन्निष्ठाद्वयबहिर्मुखजनदुरासदं कुबुद्धिभिः काम्यत इति कामः इच्छाशरीरत्वात् कामरूपं शत्रुं मदाविर्भूतशत्रुगन्धासहनिष्कामकर्मयोगफलीभूतप्रत्यगभिन्नब्रह्मज्ञानखड्गेन जहि । समूलमुन्मूल्य विरूपनाशं कुरु । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ ४३ ॥

उपायोपेयकलितनिष्ठाद्वयपरायणाः ।
यत्कैवल्यपदं यान्ति स हरिर्मे परा गतिः ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां तृतीयो ऽध्यायः

# अथ चतुर्थो ऽध्यायः

स्वोक्तनिष्ठाद्वयस्येह प्राचीनत्वप्रसिद्धये ।
प्रोक्तं विवस्वते निष्ठाद्वयमित्यब्रवीद्धरिः ॥

एवमुपायोपेयभूतकर्मज्ञाननिष्ठयोरुक्तत्वात् अनेनैव सर्ववेदान्तार्थस्य परिसमाप्तत्वेन वक्तव्यान्तराभावात् किमर्थमुत्तरग्रन्थारम्भ इत्येवं प्राप्ते तत्रोच्यते । यतो ऽर्जुनप्ररोचनाय निष्ठाद्वयमिदानीमेव भणितमेतदतो न पारमार्थिकं कुत्राप्यदर्शनात् इति केचिद्भ्रान्ताः प्रतियोगिनो मुसलकिसलयधिषणाः स्वाविद्याऽऽवृतहृदयः सन्तो निर्दोषे भागवतनिष्ठाद्वयं कृत्रिमत्वशङ्काकलङ्कप्रभावत इतो ऽपि पतिता भूत्वा जात्वपि स्वपदं गन्तुमयोग्यतापदं भजेरन्निति भगवतः परमदयालुत्वेन तेष्वपि कृपया तेषामेवाशङ्काऽनुत्पत्तये स्वस्य नित्यत्वसर्वगतत्वसर्वज्ञत्वब्रह्मादिस्तम्भान्तदेशिकत्वप्रकटनाय च पुरा सर्गादाविदमेव निष्ठाद्वयं विवस्वते मया प्रोक्तम् । विवस्वच्छिष्यप्रशिष्यादिपरंपराभिः सर्वत्र व्याप्तमिति गुरुशिष्यपरंपरोपन्यासतो वंशकथनपूर्वकं स्वोक्तनिष्ठाद्वयमनादिसिद्धमिति स्तुवन् श्रीभगवानुवाच—इममिति त्रिभिः ।

श्रीभगवानुवाच—

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे ऽब्रवीत् ॥ १ ॥**

इममिति । इमं मदाराधनलक्षणनिष्कामकर्मयोगप्राप्यसर्वकर्मसंन्यास-लक्षणप्रत्यगभिन्नब्रह्मज्ञानयोगं पुरा सर्गादावहं विवस्वते सूर्याय प्रोक्तवान् । 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रतो योगस्य निरोधवृत्त्यात्मकत्वेनानित्य-त्वात् । एवंभूतं योगं विवस्वानपि कथं गृहीतवानिति तत्राह—अव्ययमिति । कैवल्यप्रापकयोगस्य वृत्तित्वेनानित्यत्वे ऽपि तत्प्राप्यप्रत्यक्परविभागासह-सत्तासामान्यब्रह्मस्वरूपावस्थानलक्षणकैवल्यफलस्य नित्यत्वात् स्वतो वा परतो वा न व्येतीत्यव्ययम् । प्राप्यप्रापकयोरैकत्वेन तस्याव्ययत्वमस्तु नाम ; तथा ऽप्येतस्याधिकारिणो ब्राह्मणेषु के ऽपि किं न सन्ति ? किमर्थंताननादृत्य निष्ठाद्वयं विवस्वते प्रोक्तवानसि, उच्यते । मद्वाचारूढत्वेन ते खलु ब्राह्मणत्व-पदं गताः । तेषां स्वतोभातवेदार्थत्वेन वक्तव्याभावकाशात् । क्षत्रियाणां जगत्परिपालनसामर्थ्यसिद्धये निष्ठाद्वयमारुरुक्षुः त्रैवर्णिकतपोविघ्ननिकृन्तनाय च तेषामेव वक्तव्यता ऽवशिष्यत इति विवस्वतः क्षत्रमूलत्वेन तस्मै प्रोक्तवा-नित्यर्थः । सो ऽयं विवस्वान् स्वपुत्राय मनवे प्राह ; मनुरादिराजाय स्वपुत्रा-येक्ष्वाकवे ऽब्रवीत् ॥ १ ॥

परंपराऽऽगतयोगस्य शिष्टजनसंमतिमुदाहरति—

**एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

एवमिति । हे परंतप ! एवं क्षत्रियपरंपरयाप्राप्तमिमं निष्कामकर्म-योगोपायप्राप्यं ज्ञानयोगमैश्वर्यवन्तो राजानश्च ते सूक्ष्मार्थदर्शनक्षमा ऋष-यश्चेति राजर्षयो विदुः, इदानींतना न विदुरित्यत्र हेतुमाह—नष्ट इति । इहास्मिन् लोके स योगो महता दीर्घकालेनाजितेन्द्रियानुपलभ्य नष्टः ; संप्रदायविच्छेदादित्यर्थः ॥ २ ॥

पूर्वोक्तस्य योगस्याजितेन्द्रियपुरुषकामादिवृत्तिकबलितत्वेन नष्टत्वान्मदर्थमिदानीं नवीनो योगो भगवतोपदिश्यत इति तत्राह—

**स एवायं मया ते ऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तो ऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

स एवेति । यो ऽयं योगो विवस्वते प्रतिपादितः चिरंतनवेदमूलकत्वात् पुरातनः । स एवायं ज्ञानयोगो ऽद्य गुरुशिष्यपरंपराऽध्ययनाभावेन तिरोहितो ऽपि पुनः प्रकटयितुं मे मम भगवतो निष्ठाद्वयात्मकसूक्तिलक्षिलुपता भक्तिः, यतः तद्वान् त्वमतो भक्तो ऽसीति स्निग्धवन्धुत्वात् सखा चेति च मुख्याधिकारिणं प्रति ज्ञानयोगो वक्तव्य इति परमेश्वरेण मया प्रोक्तः । कस्मादन्यस्मै न प्रोक्तवानिति तत्राह—रहस्यमिति । हि यस्मात् प्रत्यगभिन्नब्रह्मज्ञानस्यानधिकारिणे ऽवक्तव्यत्वात् तदेतज्ज्ञानमतिरहस्यम्; किमतिदुर्लभमिति तत्राह—उत्तममिति । रहस्यानामपि रहस्यत्वादुत्तमम् । तस्मादनधिकारिणे त्वया ऽन्येन वा ऽपि न दातव्यम् । न चैतदिति योगः कथं विशेष्यत इति वाच्यम्; स्वोक्तयोगज्ञानयोः पर्यायत्वविवक्षया योग एव ज्ञानमिति भगवतोक्तत्वाच्छब्दभेदो लिङ्गनिष्ठो मन्तव्य इत्यर्थः ॥ ३ ॥

अज्ञलोकस्य भगवत्यनीश्वरत्वशङ्कामुन्मूलयितुं भगवदुक्तासंभवं मन्यमान इवार्जुन उवाच—

अर्जुन उवाच—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

अपरमिति । वसुदेवगृहे भवतो जन्मापरम्, तवेदानींतनत्वात् । सर्गादौ विवस्वतो जन्म परम्, तस्य प्राचीनत्वात् । इदानींतनस्त्व प्राचीनाय विवस्वते यस्मादौ ज्ञानयोग प्रोक्तवान्, तमेव योग मह्य प्रोक्तवानिति च कथमेतद्विजानीया ज्ञातु शक्नुयामित्यर्थ ॥ ४ ॥

' उत्पत्तिं च विनाश च भूतानामागतिं गतिम् ।
यो वेत्त्यविद्या विद्या च स वाच्यो भगवानिति ॥ '

इति स्मृतिप्रकटितमहिमा सर्वेश्वर श्रीभगवान् स्वस्मिन्ननीश्वरत्वासर्वज्ञत्व शङ्कामुन्मूलयन् तदेतन्निष्ठाद्वय विवस्वते रूपान्तरेणोपदिष्टवानित्युवाच—

श्रीभगवानुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

बहूनीति । हे अर्जुन ! मे मम परमेश्वरस्य तव च बहून्यसख्याकानि व्यतीतानि व्यतिक्रान्तानि यानि जन्मानि तान्यह वेद जाने, मम नित्यशुद्धबुद्धापरिच्छिन्नानन्दकल्पिताविद्याद्वयतत्कार्यत्वेन निरावृतनित्याज्ञानेच्छाशक्तिमत्त्वात् । त्वया सह ममानेकजन्मवत्त्वे तुल्य ऽपि तवैव व्यतीतानि जन्मानि किमिति न प्रतीयन्त इति तत्राह —न त्वमिति । तव तूलाविद्याकल्पितक्रियाज्ञानेच्छाशक्तिमत्त्वेन स्वव्यतिरक्त्य परान् परिकल्प्य स्वहस्तभूषणगाण्डीवाकर्षणोत्थवातप्रेरितज्वलत्पावकोपमशिलीमुखै सतपनार्थ प्रवृत्तत्वात् हे परतप ! अहमिव व्यतिक्रान्तानि जन्मानि न त्व वेत्थ न जानीष इत्यर्थ ॥ ५ ॥

सर्वेश्वरस्य तवानेकजन्महेतुस्वाज्ञानतत्कार्यकर्मत्रयातीतत्वेन तद्वच्छिन्नजीववत्कथ जन्मोचितमिति तत्राह—

**अजो ऽपि सन्नव्ययात्मा भूतानामीश्वरो ऽपि सन्।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

अजो ऽपीति । सर्वेश्वरस्य तव जन्महेत्वभावात् जीववत् कथं जन्मेति यदुक्तं तत्सत्यम् । तथा ऽपि दुष्टनिग्रहशिष्टपरिपालनार्थं संभवामीति योजना । कथंभूतः सन् संभवसीत्याकाङ्क्षाया तूलाविद्याविजृम्भितषड्भाव विकाररहितत्वेन कदा ऽपि न जायत इत्यजो ऽपि सन् संभवामीत्यर्थः । संभूतेनाशपर्यवसायित्वेनाजत्वमविहाय संभवतो ऽपि तव चरमविक्रिया स्यादित्यत आह—अव्ययेति । जीववत्संभवसत्त्वे चरमविक्रिया स्यादेव, मत्संभवस्य भक्तपूरुषपदप्राप्तिहेतुत्वेनाप्राकृतत्वेन च स्वायत्तत्वात् सत्ता सामान्यरूपेण जात्वपि न व्यतीत्यव्यय आत्मा स्वरूपं यस्य सो ऽव्ययात्मा ऽपि सन्नित्यर्थः । परमार्थतो जन्मनाशाभावे ऽपि मायया देहस्वीकारात् परतन्त्रता स्यादिति तत्राह—ईश्वरो ऽपीति । भूतानामात्मत्वेन शृतत्वेन तूलाविद्याकल्पितदेहादावात्मत्वात्मीयत्वाभिमानप्रभावात् परतन्त्रतो चिता, तद्विपरीतत्वेन मम निरङ्कुशस्वतन्त्रत्वात् भूतानां तद्वेतुमायाया अपि ईश्वरो ऽपि सन्नित्यर्थः । किमवष्टभ्य संभवसीति तत्राह—प्रकृतिमिति । यद्वश चराचरात्मकं जगद्वर्तते, यया मोहितं सर्वो लोकः स्वात्मानमपि मां न जानाति, सेयं प्रत्यगभिन्नब्रह्माभेदेन कृतियोग्यत्वात् प्रकृतिः, तां प्रकृतिं त्रिगुणात्मिकां वैष्णवीमधिष्ठायेत्यर्थः । तथा चेत् त्वमिव प्रकृतिरपि स्वतन्त्रा किमिति तत्राह—स्वामिति । स्वां स्वाधीनां गृहपरिचारिणीं दासीमिव स्वातन्त्र्यगन्धशून्यामित्यर्थः । इत्थं तस्याः स्वातन्त्र्याभावे हेतुमाह—आत्मेति । ब्रह्मात्मव्यतिरेकेण स्वतन्त्रत्वेनास्वतन्त्रत्वेन वा या मा सा माया, तया स्वरूपभूतया ऽऽत्ममायया नित्यशुद्धानन्दनिष्कलब्रह्मभावमविहायैव देहवानिव संभवामि । न परमार्थतो लोकवत् संभवामीत्यर्थः ॥ ६ ॥

एवं कदा संभवमीति तत्राह—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानमधर्मस्य तदा ऽऽत्मानं सृजाम्यहम् ॥ ७॥**

यदेति। सर्वकर्मसंन्यासलक्षणब्रह्मात्मज्ञाननिष्ठो ऽपि तत्तद्वर्णाश्रमादिविहितस्वाराधनलक्षणनिष्कामकर्मबुद्ध्या ऽनुष्ठेयस्य धर्मस्य ग्लानिर्हानिः तत्तद्वर्णाश्रमादिसाकर्यलक्षणस्याधर्मस्याभ्युत्थानं संभूतिश्च यदा यदा भवति, तदा तदा हे भारत! आत्मानमुक्तलक्षणं मायया सृजामि। स्वेच्छाशक्त्या अवतरामीत्यर्थः ॥ ७॥

एवं महता प्रयत्नेन किमर्थमवतारं करोषीत्यत्राह—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८॥**

परित्राणायेति। मदाज्ञारूपश्रुतिस्मृत्यनुगृहीतसन्मार्गगन्तृत्वेन साधु कृत्यं स्वपदप्राप्तिसाधनं येषा तेषा साधूनां परित्राणाय परितो रक्षणार्थं मदाज्ञोल्लङ्घनेन दुष्टं कृत्यं साधुजनसंतापकरं येषा तेषा दुष्कृता विनाशाय च उपायोपेयभूतनिष्ठाद्वयात्मकधर्मसंस्थापनार्थाय च युगे युगे प्रतियुगं संभवामि तत्तत्कार्योचितमवतारं करोमीत्यर्थः। न च जगत्परिपालने प्रवृत्तस्य परमेश्वरस्य दुष्कृतामपि जगदन्तःपातित्वेन तद्धननमननुरूपमिति वाच्यम्, तद्धननस्यापि तत्पालनहेतुत्वात्। स्वपदप्राप्तिहेतुस्वाज्ञारूपनिष्ठाद्वयवैमुख्येन ये दुष्टत्वं प्रतिपन्ना, तेषा दौष्ट्योत्पाटनेन पुनस्तै निष्ठाद्वयमनुष्ठाप्य साधून् कृत्वा परिपालयितृत्वात् तद्धननमपि स्वानुरूपमेवेत्यर्थः ॥ ८॥

मनेश्वरस्य जन्म मायिकम्, जगत्सर्गस्थितिभङ्गलक्षणं यत्कर्म तदपि मायिकं न पारमार्थिकमिति जानतः स्वपदप्राप्तिं प्रकटयति—

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सो ऽर्जुन ॥ ९ ॥**

जन्मेति । हे अर्जुन! एवमुक्तप्रकारेण यः पुमान् प्रत्यगभिन्नब्रह्मणो मे मम वासुदेवस्य जन्म कर्म च, तयोर्जन्मकर्मणोः भक्तवृन्दस्वपदप्राप्तिहेतुत्वेन पारमैश्वरत्वेन चाप्राकृतत्वात् दिव्यं स्वभजत्प्राणिहृत्सौधालंकारानर्घमहारत्नदीपरूपेण देदीप्यमानत्वात् । तथा ऽपि मायामात्रं वास्तवमेव जन्म कर्म वा किं न स्यादित्यत्र किंचिदपि प्रत्यक्परविभागादिभिदाऽसहसत्तासामान्यत्रिपान्नारायणस्य तत्त्वतो ऽतत्त्वतो वा जन्मकर्मादि कथं भवेत्तराम्? स्वभावकवलितजीवेशादिविभागहेत्वविद्याद्वयतत्कार्यत्वात् 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा[1]' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म[2]' इत्यादिश्रुतिसहस्रेभ्यः तत्त्वतो यो वेत्ति सो ऽयं मद्भावापन्नो योगी देहोपलक्षितानृतजडदुःखात्मकस्थूलसूक्ष्मदेहादावात्मत्वात्मीयत्वाभिमानं त्यक्त्वा न पुनस्तादृशाभिमानास्पदं जन्मैति, प्रत्यग्रूपेण मां परमात्मानमेति । सम्यग्ज्ञानोत्कृष्टफलविदेहमुक्तिभाग् भवतीत्यर्थः । 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः ॥ ९ ॥

एषा विदेहकैवल्यस्रुति नेदानीं प्रवृत्ता किं तु पूर्वसिद्धेति प्रतिपादयति—

[1] छा. ७. २४. १.
[2] बृ. २. ५. १९.

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वीतेति । वासुदेव सर्वमिति मद्बुद्ध्या वीता कल्पिता स्वेष्टविषयाभिलाषो रागश्च स्वभिन्नवस्तुदर्शनजं भयं च कामापूरणसंजात क्रोधश्च येषा ते वीतरागभयक्रोधा , स्वान्तर्बहिर्विजुम्भितविक्षेपद्वयाभावात् देहादावहंममाभिमानस्य दुम्त्यजत्वात् . ते कथं वीतरागपदं भजन्तीति तत्राह— मन्मया इति । मद्व्यतिरेकेण देहतदभिमानाभावात् सर्वं मन्मयमेव पश्यन्तीति मन्मया पूर्णाहंभावारूढा इत्यर्थ । परिच्छिन्नाहंभाव विना तेषा पूर्णाहंभाव कथमिति तत्राह— मामुपाश्रिता इति । परिच्छिन्नाहंभावं प्रत्यक्त्वेन प्रविलाप्य प्रत्यगमेदेन परमात्मानं मामुपाश्रिता ब्रह्मात्मनिष्ठाकवलितपरिच्छिन्नाहमित्वात् 'भावाभावकलाविनिर्मुक्त सर्वसंशयध्वस्त पूर्णाहंभाव कृतकृत्यो भवति' इति श्रुते । एवभूता परिगणनीया कियन्त इति तत्राह— बहव इति । इत्थभूता कृतकृत्या बहवो ऽनेके श्रीशुकवामदेवप्रभृतयो वर्तन्त इत्यर्थ । तूलाविद्यापरिणामार्द्रशवारूढत्वेन तेषामपवित्रत्वात् ते कथं कैवल्यस्पर्शनार्हा इति तत्राह—पूता इति । पाविता इत्यर्थ । केनेत्यत आह—ज्ञानतपसेति । अविद्यातत्कार्यभासकप्रत्यगभिन्नब्रह्मज्ञानमेव तप तेनार्द्रशवस्पर्शनदोषत पाविता इत्यर्थ । ते क्रमागता इति तत्राह— मद्भावमिति । स्वाविद्यातत्कार्यापवित्रभासक मद्भावलक्षण कैवल्यमागता ये पूर्वे देवा ऋषयश्च तद्विदु ते तन्मया 'अमृता वै बभूवु ' इति श्रुते । ज्ञानतपसेति विशेषणात् भगवद्भावलक्षणस्य कैवल्यस्य तद्भावज्ञान विनोपायान्तरागम्यता द्योत्यते ॥ १० ॥

'तान्यहं वेद सर्वाणि न त्वं वेत्थ 'इत्यादिना विद्याऽविद्योपाधिकत्वेन जीवेश्वरौ प्रकल्प्य तत्रेश्वरस्य वशीकृतविद्याविद्यत्वेन जगत्सर्गस्थितिभङ्ग-

हेतुत्वेन सर्वज्ञत्वादिविशेषणविशिष्टत्वेन च नित्यशुद्धबुद्धपरमानन्दता प्रति मायाविद्यावशं प्रपन्नस्य जीवस्येश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तित प्रत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षणकैवल्यप्राप्तिरुक्ता। इदानीं तवेश्वरस्य सर्वसमत्वेन सर्वेषु समदयत्वाद्यदि त्वं समत्वसिद्धये सर्वेषां त्वद्भावलक्षणं कैवल्यं ददासि, तदा त्वदुक्तोपायोपेयात्मकनिष्ठाद्वयस्याकिंचित्करता, तस्य सर्वसाधारणत्वाभावात् निष्ठाद्वयस्य संप्राप्ताकिंचित्करताऽपनुत्तये निष्ठाद्वयानुष्ठातॄणां केषांचित् कैवल्यं दत्त्वा केषांचिन्निष्ठाद्वयबहिष्ठाना यदि तन्न दास्यसि तदा तव विषमदृष्टित्वेन सर्वत्र रागद्वेषादिमत्त्वेन च सर्वसमत्वलक्षणेश्वरता कथं सेद्धु पारयतीति प्राप्ते, तत्रोच्यते—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥ ११॥**

ये यथेति। हे पार्थ! ये सकामा निष्कामा वा यथा येन प्रकारेण यद्यत्प्रयोजनमुद्दिश्य सर्वेश्वरं मां प्रपद्यन्ते तान् तत्तत्फलप्रदानेन भजामि, अनुगृह्णामीत्यर्थः। यस्मादेकस्य सकामत्वं निष्कामत्वं च युगपदनुपपन्नम्, तस्मात् ये तावत्सकामा केचित् पशुपुत्त्रस्वर्गाद्यर्थमिन्द्रादिरूपेण मां प्रपद्यन्ते, तैः स्वर्गादिसाधनीभूतं काम्यं कर्मानुष्ठाप्य पुनस्तांस्तत्फलप्रदानेन भजामि। ये पुनरनन्तकोटिजन्मसुकृतपरिपाकवशात् कर्मफलस्य स्वबन्धहेतुत्वेन तदभिलापं त्यक्त्वा मद्भावज्ञानहेतुं चित्तशुद्धिं वाञ्छन्ति, तैः मदाराधनलक्षणं निष्कामकर्मानुष्ठाप्य तान् चित्तशुद्धिप्रदानेन भजामि। ये पुनर्विशुद्धचित्ताः सन्तो ब्रह्मादिस्तम्बान्तदेशिकरूपेण मां प्रपद्यन्ते, तान् सर्वकर्मसंन्यासलक्षणप्रत्यगभिन्नब्रह्मज्ञानेन भजामि। ये ज्ञानिनः संन्यासिनः प्रत्यगभेदेन परमात्मानं मां प्रपन्ना, तान् प्रत्यक्पर-

चिदैक्ययाखण्डानन्दलक्षणविदेहकैवल्यप्रदानेन भजामि । एव जीवाना विभागश फलदातु तत्र वयम्यादि किं न स्यादित्यत सकामनिष्काम-नैष्कर्म्यवतामपि मत्प्रपत्तिरेव स्वस्वभावनाऽनुरूपफलदेति न मे वैषम्या वकाश इति सूचयति--मनुष्या इति । सकामनिष्कामनैष्कर्म्यफलविभाग प्रकाशको मनुर्मन्त्रो वेद , त मनुमनुसृत्य स्वस्वभावानुरूपफलभाजो भविष्य न्तीति मनुष्या उच्यन्ते । त इम मनुष्या सर्वश सर्वप्रकारेण सर्वमिद स्वरूपिण सर्वेश्वरस्य मम वर्त्म मार्ग सकामनिष्कामनैष्कर्म्यलक्षणमनुवर्तन्ते यदि तदा तानह क्रमेण इहामुत्रपशुपुत्रस्वर्गचित्तशुद्धिज्ञानकैवल्यप्रदानेन भजामि । यत सर्वेषा युगपदेकरूपफलदो न भवामि, अत 'ज्ञानयोगेन सा ख्याना कर्मयोगेन योगिनाम्' 'नियत कुरु कर्म त्व कर्म ज्यायो ह्यकर्मण ' इत्यादिना अधिकारितारतमभावमवष्टभ्य पृथगुपदेशान्न मत्प्रकटितनिष्ठाद्वयस्या किंचित्करताऽवकाश परमपुरुषार्थहेतुत्वान्मत्प्रपत्ते । अधिकारितारतम्यत फलप्रदातृत्वेन न मे सर्वसमत्वव्याघातो न रागद्वेषावकाशो मापीश्वरस्यैश्वर्य वा भवेत् । यथा मोर तेज सर्वव्यापकत्वेन सर्वप्रकाशकत्वेन च सममपि महीजलदर्पणादौ मन्दमध्यमोत्तमप्रकाशतामेति , वह्नि सौरतेजोनिष्ठगुण भूतलजलदर्पणादिनिष्ठ वा, सौरतेजस सर्वत्र समव्यापकत्वप्रकाशकत्वावि शषात्र तन्निष्ठा विषमता , पारिशेष्यात् भूतलादिनिष्ठमतद्वानवैषम्यमित्यध्य वसितव्यम् । तथा ऽह सर्वेश्वर सर्वसमो ऽपि मत्प्रपत्त्युत्थफलभिदा तत्त दधिकारिचित्तशुद्धितारतम्यनिष्ठा न मन्निष्ठा सर्वसमत्वान्मोक्तदोषावकाश इत्यर्थ , 'सम प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकै समो ऽनेन सर्वेण' इति श्रुते ॥ ११ ॥

सर्वेश्वरस्य तव कवलितावियाद्वयतत्कार्यत्वेनाप्रतिहतक्रियाज्ञानेच्छा शक्तिमत्त्वेन दूरीकृतरागद्वेषादिमयुक्तवैषम्यनैर्घृण्यत्वेन सर्वप्राणिसमदयत्वेन च

परमपुरुषार्थप्रदानसमर्थत्वादेवंभूते त्वयि सति, कस्माद्धेतोः सर्वे 'वासुदेवः सर्वम्' इति ज्ञानेन विदेहैकैवल्यरूपं त्वा न प्रतिपद्येरन्निति तत्राह—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

काङ्क्षन्त इति । यथा कर्षकाणा हलवहनादिकर्मणा पशव उपकुर्वन्ति तथैव पशुसदृशबुद्धय कर्मठा ज्योतिष्टोमादिभि कर्मभिर्देवोपकारिण· स्वकृतकर्मणा सिद्धिं हलवाहकपशुग्रासघासोपमफलनिष्पत्तिं काङ्क्षन्तः सन्त· इहास्मिन् लोके इन्द्रादिदेवता एव यजन्ते पशव· पशुस्वामिन इवानुसृत्य कर्मफलपाशबद्धा सन्तो भजन्ति न मा सर्वमत्यभिन्नब्रह्मरूपम्, तेषा तूलाविद्याप्रसादात्तत्कुत्सितकर्मफलाभिलाषात्तद्दृष्टित्वात् 'अथ यो ऽन्या देवतामुपास्ते अन्यो ऽसावन्यो ऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति श्रुते । एवं भिन्नदेवताथाजिनो ज्ञानफलं सर्वोत्कृष्टमिति ज्ञात्वा ऽपि तत्रोपेक्षापूर्वकं तद्विरतित्वेन नश्वरं कर्मफलमेव वाञ्छन्ति किमिति? तत्राह —क्षिप्रमिति । वर्णाश्रमादिधर्मानुष्ठानयोग्यत्वेन च प्रसिद्धे मानुषे लोके स्वमेवेन्द्रादिदेवता परिकल्प्य भिन्नदेवतायाजिना पुरुषाणा नियतनैमित्तिककाम्यप्रतिपिद्धविहिताविहितनानाविधकर्मजा सिद्धि क्षिप्रं भवति । प्रत्यगभिन्नब्रह्मज्ञानफलं कैवल्यं चिरकालसाध्यमिति द्योतको हिशब्द·; इत्थं भेदधिया ज्ञानस्य दुष्प्रापत्वेन तत्फलीभूतस्य कैवल्यस्यापि तथात्वात् । मानुषे लोके क्षिप्रसिद्धिर्भवतीति विशेषणान्मानुषेतरलोकेष्वपि वर्णाश्रमादिव्यवस्थाभावे ऽपि चिरकालत· कर्मफलसिद्धिरस्तीति प्रतीयत इत्यर्थ ॥ १२ ॥

उत्तममध्यमाधमवर्णाश्रमादिवैचित्र्यं नैष्कर्म्यनिष्कामकाम्यकर्मवैचित्र्यं कर्त्रकर्त्राद्यधिकारिभेदवैचित्र्यं च विदधतः तव वैषम्याद्यसिद्धिः कथमिति तत्राह—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

चातुर्वर्ण्यमिति । केवलसत्त्वप्रधानाः शमदमादिकर्मकर्तारो ब्राह्मणाः, सत्त्वोपसर्जनरजःप्रधानाः शौर्यं तेज इत्यादिकर्मकर्तारः क्षत्रियाः, तमउपसर्जनरजःप्रधानाः कृष्यादिकर्मकर्तारो वैश्याः, रजउपसर्जनतमःप्रधानाः त्रैवर्णिकशुश्रूषैककर्मकर्तारः शूद्राः, इत्येवं गुणविभागशः कर्मविभागशश्च चत्वारो वर्णाः चातुर्वर्ण्यं सर्वेश्वरेण मया सृष्टम् । तच्चेदं चातुर्वर्ण्यं न मनुष्येतरलोकेषु विद्यते । अत एव चातुर्वर्ण्यजुष्टे मानुषे लोके क्षिप्रसिद्धिर्भवतीत्यवोचाम, तस्य कर्मफलार्जनप्रदेशत्वात् । तर्हि तवेश्वरस्य चातुर्वर्ण्यतद्धर्मकर्तृत्वेन तत्फलभोक्तृत्वेन चास्मत्तुल्यत्वात् तद्विकारास्पृष्टेश्वरता कुत इत्यत आह—तस्येति । स्वाश्रारोपितमायया तस्य चातुर्वर्ण्यतद्धर्मस्य कर्तारमपि जीवलोकद्वारा भोक्तारमित्यपेरर्थः । एवंरूपेण सन्तं मा परमार्थत चातुर्वर्ण्यतद्धर्मादेः अकर्तारमभोक्तारमत एवाव्ययमसंसारिणं विद्धि, मद्व्यतिरेकेण चातुर्वर्ण्यतद्धर्मतत्फलानामभावात् । यत तद्भावाभावप्रयुक्ते कर्तृत्वाकर्तृत्वे अतश्चातुर्वर्ण्यादेर्मिथ्यात्वात् कर्तृत्वादि न मे ऽस्तीति परमो ऽयं सिद्धान्त इत्यर्थ ॥ १३ ॥

एवंरूपेण वर्तमानं प्रत्यगभिन्नब्रह्मरूपमपि मा तूलाविद्याविलसित कर्मणा यदि कर्तारं मन्यसे तदा स्वदृष्टिदोषेण तवापि कर्तृत्वादिदोषप्तो

नित्यमुक्तेश्वरस्य तवैव प्रत्यवपरचिदैक्यज्ञजीवस्यापि कर्मफललेपाभावे ममापि तज्ज्ञानमेवास्तु, बन्धहेतुकर्मणा किमित्याशङ्कमानमारुक्ष्य शुद्धान्तःकरणस्य मुमुक्षोरेव ज्ञानाधिकार ; यत तद्विपरीतो ऽसि स्वरन्धुबधप्रयुक्तशोकमोहबाहुल्यात्, अत चित्तशुद्धिपर्यन्तं कर्मकर्तृत्वाभिमानं फलेच्छा च विहाय 'नाहं कर्ता, न मे कर्मफले स्पृहा' इति प्राचा रीत्या स्वाश्रमोचितकर्माणि कुर्वित्याह—

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवमिति । यस्मात् पूर्वैरतिकान्तै मुमुक्षुभि चित्तशुद्धयभावे तदर्थं तत्सत्त्वे ऽपि लोकसंग्रहार्थं वा कर्म कर्तव्यमिति श्रुत्याचार्यमुखतो ज्ञात्वा कर्मैव कृतम्, तस्मात्पूर्वैरप्यनुष्ठितत्वहेतो पूर्वतर नाधुनाकृतमर्याद त्वमपि कर्मैव कुरु । त्वमज्ञो वा तत्त्वविद्वा ? यद्यज्ञो ऽहमित्यात्मान मन्यसे तदा कर्मानुष्ठान विना चित्तशुद्ध्यनुदयात् त्वया तदर्थं कर्म कर्तव्यम् । त्वमपि जनकादिवत तत्त्वविदिति यदि मन्यसे तदा ऽपि लोकसंग्रहार्थं कर्मैव कार्यम् । न त्वया क्षत्रियेण तूष्णीमासनलक्षणकर्मसन्यास कार्य, ब्राह्मणेतराणां कर्मसंन्यासाधिकाराभावात् ॥ १५ ॥

स्वद्वाक्यगौरवात् कर्तव्य चेत्कर्म तत्त्वविद्भि सह विचार्य करोमि, न चान्धपरम्परामात्रेणेत्यत आह—

**किं कर्म किमकर्मेति कवयो ऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसे ऽशुभात्॥१६॥**

किमिति । किं कर्म कर्मकरण कीदृशम्, किमकर्म कर्माकरण कीदृशमित्यत्रास्मिन्नर्थे मोहिता । किमविद्वास ? कवय क्रान्तदर्शिनो मेधाविनो ऽपि । तर्हि कर्माकर्मज्ञान कथ मे स्यादिति तत्राह—तत्प्रवक्ष्यामीति । यत्कर्माकर्मस्वरूप ज्ञात्वा ऽनुष्ठानात् अशुभात् ससारान्मोक्ष्यसे तत्कर्माकर्म च ते तुभ्यमह प्रवक्ष्यामि शृण्विति शेष ॥ १६ ॥

देहेन्द्रियादिव्यापारात्मक कर्म तद्विपरीतमकर्मेति लोकप्रसिद्धम्, कवयो ऽप्यत्र मोहिता इति यदुक्त तच्चित्रमित्यत आह—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

कर्मणो हीति । हि यस्माच्छास्त्रीयदेहेन्द्रियादिव्यापाररूपकर्मणो ऽपि तत्त्व बोद्धव्यमस्ति । अशास्त्रीयदेहेन्द्रियादिव्यापाररूपविकर्मण प्रति पिद्धरूपस्यापि तत्त्व बोद्धव्यमस्ति । शास्त्रीयाशास्त्रीयव्यापारोपरमलक्षण तूष्णींभावात्मकाकर्मणश्चापि तत्त्व बोद्धव्यमस्ति । न त्वेतत् कर्मादि लोक प्रसिद्धम् । तस्मात्कर्मणो गतिर्याथात्म्य गहना दुर्विज्ञेया । कर्मण इति विकर्माकर्मणोरुपलक्षणार्थम् । तथाचाऽऽम्यविदुपदेश विना न स्वेन ज्ञातु शक्यमित्यर्थ ॥ १७ ॥

'गहना कर्मणो गति ' इति पूर्वश्लोकचतुर्थपादार्थं व्यक्तीकर्तुं कर्मादीना दुर्विज्ञेयता स्फुटयति—

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

कर्मणीति । श्रुतिस्मृत्यनुगृहीततत्तत्कर्मनियतफलेच्छात्यागपूर्वकं मदाराधनार्थं क्रियत इति देहेन्द्रियादिव्यापारात्मकं कर्म. तस्मिन् कर्मणि कर्मेदं न भवतीत्यकर्म कर्माभावं यः पश्येत् पश्यति मदाराधनलक्षणनिष्कामबुद्ध्या ऽनुष्ठितकर्मणो मत्प्रापकज्ञानहेतुत्वेनाज्ञानकल्पितबन्धप्रासकत्वात् ; तद्विपर्यये अकर्मणि च कर्मकरणे प्रत्यवायापादकत्वेन कर्म यः पश्येत्पश्यति । प्रवृत्तिनिवृत्त्योः कर्माकर्मत्वेन तत्रेतरेतरदर्शनमनुचितमिति चेन्न, तयोरपि कारकाधीनत्वाविशेषादविद्यावस्थायामेव क्रियाकारकफलव्यवहारस्य प्रवृत्तत्वात् । यस्तु सर्वमन्तरेण प्रवृत्तिनिवृत्त्यावपि य कर्म पश्यति स मनुष्येषु बुद्धिमान्, कर्मबुद्धे साध्वबुद्धिहेतुत्वात् ; स युक्तः श्रेष्ठ, श्रेयोहेतौ शुभकर्मणि मेहत्त्वात् ; सर्वत संप्लुतोदकस्थानीयमदाराधनलक्षणनिष्कामकर्मणि स्वल्पोदपानस्थानीयकाम्यकर्मतत्फलानामन्तर्भूतत्वात् स एव कृत्स्नकर्मकृत् । 'सिद्धचसिद्धचो समो भूत्वा' 'योगस्थ कुरु कर्माणि' इत्यादिना येयं कर्मबुद्धि प्रतिपादिता सेयमनेन श्लोकेन प्रपञ्चितेत्यर्थ । न च कथं कर्माकर्म स्यादकर्म वा कर्मेति वाच्यम् ; स्वाविद्याद्यावृतदृष्टेरकर्म प्रत्यगभिन्नब्रह्मण एव तद्विपरीतकर्मवदवभासनात्, तथा स्वकाराहंदेहेन्द्रियादिकर्मणो ऽहंप्रत्ययालम्बना कर्मत्वेन विभानात् ; एव कर्माकर्मणोरितरेतराध्यासे सिद्धे तन्मूलनिकृन्तनाय हि भगवतो वचन कर्मण्यकर्म य पश्येदित्यादि । कर्माकर्मणोरितरेतराधिकरणता स्यादिति चेत्, कर्माकर्मणोर्भावाभावत्वेन मरुशुक्तिरज्ज्वादौ जलरजतसर्पादिवद्विपरीतग्रहणात् कुण्डे बदराणीवेतरेतराधिकरणत्वासिद्धे । तथा चेद्भागवत वचनं कथमुपपद्यत इति चेत्, अधिष्ठेयस्याधिष्ठानपर्यवसानात्, यथा यदिदं जलरजतसर्पादिवदवभृत तदिदानीं मरुशुक्तिरज्ज्वादिरूपं पश्यति परोपदिष्टज्ञानविज्ञानाभ्यामधिष्ठानाज्ञाने निवृत्ते तदनुवृत्तमरुशुक्तिरज्ज्वादिरवशिष्यते, तथा स्वाज्ञानविजृम्भितकर्मादावधिष्ठानाज्ञाना-

शिते तद्विकारास्पृष्टत्वेन तदधिष्ठानमकर्म कूटस्थ ब्रह्मावशिष्यत इति भगव-तोपदिश्यते कर्मण्यकर्म य पश्येदित्यादि । कूटस्थब्रह्मान्यस्य मायामात्रत्वात् कर्माकर्मविकर्मणा बोद्धव्यमस्तीति वदत सम्यग्ज्ञानस्यैव विवक्षितत्वात् अन्यथा बुद्धिमत्त्वयुक्तत्वादेरसभवात् । न च विपरीतज्ञानादशुभान्मोक्षण मिप्यते 'कवयो ऽप्यत्र मोहिता' इत्युक्तत्वात्, तन्मोहनिरासाय खलु 'तत्ते कर्म प्रवक्ष्यामि' इति प्रतिज्ञाय कर्मण्यकर्मैयादि प्रतिपादितम् । देहेन्द्रि याद्दिसघातव्यापारात्मके कर्मणि स्वाज्ञदृष्ट्या विद्यमाने ऽपि तदन्तर्यामित्वेन तद्व्यावाभावप्रकाशकत्वेन तद्धयारोपापवादास्पदत्वेन तद्गुमवदोषास्पृष्टत्वेन च विद्यमानप्रत्यगभिन्नब्रह्मणो नैष्कर्म्यरूपत्वात् तदेवाहमहमेव तदिति सर्वेष्या पारोपरमणाधिष्ठानमकर्म य पश्यत्, तथैवाकर्मणि प्रत्यगभिन्नब्रह्मणि तुला-विद्यासमुदयमूलाविद्यातत्कार्यरूप कर्म तस्य स्वाज्ञदृष्ट्यध्यस्तत्वेन वाचारम्भ-णमात्रत्वात् परमार्थतो ऽकर्म ब्रह्मातिरिक्त नास्तीति य पश्येत् मनुष्येषु स बुद्धिमान्, कर्मबुद्ध्युपेयसर्वकर्मसन्यासलक्षणप्रत्यगभिन्नब्रह्मबुद्धिनिष्ठत्वात्,

'कुर्वन्नपि न कुर्वाणश्चाभोक्ता फलभोग्यपि ।
शरीर्यप्यशरीर्येव परिच्छिन्नो ऽपि सर्वग ॥'

इत्यादिश्रुते । य कर्मादावकर्मादिदर्शी स युक्त अकर्मप्रत्यगभिन्न ब्रह्मात्मास्खलितज्ञानेन यदृच्छाप्राप्तभिक्षाऽशनादिकर्मण्यसङ्गत्वेन युक्तत्वात् स्वव्यतिरेकेण क्रियाकारकफलाभानमाभावात्, तथा ऽपि कृत्स्नकर्मकृदिति ब्रह्मा-त्मविदुपर्यते । यो ऽय ज्ञानयोग 'यस्तात्मरतिरेव स्या' इति श्लोकेनोक्त सो ऽयमनेन श्लोकेनापि प्रपञ्चित इति भाव । एवभावापन्नस्याविधेय ब्रह्मात्मनिष्ठस्य विधिनिषेधातीतत्वेनानिच्छात प्राप्ताभक्ष्यभक्षणमपि न दोषाय भवति । 'अलेपको ऽहमजरो नीराग शान्तवासन, न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्, न लिप्यते पुण्यपापैश्च

शुद्ध ' इत्यादिश्रुते । तद्विपरीतस्य रागत प्रवृत्तत्वेनाभक्ष्यभक्षणादिक्र कर्म दोषाय भवतीति विकर्मण प्रतिषिद्धकर्मणो ऽप्येव तत्त्वं बोद्धव्यमित्यभिप्राय ॥ १८ ॥

'कर्मण्यकर्म य. पश्येत्' इत्यनेन श्लोकेन यो ऽर्थ प्रकटित , तस्य दुर्बोधत्वेन तमेवार्थं पुनरपि विस्पष्टमुपन्यस्यति—यस्येत्यादिभि पञ्चभि ।

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

यस्यति । यस्य कर्मादावकर्मादिदर्शिनो ब्रह्मात्मनिष्ठस्य यावन्ति कर्माणि समारभ्यन्त इति समारम्भा सर्वे देहेन्द्रियसघातचेष्टारूपा , काम्यन्त इति कामा विषयाभिलाषा सङ्कल्पप्रभवा तद्धेतव सङ्कल्पाश्च, तैर्वर्जिता कामसङ्कल्पवर्जिता निष्फलचेष्टामात्रपर्यवसाना भवन्ति, इत्थ भूतस्य योगिन प्रवृत्तिनिवृत्ती लोकसग्रहार्थं देहधारणमात्रार्थं वा भवत । नन्वेव स्वेच्छाऽऽचारमपण्डित पण्डिता मन्यरन्निति तत्राह—पण्डितमिति । कर्मादावकर्मादिदर्शन ज्ञान तदेवाग्नि तेन ज्ञानाग्निना दग्धानि निर्मूल पदवीं गमितानि शुभाशुभलक्षणकर्माणि यस्य त ज्ञानाग्निदग्धकर्माण त ब्रह्मात्मनिष्ठ बुधा ब्रह्मविद पण्डितमाहु परमार्थात्मदर्शित्वात । न चैवभाव विकलानामध्यात्मनिष्ठानहिर्मुखत्वे ऽपि इतरशास्त्रप्रवीणानामपि पण्डितत्व प्रसिद्धेरयमपि तत्तुल्यस्तदवरो वा भवेदिति वाच्यम । नैषा परमार्थतत्त्व बहिष्कृतत्वेन पण्डिताभासत्वात यथोक्तपण्डितत्व न ते प्राप्तुमर्हन्ति । किं नाम पण्डितत्व विधिनिषेधशास्त्रानुमार्गित्वमुत वा बालोन्मत्तपिशाचवत स्वेच्छयाऽनुचरत्वम् ' नाद्य देहात्मभावारूढमज्ञमाश्रित्य शास्त्र विधिनिषेध शास्त्र प्रवृत्तम् । तद्विपरीतस्य कर्मादावकर्मादिदर्शनमूर्यकिरणक्षपितदेहादि

गतात्मत्वात्मीयत्वाभिमानतदाश्रितविधिनिषेधशास्त्रप्रवृत्तिनिवृत्तिध्वान्तत्वात् न विधिनिषेधबोधकशास्त्रानुसारित्वं पण्डितत्वम् । न द्वितीय, बालोन्मत्तपि-शाचवत्स्वेच्छाचरणस्यापीच्छापूर्वकत्वात् सर्वेच्छोपमर्दकब्रह्मात्मभावारूढस्य स्वव्यतिरेकेणेच्छाया असंभवात् न स्वेच्छाऽऽचारवत्त्वं पण्डितत्वम् । किं तु प्रत्यगभिन्नब्रह्मस्वरूपेणावस्थानमेव पण्डितत्वमिति फलितोऽर्थ ॥ १९ ॥

एवं कर्मादावकर्मादिदर्शिना ब्रह्मात्मनिष्ठेन पूर्ववासनातो लोकसंग्रहार्थं यत्कर्म कृतं तत्कथमकर्मतापदमर्हतीति तत्राह—

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥**

त्यक्त्वेति । कर्म करोमीति कर्तृत्वाभिमान कर्मफलेष्वासङ्गं तद-भिलाष च त्यक्त्वा य करोति न स करोतीति योजना । कर्मफलाभि निवेशाभावत तत्फलालाभे कथं तृप्ति स्यादिति तत्राह—नित्यतृप्त इति । अनित्यविषयानन्दवैमुख्याद्धि नित्यबोधानन्द उदेति स्वान्तर्बाह्यविस्मरण-पूर्वकम्, तेनैव तृप्तः, नित्यसंतुष्टस्य कुत्सितकर्मफललाभत कथं तृप्तिरुदेति ? तदनपेक्ष्य स्वेनैव संतुष्टत्वात् 'प्राज्ञेनात्मना सपरिष्वक्तो, न बाह्यं किंचन वेद नान्तरम्',

'अप्राप्त हि परित्यज्य सप्राप्ते समता गत ।
अदृष्टखेदाखेदो य सतुष्ट इति कथ्यते ॥'

इत्यादिश्रुते । तृप्ते साश्रयत्वात् निराश्रया तृप्ति लोके न दृष्टेति तत्राह—निराश्रय इति । केवलविषयजा तृप्ति दृष्टादृष्टफलाश्रया, तद्विपरीत-ब्रह्मात्मभावमारूढस्य स्वेतराश्रयाभावात् निराश्रया भवति । निराश्रय सन्

यो वर्तते तस्य लोकसंग्रहार्थं देहधारणमात्रार्थं वा प्रवृत्तिरनुपपन्ना । यदि प्रवर्तते तदा कर्तृतापद्भागिति तत्राह—प्रवृत्तो ऽपीति । लोकसंग्रह-देहधारणारूपोभयविधकर्मणि लोकवदभिप्रवृत्तो ऽपि सो ऽयं ब्रह्मात्मनिष्ठो नैव किंचित्करोति । स्वप्रयोजनाभावात् अपिशब्दस्वारस्यात् कर्मकर्तव्या-कर्तव्यनियमाभावो द्योत्यते । ज्ञानाग्निदग्धकर्मतदभिनिवेशतत्फलत्वात् तत्कृतं कर्माकर्मपदमेव भजतीत्यर्थः ।

> 'आत्मानमञ्जसा वेद्मि काप्यज्ञानं पलायितम् ।
> कर्तृत्वमद्य मे नष्टं कर्तव्यं वा ऽपि न क्वचित् ॥'

इति श्रुतेः ॥ २० ॥

यस्तु निष्प्रपञ्चज्ञानबलेन ससाधनं सर्वं कर्म संन्यस्य देहधारणमात्र-चेष्टो ऽवशिष्यते स कर्मादावकर्मादिदर्शी कृतकृत्यतापदमर्हतीत्याह—

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

निराशीरिति । यः कर्मादावकर्मादिदर्शी स शारीरं कर्म कुर्वन्नपि न लिप्यते । आशीर्युक्तस्य निर्लेपता कथमिति तत्राह—निराशीरिति । निर्गता आशीः विषयेच्छा यस्मात्सो ऽयं निराशीः । अन्तर्बाह्यकरणसत्त्वे कथमाशीर्निवर्तेत इति तत्राह—यतेति । चित्तमन्तःकरणं बहिःकरणमात्मा कार्यकरणसंघातः, तावुभावपि यतौ नियतौ येन सो ऽयं यतचित्तात्मा । करणद्वयस्य नियतत्वेन निराशीष्ट्वमुपपद्यत इत्यर्थः । शारीरे कर्मणि प्रवृत्तस्य परिग्रहं विना तदसंभवात्परिग्रहवतो यतचित्तात्मता कथमिति तत्राह—त्यक्तेति । शरीरस्थितिमात्रप्रयोजकं परिग्रहं विना अन्यः परिग्रहो येन

त्यक्तः सो ऽयं त्यक्तसर्वपरिग्रहः । तत्रापि स्पृहाऽभावात् यतचित्तात्मतोपपद्यत इत्यर्थः । शारीरं कर्म कुर्वन् तत्फलस्यापि किल्बिषस्यावश्यंभावित्वात्तत्फलमाप्नोतीति तत्राह—नाप्नोतीति । शारीरं कर्म कीदृशम् ? शरीरेण यन्निर्वर्त्यं तदेव कर्म शारीरमिति वदसि चेत्तर्हि विहितकर्मवत्प्रतिषिद्धकर्मणो ऽपि शरीरनिर्वर्त्यत्वेन तदुभयं शरीरेण कुर्वन्नाप्नोति किल्बिषमिति वदतो भगवतो विरुद्धाभिधायित्वं भवेत्, प्रतिषिद्धाचरणे ऽपि किल्बिषाभावोक्त्या प्रतिषेधशास्त्रवैयर्थ्यं स्यात्; नैतद्युक्तं भगवति । तस्मात् शरीरनिर्वर्त्यं शारीरमित्यनुपपन्नम् । केवलशब्दप्रयोगात् शरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति वक्तुमुचितम् । तत्राप्यभिमानविकलत्वात् परारोपितप्रातिभासिकशरीरस्थितिमात्रप्रयोजनस्नानभिक्षाऽऽदिकर्म कुर्वन्नपि स्वव्यतिरेकेण परतदारोपप्रातिभासिकशरीरकर्मतत्फलकिल्बिषाद्यभावात् पुण्यपापलक्षणं किल्बिषं नाप्नोति, पुण्यस्यापि बन्धहेतुत्वात् 'किमहं साधु नाकरवम्, किमहं पापमकरवमिति' 'विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'

'प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥'

इत्यादिश्रुते । एवंभूतो यतिर्ज्ञानाग्निदग्धपापपुण्यकर्मतत्फलत्वात्प्रतिबन्धेन विमुक्तो भवतीत्यर्थः ॥ २१ ॥

कर्मादावकर्मादिदर्शिनः संन्यासिनः शरीरस्थितिमात्रप्रयोजन परिग्रहो ऽपि बन्धाय भवतीति तत्राह—

**यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वा ऽपि न निबध्यते ॥ २२॥**

यदृच्छेति । स्वकीय प्रयत्नमन्तरेण यदृच्छया समागत यो ऽन्नवस्त्रादिलाभ सो ऽय यदृच्छालाभ तेनैव सतुष्ट समुत्पन्नालमतित्वात् । द्वन्द्वेष्वदु खस्य दु सहत्वात् तद्वत सतुष्टि कथमिति तत्राह—द्वन्द्वातीत इति । समाधित कादाचित्कव्युत्थानकाले द्वन्द्वाक्रान्तो ऽप्यविषण्णचित्तत्वात् द्वन्द्वातीतो भूत्वा सदा सतुष्टो भवतीत्यर्थ । तादृशमपि केचन निन्दन्ति, तेषु मात्सर्योदितचित्तक्षोभत तुष्टेरवकाश कुत इति तत्राह—विमत्सर इति । सर्वत्र ब्रह्मात्मदृष्ट्या विगतो मत्सरो यस्य सो ऽय विमत्सर, स्वभिन्ननिन्दकाभावत कुत्रापि मात्सर्यानवकाशात् । मात्सर्याभावे ऽपि यदृच्छाप्राप्तलाभालाभयो हर्षविषादौ स्यातामिति तत्राह— सम इति । यदृच्छाप्राप्तशरीरस्थितिमात्रप्रयोजनभिक्षासिद्ध्यसिद्ध्यो सम अकर्मप्रत्ययपरचिदैक्यज्ञानकवलितविषयत्वादेवभूत । कर्मादावकर्मादिदर्शी सन्यासी परारोपितप्रातिभासिकशरीरस्थितिमात्रप्रयोजनभिक्षाऽऽदिकर्म कृत्वा ऽपि स्वदृष्ट्या तत्कर्तृत्वाभावेन ज्ञानाग्निदग्धकर्मत्वात् न निबध्यते ॥ २२ ॥

• अकर्मब्रह्मात्मदर्शनसपत्त्या कर्मादावकर्मादिदर्शिन सर्वकर्मसन्यास एवाधिकारो नान्यत्र, प्रारब्धवेगत पूर्ववत्कर्मणि प्रवृत्तस्यापि तन्मूलाज्ञानस्य ज्ञानाग्निदग्धत्वात् लोकसग्रहबुद्ध्या तत्कृत स्वाश्रमोचित कर्माकर्मैव भवतीत्युपसहरति—

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥** •

गतसङ्गस्येति । श्रुतिस्मृत्यनुगृहीतस्वाश्रमोचितदेहेन्द्रियादिचेष्टारूपकर्मतत्फलेषु क्षयिष्णुत्वबन्धहेतुत्वादिदोषदृष्ट्या गतो विगत सङ्गो यस्य तस्य गतसङ्गस्य, कर्तव्याकर्तव्यरूपधर्माधर्मविभ्रमात् मुक्तस्य, प्रत्यगभिन्नब्रह्मज्ञान

तत्साधनश्रवणादाववस्थितं चेतो यस्य तस्य ज्ञानावस्थितचेतसः, 'यज्ञो वै विष्णुः' इति श्रुत्या यज्ञाय,

> 'नैवेद्यार्थं महाविष्णो स्वादु माधूकरं शुचि ।
> आनयिष्यामि भगवन् . . . . . . ॥'

इत्यादिना यज्ञशब्दवाच्यविष्णोराराधनाय कर्माचरतः, कर्मादावकर्मादिदर्शिनो यत्नेरग्रेण फलेन समं वर्तत इति समग्रं कर्म प्रविलीयते, अकर्मैव भवतीत्यर्थः ॥ २३ ॥

> 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ।
> नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥'

इति वचनात् स्वफलमदत्त्वा समग्रं कर्म कथं प्रविलीयत इत्याकाङ्क्षायां देहात्मभावारूढानां स्वभेदेनार्पणादिक्रियाकर्तृकारकफलदृष्टीनां तथात्वेऽपि तद्व्यतिरिक्तप्रत्यगभिन्नब्रह्मभावारूढानां स्वव्यतिरेकेणार्पणादिकर्मतत्फलाभावात् स्वफलमदत्त्वा समग्रं कर्म प्रविलीयत एवेति प्रत्याययति—

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

ब्रह्मार्पणमिति । कर्मादावकर्मादिदर्शी ब्रह्मात्मनिष्ठः अर्प्यते अनेनेत्यर्पणं स्रुगादिः, तदपि ब्रह्मैव पश्यति । तथाऽर्प्यमाणं घृतादिकं हविरपि ब्रह्मैव पश्यति । ब्रह्मैवाग्निः तस्मिन् ब्रह्माग्नौ कर्तृताबुद्धिविकलत्वेन ब्रह्माभिन्नेन कर्त्रा हुतं हवनक्रियाऽऽदिकं ब्रह्मैव पश्यति । ब्रह्मैव कर्म, तस्मिन् समाधिः चित्तैकाग्र्यं यस्य तेन ब्रह्मकर्मसमाधिना गन्तव्यमपि ब्रह्मैव पश्यति । ब्रह्मातिरिक्तं न किंचित्पश्यति । 'सो ऽहम्', 'आत्मैव सर्वम्', 'ब्रह्मैवेदं सर्वम्',

'सत्तामात्रं हीदं सर्वम्' इत्यादिश्रुत्यनुरोधेन ब्रह्मात्मभावोपमृदितार्पणादिक्रियाकारकफलभेदमुपेयुषः शरीरस्थितिमात्रप्रयोजनस्य कर्मणोऽकर्मत्वेन समग्रं कर्म प्रविलीयते ।

'यो ऽस्तप्रपञ्चमखिलं ज्ञानाग्नौ जुहुयाद्यति ।
तस्य शारीरकं कर्माकर्मतां याति नान्यथा ॥'

इति स्मृतेः । एवंभूतज्ञानस्य यज्ञत्वसंपादनं स्तुत्यर्थमुपपद्यते ॥ २४ ॥

ब्रह्मार्पणमित्यस्मिन् श्लोके यो ऽयं ज्ञानयज्ञः प्रतिपादितः तस्यैव सर्वयज्ञेभ्यः श्रेष्ठतां प्रकटीकर्तुमधिकारिभेदेनानेकयज्ञानुपन्यस्यति—दैवमेवे त्यादिभिरष्टभिः ।

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

दैवमिति । अपरे योगिनः कर्मठा येनेज्यन्ते देवा इन्द्रादय इति दैवो यज्ञः, तमेव पर्युपासते श्रद्धया कुर्वन्तीत्यर्थः । एवकारेणेन्द्रादिषु ब्रह्मबुद्धिराहित्यं द्योत्यते, तेषां बलीवर्दोपमत्वेन कर्मठत्वात् । तद्विपरीता ज्ञानिनः किं कुर्वन्तीति तत्राह—ब्रह्मेति । अपरे कर्मादावकर्मादिदर्शिनो ब्रह्मात्मनिष्ठाः संन्यासिनः स्वात्मदृष्ट्यारोपितात्मविद्याद्यवतत्कार्यजातम् 'नेति नेति' इति निरस्ताशेषसामान्यविशेषं प्रत्यक्सुखाभिन्नं परमसुखं ब्रह्म शब्दार्थः । ब्रह्म च तदग्निश्चेति ब्रह्माग्निः, तस्मिन् ब्रह्माग्नौ स्वाज्ञारोपितकर्तृत्वादिधर्मवन्तं परमार्थतः तदतीतं त्वंपदार्थाभिधानं यज्ञमविद्याद्यवतत्कार्यरहितेन यज्ञस्वरूपाभिधानतत्पदलक्ष्येणैवोपजुह्वति जीवपरैक्यमेव सदा भावयन्तीत्यर्थः । यद्वा देहेन्द्रियादिव्यापाररूपं कर्मैव यज्ञः, तं ब्रह्मार्पण

मित्याद्युक्तज्ञानयज्ञेनैवोपजुह्वति । अतद्धोमप्रकरणादतत्कार्येजात तन्मात्रत्वेन प्रविलापयन्तीत्यर्थ ॥ २५ ॥

नैष्ठिकब्रह्मचारिण किं कुर्वन्तीति तत्राह—

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

श्रोत्रादीनीति । अन्ये नैष्ठिकब्रह्मचारिण श्रोत्रादिज्ञानेन्द्रियाणि तेषा सयमा एवाग्नय, तेषु जुह्वति । श्रोत्रादिष्वाद्येन्द्रियाणा मनस सयमनस्यैकत्वात् कथ सयमाग्निष्विति बहुवचनमित्याकाङ्क्षाया एकैकेन्द्रिय प्रति सयमो निग्रहो भिद्यत इति बहुवचनमित्यर्थ । इन्द्रियनिग्रहप्रधानास्तिष्ठन्तीति भाव । पद्माग्नय किं कुर्वन्तीति तत्राह—शब्दादीनिति । अन्य पद्माग्नयो गृहस्था इन्द्रियाण्यग्नय तेषु शब्दादिविषयान् जुह्वति । श्रोत्रादौ शब्दादिविषयग्रहणकाले ऽपि तत्रासक्ता सन्त इन्द्रियाण्यग्नित्वेन शब्दादीन् हविष्ट्वेन भावयन्तीत्यर्थ ॥ २६ ॥

ध्याननिष्ठा किं कुर्वन्तीति तत्राह—

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

सर्वाणीति । अपरे ध्याननिष्ठा सन्यासिन श्रोत्रवागादिबुद्धिकर्मेन्द्रियाणा शब्दवचनादीनि कर्माणि पञ्चप्राणपञ्चोपप्राणभेदाना दशप्राणाना तद्गिर्गमनाधोगमनसन्धिबन्धनलक्करणोर्ध्वगमनक्षुत्काससमीकरणोद्गारोन्मीलनक्षुतजृम्भणमर्दव्यापनात्मकानि प्राणकर्माणि च ध्येयविषयज्ञानेन दीपिते काम

संकल्पादिवृत्तिभावाभावप्रकाशकत्वेनोज्ज्वलिते प्रत्यगात्मनि संयमो योग, स एवाग्निः तस्मिन् प्रत्यगभिन्ने ब्रह्मणि जुह्वति; सर्वव्यापारोपरता भवन्तीत्यर्थः ॥ २७ ॥

यज्ञषट्कमुपन्यस्यति—

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा ऽपरे।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

द्रव्येति। अपरे धनिकाः पुण्यतीर्थेषु यज्ञबुद्ध्या ये द्रव्ययज्ञं कुर्वन्ति ते द्रव्ययज्ञाः। द्रव्ययज्ञाधिकारिणं निरूप्य तपोयज्ञाधिकारिणं निरूपयति—तप इति। अपरे तापसाः कृच्छ्रचान्द्रायणादिकं तपो यज्ञबुद्ध्या ये कुर्वन्ति ते तपोयज्ञाः। योगयज्ञाधिकारिणं प्रकटयति—योगेति। तथा ऽपरे योगिनो यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिः चित्तवृत्तिनिरोधं यज्ञबुद्ध्या ये कुर्वन्ति ते योगयज्ञाः, 'योगश्चित्तवृत्तिनिरोधः' इति योगसूत्रात्। स्वाध्याययज्ञाधिकारिणं निरूपयति—स्वाध्यायेति। ऋग्वेदाभ्यासः स्वाध्यायः स एव यज्ञो येषां ते स्वाध्याययज्ञाः, 'स्वाध्यायो ऽध्येतव्यः' इति श्रुतेः। ज्ञानयज्ञाधिकारिणं निर्दिशति—ज्ञानेति। श्रुत्याचार्योपदेशलब्धं ज्ञानं येषां ते ज्ञानयज्ञाः। व्रतयज्ञाधिकारिणमादिशति—संशितव्रता इति। अपरे सिद्ध्यर्थं यतन्त इति यतयः सिद्धा उच्यन्ते। संशितान्यस्खलितानि व्रतानि यज्ञबुद्ध्या ये सिद्धाः कुर्वन्ति ते संशितव्रता यतयः सिद्धपदं प्राप्ता इत्यर्थः। यद्वा अस्मिन्श्लोके यज्ञचतुष्टयमेव केचिन्मन्यन्ते। तत्र पूर्वार्धेनो यज्ञत्रयं ज्ञेयम्। उत्तरार्धेनैको यज्ञ इति। तत्र यज्ञत्रयस्योक्तत्वाच्चतुर्थं यज्ञमाह—अपर इति। अपरे ब्रह्मापरोक्षार्थं यतन्त इति यतयः संन्यासिनः सम्यक् शितं तीक्ष्णीकृतं व्रतं ब्रह्मचर्यादिरसा

परिग्रहसत्यवचनादिकं येषां ते संशितव्रताः 'ब्रह्मचर्यमहिंसा चापरिग्रहं च सत्यं च यत्नेनेह रक्षत' इत्यादिश्रुत्यनुरोधेनास्खलितस्वाश्रमोचिताचरणव्रतपरायणाः सन्तः स्वाध्यायारोपितातत्त्वज्ञानाम् 'नेति नेति' इति निरासकत्वात् स्वाध्यायो वेदान्तः, तच्छ्रवणमनननिदिध्यासनतो यद्ब्रह्मपरोक्षज्ञानं तदेव यज्ञो येषां ते स्वाध्यायज्ञानयज्ञाः कृतकृत्या इत्यर्थः ।

'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥'

इति श्रुतेः ॥ २८ ॥

केवलहठयोगिनः किं कुर्वन्तीति तत्राह—

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

अपान इति । अपरे हठयोगिनः अधोवृत्त्यावपाने प्राणमूर्ध्ववृत्तिं जुह्वति । पूरककाले प्राणमपानेनैकीकुर्वन्तीत्यर्थः । तथा ऊर्ध्ववृत्त्यात्मके प्राणे अधोवृत्त्यात्मकमपानं जुह्वति । रेचककाले प्राणेनापानं योजयन्तीत्यर्थः । आस्यनासिकाभ्यां वहिर्निर्गमनं प्राणगतिः । तद्विपर्ययेणाधोगमनमपानगतिः । ते प्राणापानगती रुद्ध्वा रेचकपूरकावृत्त्वा प्राणायामपरायणाः सन्तः केवलकुम्भकमेव यज्ञबुद्ध्या कुर्वन्तीत्यर्थः ॥ २९ ॥

आहारसंकोचाभ्यासिनः किं कुर्वन्तीति तत्राह—

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

अपर इति । अपरे केचन योगिन आह्रियत इत्याहारोऽन्नपानादि नियत परिमितो येषां ते नियताहारा सन्तः स्वयमेव जीर्यमाणान्प्राणान् इन्द्रियाणि प्राणेषु तत्तदिन्द्रियाधिष्ठानदेवताविशेषेषु जुह्वति प्रविलापयन्तीत्यर्थः । यद्वा प्राणान् स्वेनाजितवायुभेदान् प्राणेषु स्वजितवायुधारणाधारभ्रूमध्यादिस्थलेषु जुह्वति । केवलकुम्भकाभ्यासतो वायुनिरोधं कुर्वन्तीत्यर्थः । अथ वा, प्रत्यगभिन्नब्रह्माज्ञानात् स्थूलसूक्ष्मकारणेषु आत्मात्मीयाभिमानिनो विश्वतैजसप्राज्ञा प्राणा उच्यन्ते । तान् त्वंपदवाच्यान् स्वाज्ञानप्रभवेषु कारणोपाधिषु विराड्हिरण्यगर्भेश्वरेषु जुह्वति । त्वंपदवाच्यं तत्पदवाच्यावशेषतया भावयन्तीत्यर्थः । आहोस्वित्प्राणोपलक्षिततूलाविद्यातत्कार्योपाधिभावाभावप्रकाशकत्वेन तदध्यारोपापवाददोषास्पृष्टं त्वंपदलक्ष्य प्राणशब्देनोच्यते । तदेतत्त्वंपदलक्ष्यं प्राणोपलक्षितमूलाविद्यातत्कार्यभावाभावप्रकाशकत्वेन तदध्यारोपापवाददोषास्पृष्टत्वेन च विराड्हिरण्यगर्भेशादिविभागशून्ये महाप्राणरूपे *तत्पदलक्ष्यं ब्रह्मणि जुह्वति । प्रत्यक्परचिदैक्यज्ञाननिष्ठा* भवन्ति । प्राणान्प्राणेष्वित्यत्र स्वाज्ञदृष्टिविकल्पितवाच्यार्थवैचित्र्यात् बहुवचनं न स्वत, तल्लक्ष्ययोरेकत्वात्, 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुते । पूर्वोक्तयज्ञानुपसंहरति—सर्वे इति । सर्वे द्रव्ययज्ञाद्यनुष्ठातारो यज्ञान् विदन्तीति यज्ञविद स्वानुष्ठितयज्ञैः क्षपितो नाशित कल्मषो येषां ते यज्ञक्षपितकल्मषा निष्पापा भवन्तीत्यर्थः ॥ ३० ॥

पूर्वोक्तयज्ञानुष्ठातॄणां फलमाचष्टे—

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

यज्ञेति । यज्ञानां शिष्टं च तदमृतं चेति यज्ञशिष्टामृतम्, तद् भुञ्जत इति यज्ञशिष्टामृतभुजः यथोक्तयज्ञान् कृत्वा तच्छिष्टेन कालेन विधिचोदितान्नाद्यमृतभोक्तारः मुमुक्षवश्चेत् चित्तशुद्धिद्वारेण क्रमात् सनातनं ब्रह्म यान्ति । पूर्वोक्तयज्ञेष्वेको ऽपि यज्ञो येन नानुष्ठीयते तस्याध पतनं मकटीकरोति— नायं लोको ऽस्तीति । क्षत्रियेषु कुरव. सन्त भीष्मादय, तेषु पाण्डवा सत्तराः, तेष्वर्जुनस्य भगवद्विभूतित्वेन सत्तमत्वात् हे कुरुसत्तम! उक्तयज्ञानामेको ऽपि यज्ञो येन नानुष्ठीयते सो ऽयज्ञः । तस्य सर्वप्राणिसाधारणो ऽयं मनुष्यलोको ऽपि नास्ति । तद्विपरीतत्वेनान्यस्वभावरूपत्वविद्याद्यतत्कार्यत्वेन प्रसिद्धो ब्रह्मात्मलोक क्रमादक्रमाद्वा कुत कथं स्यादित्यर्थ ॥ ३१ ॥

पूर्वोक्तयज्ञाना स्वकपोलकल्पितत्वात् न ते प्रमाणभूतवेदानुमाप्या भवन्तीति तत्राह—

**एवं बहुविधा यज्ञाः वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवमिति । एवमुक्तप्रकारेण बहुविधा देवादियज्ञा ब्रह्मणो वेदस्य मुखं द्वारम्, तस्मिन् मुखे वितता, वेदद्वारेण सर्वत्र प्रकाशिता इत्यर्थ । वेदा मत्रि श्वासत्वेन खलु ते प्रमाणपदं भजन्ति । तथा सति स्वकपोलकल्पिता अपि यज्ञा कथमप्रमाणतापदमर्हन्तीति भाव । मत्स्वकपोलकल्पनाभावत एव द्रव्यादियज्ञान् तूलाविद्याविकारत्वेन मनोवाक्कायकर्मसंभूतान् कर्मजाननात्मरूपान्विद्धि । यतो निर्व्यापारो ऽहमात्मा, अतो द्रव्ययज्ञादयो न मद्व्यापारा, निर्व्यापारं प्रत्यगभिन्नं ब्रह्मास्मीति ज्ञात्वा ऽपरोक्षीकृत्य स्वाविद्याप्रतिभातमंसृत्याद्युत्तिप्पादयुमान्मोक्ष्यसे विमुक्तो भवसीत्यर्थ ॥३२॥

अक्षार्पणमित्यादिना प्रतिपादितो यो ऽयं ज्ञानयज्ञः तस्य साधनत्वेनानेकयज्ञाः प्रतिपादिताः ; तेषामुपेयत्वात् ज्ञानयज्ञ एव श्रेयानित्याह—

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

श्रेयानिति । हे परंतप! उक्तलक्षणो ज्ञानयज्ञः श्रेयान् प्रशस्यतरः । कस्माच्छ्रेयस्त्वमिति तत्राह—द्रव्येति । स्वाविद्यातत्कार्यरूपात् द्रव्यमयात् देवादियज्ञात् । यतो द्रव्यादियज्ञानां कर्तृकारकक्रियाफलात्मकत्वेन मायामात्रत्वं तद्विपरीतत्वेन तन्निवर्तकत्वादतो ज्ञानयज्ञस्य श्रेयस्त्वं युक्तमित्यर्थः । ज्ञानस्य यद्यप्यस्ति मनोव्यापाराधीनत्वं शुद्धसत्त्वपरिणतं मनो ज्ञानमिति विवक्षितत्वात्, तथा ऽपि प्रत्यगभिन्नब्रह्मणः तदन्यत्रोपलब्ध्यभावेन ज्ञानस्य वृत्तित्वे ऽपि श्रेयस्त्वं युक्तमेवेत्यर्थः । उक्ते ऽर्थे हेत्वन्तरमाह—सर्वमिति । हे पार्थ! यतः प्रत्यगभिन्नब्रह्मज्ञाने, खिलं निष्फलम्, तन्न भवतीत्यखिलं फलसहितं सर्वं कर्म परिसमाप्यते, ब्रह्मात्मनिष्ठस्य स्वव्यतिरेकेण क्रियाकारकफलाभावात् । अतो ज्ञानस्य श्रेयस्त्वम्, कर्मनियमादिजालशतमपि यत्र पर्यवसितं सकलसाधनसमेतमिति नैष्कर्म्यसिद्धिकारैरुक्तत्वात् ॥ ३३ ॥

प्रशस्यतरं चेदेवं ज्ञानं केनोपायेन तत्प्राप्तिरित्यत इति तत्राह—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

तद्विद्धीति । श्रुत्याचार्यप्रसादतो यत् ज्ञानं लभ्यते तस्य स्वाज्ञाननिवर्तकत्वेन कैवल्यहेतुत्वात् तज्ज्ञानं कार्यक्षममिति विद्धि । के मे

तज्ज्ञानमुपदिशन्तीति तत्राह—ज्ञानिनस्तत्त्वदर्शिन इति । पदद्वयस्यैकार्थत्वेन न पुनरुक्तिः शङ्कनीयम्, अर्थभेदसंभवाच्छब्दभेदवत् । केवलश्रुत्याचार्यमुखतः शास्त्रार्थज्ञाः स्वानुभवाभावे ऽपि ज्ञानिन उच्यन्ते । तैरुपदिष्टं ज्ञानमनुभवारूढं न भवेत् । ज्ञानित्वसंपादनानन्तरं ये स्वानुभवतो ब्रह्मात्मतत्त्वं पश्यन्ति ते खलु तत्त्वविदो भवन्ति अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्येति भाष्यकारोक्तित तैरुपदिष्टं ज्ञानमनुभूतिपदं प्राप्य कार्यक्षमं भवेदित्यर्थः । न च तत्त्वविदिति वक्तव्ये तत्त्वविद इति बहुवचनं किमर्थमिति वाच्यम् । ब्रह्मात्मतत्त्वस्यातिसूक्ष्मत्वेन बहुभ्यो बहुधा श्रोतव्यत्वात्, पूजाया वा तत्त्वविद इति बहुवचनसंभवात् । यथोक्तविशेषणविशिष्टाः तत्त्वविदः ते तव स्वानुभूतं ज्ञानमुपदेक्ष्यन्ति । तेषां स्वव्यतिरिक्तवस्तुदर्शनाभावेन कृतकृत्यत्वात् । कथं मा ते लक्ष्यीकृत्योपदिशन्तीति तत्राह—सेवयेत्यादिना । सेवया फलाकाङ्क्षाविकलया तदुचितशुश्रूषया नित्यादिसाधनचतुष्टयसंपन्ने ब्रह्मचर्यनियमतो गुरुकुलवासकर्शिते त्वयि तेषां दयालुत्वेन कटाक्षः प्रसरेत्, तदानीं तत्पादनिकटे प्रणिपातः कर्तव्यः । प्रकर्षेण दण्डवत्पतनं प्रणिपातः । तेन प्रसन्ना गुरवः प्रेप्सितं ते वत्स किमिति वदेरन् । तेषां सर्वज्ञत्वेन मदीप्सितस्यापि ज्ञातत्वात् तत्प्रेप्सितं किमित्युक्तिरनुपपन्नेति तत्राह—परिप्रश्नेनेति । कुतो मे संसारः समागतः पुनः कस्मान्निवर्तत इति परिप्रश्नेन त्वदभिमुखा भूत्वा स्वयं सर्वज्ञा अपि 'नापृष्टः कस्यचिद् ब्रूयात्' इति श्रुत्यर्थं मानयन्तः सन्तः ततस्त्वा बोधयेरन् । किमिति ? रज्ज्वज्ञानोत्थस्य सर्पस्य रज्जुज्ञानेन निवृत्तिवत् स्वाज्ञानप्रभवस्य ससारस्य स्वज्ञानेन निवृत्तिः नान्यथेति वदन्ति । स्वज्ञानं कीदृशमिति पुनस्त्वया पृष्टाः सन्तः स्वानुभूतं स्वज्ञानमुपदिशन्ति । तज्ज्ञानं कैवल्यसाधनं विद्धीत्यर्थः ॥ ३४ ॥

एवं गुरूपदेशतः स्वाज्ञाननिवृत्तिद्वारा स्वज्ञानावाप्तिं प्रकटयति—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

यदिति । शास्त्राचार्यमुखतो यज्ज्ञानं ज्ञात्वा ऽनुभूय यथेदानीं स्वव्यतिरेकेण बन्धून् कल्पयित्वा तन्निमित्तं मोहं गतो ऽसि, न पुनरेवं मोहं याम्यसि । हे पाण्डव ! येन ज्ञानेनाशेषेण तूलाविद्याविलसितब्रह्मादिस्तम्बान्तभूतानि तदविद्याभावाभावप्रकाशकप्रत्यगात्मनि तदभेदेन द्रक्ष्यसि ; अथो अनन्तर कवलीकृताविद्याद्वयतत्कार्ये वासुदेवे मयि तान्येव प्रत्यगात्मा वशेषितानि भूतानि द्रक्ष्यसि । प्रत्यगभिन्नब्रह्मस्वरूपेणैव सर्वभूतानि द्रक्ष्यसीति भाव ॥ ३५ ॥

निष्पापानामेवेहास्मिन्नेव जन्मनि गुरूपदिष्टज्ञानमात्रेण ब्रह्मात्मसाक्षात्कार स्यादेव । तद्विपरीतस्य मम त्वदुपदिष्टज्ञानमात्रत कथं वृजिनतरण येन ब्रह्मात्मसाक्षात्कारो भवेदिति तत्राह—

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

अपीति । सर्वेभ्य पापेभ्य पापकृद्भ्य स्त्वमतीव पापकृत्तमो ऽसि चेदपि गुरूपदिष्टप्रत्यगभिन्नब्रह्मज्ञानमेव प्लव , तेन ज्ञानप्लवेनैव । एवकारादनायासेन तूलाविद्याविजृम्भितं सर्वमपार वृजिनार्णवं पापसमुद्रं तरिष्यसि । मुमुक्षो पुण्यस्यापि बन्धहेतुत्वेन पुण्यपापतन्मिश्रसमुद्र तीर्त्वा तत्पारं ब्रह्म साक्षादनुभवमीत्यर्थ । न चार्जुनस्य पापकृत्तमत्वमस्तीति वाच्यम् । तस्य

सद्वृत्तत्वात् पुण्यकर्मणा सह किंचित्पापकारी पापकृत् । पुण्यकर्म विना केवलपापाचार पापकृत्तर । तन्निष्ठावान् पापकृत्तम । एकस्मिन् जन्मनि कस्यापि पापकृत्तमत्वासम्भवात् ज्ञानमाहात्म्यमेतादृशमिति स्तुत्यर्थं भगवद्वचन मुपपद्यत । अन्यथा पापकृतो ऽपि भगवद्दर्शन तदुपदेशयोग्यता वा कथमुप पद्यते ? भगवद्दर्शनस्यानन्तकोटिजन्मसुकृतपरिपाकलभ्यत्वादित्यर्थ ॥ ३६ ॥

ज्ञानेन वृजिनार्णवलङ्घनमात्र न तन्मूलकर्मनाशो भवेदिति भ्रान्ति मुन्मूलयन् तन्मूलनाश लौकिकदृष्टान्तेन स्पष्टयति—

**यथैधांसि समिद्धो ऽग्निर्भस्मसात्कुरुते ऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

यथेति । हे अर्जुन ! सम्यगिद्धो दीप्तो ऽग्नि यथैधासि काष्ठवृन्दानि भस्मसात्कुरुते भस्मीभाव करोति तथैव प्रत्यगभिन्नब्रह्मज्ञानाग्निरितीतानेकजन्म कृतानि ज्ञानसहभावीनि च यान्यनारब्धफलानि तान्यव सर्वाणि कर्माणि भस्मसात्कुरुते । येन कर्मणा शरीरमारब्ध तस्यारब्धकर्मण प्रवृत्तफलत्वात् भोगेनैव नाश तस्य तावदेव चिर यावन्न विमोक्ष्य ऽथ सपत्स्य ' इति श्रुते । यद्वा सर्वाणि कर्माणीति बहुवचनात् भस्मसात्कुरुते इति वर्तमानप्रयोगात् सर्वशब्दस्य सकोचे मानाभावाच्च आगामिसचितारब्धकर्माणि तत्कार्यपुण्य पापतन्मिश्रकर्माणि च निर्वीजानि यथा भवन्ति तथा ज्ञानाग्नि भस्मसात्कुरुते, सम्यग्दर्शन सर्वकर्मणा निर्बीजत्वे कारणमिति भाष्यकारोक्ते । न चैव सम्यग्ज्ञानेन स्वाज्ञाननिवृत्तौ सत्या तत्कार्यकर्मक्षये सति तत्कार्यशरीर स्यापि नाशसम्भवात्तदन्यथाऽनुपपत्त्या ऽऽगामिसचितकर्मणोरेव नाशो नारब्ध स्यति वाच्यम् सम्यग्ज्ञानसमकालमेवाज्ञाननिवृत्तिस्तदुत्तरक्षणत सर्वकर्म

नाशसंभवात्, तदन्यथाभावेन 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' 'स एष विमुक्तो विमुक्तो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति य एवं निर्बीजं वेद निर्बीज एव भवति' 'तमेव ज्ञात्वा विद्वान् मृत्युमुखात्प्रमुच्यते । तदैव विद्वांस इहैवामृता भवन्ति ।' 'एतद्यो वेद निहितं गुहायां सो ऽविद्याग्रन्थिं विकिरतीह सोम्य ।'

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥'

इत्याद्याः प्रत्यगभिन्नब्रह्मसम्यग्ज्ञानसमकालमेव स्वाज्ञानतत्कार्यकर्मत्रयनिवृत्तिं कैवल्यफलानुवादिन्यः श्रुतयः कुप्येरन् । तथा चेत् 'तस्य तावदेव चिरम्' इति प्रारब्धसद्भाववादिश्रुतेः का गतिरिति तत्रोच्यते—सम्यग्ज्ञानीतरेषु सा श्रुतिः गतिमर्हत्येव । तद्विपरीतत्वेनाविद्याद्वयतत्कार्योपमर्दकब्रह्मात्मसम्यग्ज्ञानिनः पुनः स्वाज्ञानतत्कार्यकर्मानुवर्तनापेक्षया तद्बाधकसम्यग्ज्ञानं नोत्पन्नमिति वक्तुमुचितम् । तादृशसम्यग्ज्ञानिनस्तावत्परारोपितप्रातिभासिकशरीरस्थितिमात्रप्रयोजनारब्धकर्मानुवर्तनं विना स्वदृष्ट्या परतः दारोपितकर्मतदनुवर्तनाभावात् यथा स्वोदयात्पूर्वैव स्वावारकं ध्वान्तं कवलीकृत्य निराकृत्य सूर्य उदेति तथा ब्रह्मात्मसम्यग्ज्ञानं स्वोदयात्पूर्वैव स्वावारकमविद्याद्वयतत्कार्यजातं कवलीकृत्य खलु निःसपत्नमुदेति । अरुणोदयवेलायां तमसः स्थूलभागनाशवत् ब्रह्मासीति गुरूपदिष्टज्ञानाग्निरागामिकर्मसर्वस्वं भस्मसात्कुरुते । श्रुत्याचार्यप्रसादात्तशास्त्रज्ञानिनः आगामिकर्मणो ऽश्लेषश्रवणात्/ अरुणोदयसूर्योदययोरन्तरालावस्थायां तमसः सूक्ष्मभागनाशवत् प्रत्यगभिन्न ब्रह्मास्मीति स्वानुभूतिपरामृष्टविज्ञानाग्निः संचितकर्मसर्वस्वं भस्मसात्कुरुते । स्वानुभूतिपरामृष्टब्रह्मात्मविज्ञानिनः प्रबोधात् स्वप्नकर्मवत् संचितकर्मसर्वस्वं निःशेषं विनश्यति । सूर्योदयवेलायां तमसो बीजभागनाशवदकर्म

प्रत्यगभिन्नब्रह्मचरमसाक्षात्कारहेतुसम्यग्ज्ञानाग्निरारब्धकर्मसर्वेद्न भस्मसात्कुरुते सम्यग्ज्ञानकवलितदेहाभिमानस्य स्वापे इन्द्रियवदारब्ध कर्मापि नश्यत्येव। यत्साक्षात्कारानन्तरमतत्प्रवृत्तिनिवृत्त्यभिमानो न स्यात् स एव चरम साक्षात्कार। तद्धेतु सम्यग्ज्ञान,तत्पदमारूढस्य स्वभिन्नदेहत्रयाभिमानाभाव प्रोव्याकर्मत्रयनाशसकोचो नोपपद्यते। तथा सति 'ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुते' इति भगवदुक्ति निरङ्कुशतमा स्यादित्यर्थ। न च सम्यग्ज्ञानिन कर्मत्रयाभावे ऽपि तद्विपरीतस्याज्ञानिन कर्मत्रय परमार्थत स्यादिति वाच्यम्। परमार्थतया तस्याप्यसभवात्। तत्किमात्मनो देहस्य वा? नाद्य, आत्मनस्तावत्कर्मत्रयाभावाभावप्रकाशकत्वेन तदध्यारोपापवाद दोषास्पृष्टत्वेन च तद्विलक्षणत्वात्, यमज्ञ इति वदसि सो ऽय खलु प्रत्यगात्मा, तस्य कर्मत्रय न रुभवति। न द्वितीय, देहस्याज्ञान कल्पितत्वेनासत्त्वादसत कथ कर्मत्रय सभवति? तथा सति कर्मत्रय व्यवहार कथमिति चेदुच्यते। देहात्मनोस्तत्त्वाज्ञानपुर सरा कर्मत्रयव्य वहृतिरज्ञाश्रितेव प्रतिभाति। तस्मात् सा न कस्यापि परमार्थतापद मर्हतीत्यर्थ ॥ ३७ ॥

वाजिमेधादिकर्मणा पवित्रहेतुत्वेन तैरेव पुरुषार्थे सिद्धे ज्ञानेन साधनीय किमिति तत्राह—

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥**

न हीति। इहास्मिन् लोके प्रत्यगभिन्नब्रह्मज्ञानेन सदृश पवित्र पावनमन्यदश्वमेधादिक न विद्यते। तस्य स्वाज्ञानप्रभवकर्तृकारकक्रिया फलात्मस्त्वेनापवित्रत्वात्। तद्विपरीतत्वेन परमपावन चेत् ज्ञान सर्वेषा किं

नोत्पद्यते ? चित्तशुद्ध्यभावादित्याह—तदिति । दीर्घकालेन निष्कामकर्मानुष्ठानं योगः, तेन संसिद्धः समुत्पन्नचित्तशुद्धिः पुरुषः पराभिन्नप्रत्यगात्मनि प्रत्ययपरैक्यविषयकं यज्ज्ञानं तदनायासेन विन्दति लभत इत्यर्थः ॥ ३८ ॥

मदाराधनलक्षणनिष्कामकर्मानुष्ठानतः समुत्पन्नचित्तशुद्धेः ज्ञानोत्पत्त्यन्तरङ्गसाधनमुपदिशति—

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

श्रद्धावानिति । श्रुत्याचार्योपदिष्टे ऽर्थे श्रद्धा आस्तिक्यबुद्धिः यस्य सो ऽयं श्रद्धावान् प्रत्यगभिन्नब्रह्मज्ञानमवश्यं लभते । तादृशश्रद्धा केनोपायेन जायत इति तत्राह—तत्पर इति । गुरुरेव परो यस्य स तत्परः । गुरुसेवापरायणत्वात्तस्य श्रद्धोदेति । इन्द्रियद्वयव्याप्तेस्तत्परत्वं वा कथमिति तत्राह—संयतेन्द्रिय इति । येनेन्द्रियद्वयं संयतं भवति सो ऽयं संयतेन्द्रियः, संयतेन्द्रियत्वं तत्परत्वम् । श्रद्धावत्त्वं च ज्ञानोत्पत्त्यवान्तरङ्गसाधनमित्यर्थः । एवं साधनसाध्यज्ञानलाभे किं फलमिति तत्राह—शान्तिमिति । ब्रह्मज्ञानं लब्ध्वा ऽचिरेण तदुत्तरक्षणेनाविद्याद्वयतत्कार्यपरा सर्वोत्कृष्टत्वेन विदेहकैवल्यरूपिणीं शान्तिमधिगच्छति । ज्ञानसमकालमेव मुक्तो भवतीत्यर्थः ।

> 'यत्र यत्र मृतो ज्ञानी परमाक्षरवित्सदा ।
> परे ब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ।
> तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥'

इत्यादिश्रुतेः ॥ ३९ ॥

अज्ञाश्रद्धानसशयात्मनामिहामुत्रापि सुखाभाव प्रकटयति—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोको ऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

अज्ञ इति । श्रुत्याचार्यमुखत शास्त्रार्थं न जानातीत्यज्ञ, स च, श्रुत्याचार्यमुखत शास्त्रार्थज्ञाने जाते ऽपि तत्पुरुषार्थोपयोगीत्यास्तिक्यबुद्ध्यभावादश्रद्धानश्च, प्रमादत श्रद्धाया जातायामपि तत्फल कैवल्य सिध्येद्वा न वेति सशयपद प्राप्त आत्मा ऽन्त करण यस्य सशयात्मा च, विनश्यति पुरुषार्थात् च्यवत इत्यर्थ । अज्ञाश्रद्धानयो तुल्य सशयात्मेति तत्राह— नेति । अज्ञाश्रद्धानयोरामुष्मिकसुखाभावे ऽप्यैहिकसुखसभवात् न तयो तुल्य सशयात्मा, यत सशयात्मनो नाय लोको ऽस्ति धनार्जनतो विवाहाद्यसिद्धे, तथा न परलोक तत्साधनीभूतधर्मानिष्पत्ते । सर्वत्र सशयितृत्वेन न हि तस्यैहिकामुष्मिकसुखगन्धो ऽप्यस्ति । अतस्तेभ्य सशयात्मैव पापिष्ठतम इत्यर्थ ॥ ४० ॥

अध्यायद्वयोक्त निष्ठाद्वयमुपसहरति—

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

योगेति । हे धनजय' मदाराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्ध्यनन्तरभावि प्रत्यगभिन्नब्रह्मदर्शन ज्ञानम्, तेन सछिन्न सशयो यस्य त ज्ञानसछिन्नसशयम्, निर्विभागसत्तासामान्यब्रह्मापरोक्षदर्शन योग, तेनैव सन्यस्तानि गलितानि देहेन्द्रियचेष्टारूपाणि कर्माणि यस्य त योगसन्यस्तकर्माणम्, अखण्डसमाधियोगेन स्वरूपाच्युत आत्मा ऽन्त करण

यस्य तमात्मवन्तमप्रमत्तं ब्रह्मात्मनिष्ठं परारोपितशरीरधारणमात्रप्रयोजनदेहेन्द्रियादिव्यापारात्मकानि कर्माणि न निबध्नन्ति, न पुनर्जन्मादिफलमारभन्त इत्यर्थ ; 'क्षीयन्ते चास्य कर्माणि' इति श्रुते ॥ ४१ ॥

यस्माद्योगद्वयविषयसंशयवान्विनश्यति यस्मात्तद्विपर्ययवान् कर्मभिर्न निबध्यते तस्मात् स्वपुरुषार्थप्रतिबन्धकसंशयश्छेत्तव्यः इति निगमयति—

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिना ऽऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥इति॥**

इति श्रीमद्भगवद्गीतासु० ज्ञानयोगो नाम चतुर्थो ऽध्याय ।

तस्मादिति । हे भारत ! यस्मात् संशयाविष्टचेतसामिहामुत्रसुखच्युतिरनिवार्या स्यात् तस्मात् प्रत्यगभिन्नब्रह्मज्ञानमेवासि , तेन ज्ञानासिना पापिष्ठमज्ञानसंभूत हृदि बुद्धौ स्थितमेनमात्मन स्वस्य संशयं छित्त्वा तादृशज्ञानाभावे ऽपि तदुपायभूतनिष्कामकर्मयोगानुष्ठान प्रत्यातिष्ठ यत्न कुरु । तव क्षत्रियत्वेनेदानीमेव युद्धायोत्तिष्ठ । इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥

कर्मायकर्मादिबोधशान्तकर्मत्रया व्रजा ।
यस्मिन्पर्यवसन्ना स्यु स हरिर्मे परायणम् ॥

इति श्रीमद्भगवद्गीताऽर्थप्रकाशिकाया चतुर्थो ऽध्याय ।

# अथ पञ्चमोऽध्यायः

कर्मत्यागात्कर्मयोग श्रेयाञ्शुद्धे सचेतसि ।
सम्यग्ज्ञानाय संन्यासं कर्मणामाह केशव ॥

'कर्मण्यकर्म य पश्येत्' इत्यारभ्य 'योगसंन्यस्तकर्माणम्' इत्यन्तै ग्रन्थै सर्वकर्मसंन्यासलक्षणा ज्ञाननिष्ठा प्रतिपादिता । 'पुनर्योगमातिष्ठोत्तिष्ठ' इत्यनेन स्वाश्रमाचारलक्षणा कर्मनिष्ठा चोदिता खलु ; तयो. परस्परविरोधेन युगपदेकेन पुरुषेणानुष्ठातुमशक्यत्वाच्चयोरन्यतरकर्तव्यताया सिद्धायां तयोर्यत्प्रशस्यतरं तत्कर्तव्यं नेतरदिति तद्विशेषं बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

सन्यासमिति । हे कृष्ण ! 'यस्त्वात्मरतिरेव स्यात्तस्य कार्यं न विद्यते', 'कर्मण्यकर्म य पश्येदकर्मणि च कर्म य.', 'ज्ञानाग्निदग्धकर्माणं तमाहु पण्डितं बुधा ', 'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्', 'सम सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते', 'ब्रह्मार्पण ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्', 'सर्वं कर्माखिल पार्थ ज्ञाने परिसमाप्यते', 'ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुते तथा', 'योगसंन्यस्तकर्माणं ज्ञान-

*सच्छिन्नसंशयम्'* इत्यादिभिर्वचनैः *शास्त्रीयानुष्ठानलक्षणसर्वकर्मणा* संन्यास शससि । 'छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ' इति वचनात् पुन कर्मानुष्ठानलक्षणयोगं च शंससि । एतयो कर्मसंन्यासकर्मानुष्ठानयो मध्ये यदेकं प्रशस्यतरं मया अर्जुनेनानुष्ठातुं शक्यमिति सुनिश्चितं त्वदभिमत तन्मे ब्रूहि कृपयोपदिशेत्यर्थ ॥ १ ॥

एवमर्जुनकृतस्य प्रश्नस्योत्तरं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

संन्यास इति । 'यस्त्वात्मरतिरेव स्यात्तस्य कार्यं न विद्यते' इत्यादिना साख्यबुद्धिनिष्ठाना कर्मभि प्रयोजनाभावात् सर्वकर्मसन्यासो य प्रतिपादित, 'यज्ञार्थात्कर्मणो ऽन्यत्र लोको ऽयं कर्मबन्धन । तदर्थं कर्म कौन्तेय मुक्तसङ्ग समाचर ॥ इत्यादिना मुमुक्षुत्वे ऽपि साख्यपदमारोढुम शक्ताना तत्पदारोहाय मदाराधनलक्षणनिष्कामकर्मयोगो य प्रतिपादित, तावुभावपि नि श्रेयसकरौ स्याताम् । तयोरुपायोपेयभेदेन नि श्रेयसहेत्वो मध्ये तव साख्यपदारोहाशक्तत्वेन यथोक्तज्ञानरहितकेवलकर्मसन्यासात् कर्म योग कर्मानुष्ठानं विशिष्यते । सकामाना स्वर्गादिहेतुत्वात्तद्विपरीताना चित्तशुद्धिद्वारा साख्यपदप्रापकत्वादित्यर्थ ॥ २ ॥

*अर्जुनप्ररोचनाय कर्मयोग स्तौति—*

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

ज्ञेय इति । हे महाबाहो! यः कर्मानुष्ठाने प्रवर्तमानोऽपि न किंचिद्वस्तुजातं द्वेष्टि न विषयसुखं वा काङ्क्षति । कुत्रापि रागद्वेषाभावात्सोऽयमीश्वराराधनलक्षणनिष्कामकर्मानुष्ठाता साङ्ख्यनिष्ठाऽऽरोहात्पूर्वमपि नित्यसंन्यासी सर्वदा संन्यासीति ज्ञेयः, विद्वद्भिरिति शेषः । हि यस्मात् निर्गतरागद्वेषादिद्वंद्वतापदभाग्भवति, तस्मात् सुखमनायासेन सम्यग्ज्ञानद्वारा तूलाविद्याविजृम्भितसंसारबन्धात् प्रमुच्यते मुक्तो भवतीत्यर्थः ॥ ३ ॥

कर्मसंन्यासकर्मयोगयोर्विरुद्धफलकत्वेन समुच्चयानुपपत्त्या भिन्नपुरुषानुष्ठेयत्वात् तुल्यमुक्तिप्रदत्वं कथमिति तत्राह—

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

साङ्ख्ययोगाविति । ज्ञाननिष्ठावाचिसाङ्ख्यशब्देन तदङ्गं सर्वकर्मसंन्यासो गृह्यते । निष्कामकर्मानुष्ठानलक्षणः कर्मयोगः तावेव साङ्ख्ययोगावित्युक्तौ संन्यासस्य ज्ञानपूर्वकत्वात् कर्मयोगस्य सिद्ध्यसिद्धिसमत्वबुद्धिकलितत्वादनुष्ठानतः फलतश्च पृथक् भिन्नफलात्मकाविति बाला अविवेकिनो वदन्ति, शास्त्रार्थपरिज्ञानाभावात् । शास्त्रार्थपरिज्ञानिनः पण्डितास्तु उपायोपेयभूतयोः साङ्ख्ययोगयोर्मध्ये सम्यगेकमप्यास्थितो विद्वान् सर्वकर्मसंन्यासलक्षणसांख्यबुद्धिफलं मोक्षं, समत्वबुद्धिकलितनिष्कामकर्मानुष्ठानलक्षणयोगफलमपि ज्ञानद्वारा मोक्षं, तयोः फलवैषम्याभावात् उभयोः कर्मसंन्यासकर्मानुष्ठानयोरपि निःश्रेयसफलं विन्दते इति प्रवदन्तीत्यर्थः ॥ ४ ॥

उक्तार्थमेव स्पष्टयति—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

यदिति । *सर्वकर्मसंन्यासलक्षणज्ञाननिष्ठैः सांख्यैः यन्मोक्षाख्यं स्थानं* प्रकर्षेणावाप्यते तदेव स्थानं मोक्षाख्यमीश्वराराधनलक्षणनिष्कामकर्मानुष्ठातारो ये ते योगिनः, तैः योगिभिः *सर्वकर्मसंन्यासलक्षणज्ञानद्वारा गम्यते* ज्ञानपूर्वकसंन्याससमत्वबुद्धिविशिष्टयोगयोरेवं फलैकत्वादेकमेवयं यः पश्यति स एव पश्यति । न च संन्यासकर्मयोगावर्जुनेन पृष्टौ, तस्योत्तरं सांख्ययोगावित्यप्रकृतं कथमुक्तमिति वाच्यम् । तावेव सांख्ययोगाविति शब्दान्तरेण प्रतिपादिताविति तत्रैव व्याख्यातत्वात् नाप्रकृतप्रक्रियाऽवकाश इत्यर्थः । सर्वकर्मसंन्यासलक्षणब्रह्मात्मनिष्ठाऽऽत्मकः सांख्ययोगः साक्षान्मोक्षसाधनं, निष्कामकर्मानुष्ठानलक्षणः कर्मयोगस्तु चित्तशुद्ध्यनन्तरभाविज्ञानद्वारा मोक्षसाधनमिति सर्ववेदान्तसंमतत्वाद्यथोक्तकर्मयोगात् यथोक्तकर्मसंन्यास एव श्रेयानित्यर्थः ॥ ५ ॥

अन्वयव्यतिरेकाभ्यामीश्वराराधनलक्षणनिष्कामकर्मयोगस्य पारमार्थिकसार्वकर्मसंन्यासलक्षणसांख्यबुद्ध्युपायत्वं स्फुटयति—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

संन्यासस्त्विति । हे महाबाहो ! चित्तशुद्धिसाधनीभूतनिष्कामकर्मानुष्ठानायोगतः पारमार्थिकसंन्यासस्त्वाप्तुं दुःखमशक्यमित्यर्थः । व्यतिरेकमुक्त्वा ऽन्वयमाह—योग इति । ईश्वराराधनलक्षणनिष्कामकर्मानुष्ठानं योगः, तेन युक्तः तदनुष्ठाता मुनिः विद्वान् ब्रह्म न चिरेण क्षिप्रमधिगच्छति । प्रकृतपारमार्थिककर्मसंन्यासो ब्रह्मोच्यते । 'न्यास इति ब्रह्मा ब्रह्मा हि परः' इति श्रुतेः । चित्तशुद्धेः प्राक्कालीनकर्मसंन्यासात् कर्मानुष्ठानं श्रेय इत्यत्र

२०

'प्रमाथिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनो ऽपि दृश्यन्ते वेदसंदूषिताशयाः ॥'

इति वार्तिककारपठितश्रुतिरेव प्रमाणमिति भावः ॥ ६ ॥

अविद्यावस्थानुष्ठितकर्माणीव विद्यावस्थायां संन्यासिभिः क्रियमाणानि स्नानादिकर्माण्यपि बन्धकानि स्युरिति तत्राह—

## योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
## सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

योग इति । ईश्वराराधनलक्षणनिष्कामकर्मयोगयुक्तः तदनुष्ठाता योगी किंचित्कुर्वन्नपि न लिप्यते । चित्तशुद्धयभावात् कथं निर्लेपो भवतीति तत्राह—विशुद्धात्मेति । निष्कामयोगतो विशुद्धः आत्मान्तःकरणं यस्य स विशुद्धात्मा कर्मफलसद्भावान्निर्लेप इत्यर्थः । अजितदेहस्य विशुद्धात्मता कथमिति तत्राह—विजितात्मेति । आहारसंकोचतो विजित आत्मा स्थूलदेहो यस्य स विजितात्मा । स्ववशीकृतदेहस्य विशुद्धात्मतोपपद्यत इत्यर्थः । अजितेन्द्रियस्य विजितात्मता वा कथमिति तत्राह—जितेन्द्रिय इति । चित्तशुद्ध्यनन्तरं भाविसर्वकर्मसंन्यासतो विषयपराङ्मुखतया जितानि स्ववशीकृतानि इन्द्रियाणि यस्य सो ऽयं जितेन्द्रियः, जितेन्द्रियस्य विजितात्मत्वादित्यर्थः । ब्रह्मात्मैक्यज्ञानाभावे कथमिन्द्रियाणि जेतुं शक्यन्त इति तत्राह—सर्वेति । सर्वेषु ब्रह्मादिस्तम्बान्तभूतेषु तदन्तर्यामित्वेन तत्तत्स्फूर्तिसुखप्रदत्वेन तद्भावाभावप्रकाशकत्वेन तदध्यारोपापवाददोषास्पृष्टत्वेन च भूतं प्रसिद्धपरमात्माभिन्नप्रत्यगात्मज्ञानं यस्य सो ऽयं सर्वभूतात्मभूतात्मा ब्रह्मात्मैक्यज्ञाननिष्ठ संन्यासी कुत्रापि कर्तृत्वाद्यभिमानरहितः सन् परारो-

पितप्रातिभासिकदेहस्थितिमात्रप्रयोजनकं स्नानभिक्षादि कर्म कुर्वन्नपि न लिप्यते । 'कुर्वन्नपि न कुर्वाण' इत्यादिश्रुते । स्वदृष्ट्या कर्मतल्लेपाभावात् मिथ्याभूतकर्मफलपाशै कथं बध्यत इत्यर्थ ॥ ७ ॥

'कुर्वन्नपि न लिप्यते' इति यदुक्तं तदेव विशदयति—नैवेति द्वाभ्याम् ।

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

नैवेति । निष्कामकर्मानुष्ठातृत्वेन युक्त समाहितचित्तत्वेन प्रत्यगभिन्न ब्रह्मतत्त्व वेत्तीति तत्त्ववित् सन्यासी दशन्द्रियदशप्राणान्त करणचतुष्टयत तत्तच्चेष्टायोग्यकाले, रूपाणि पश्यन्, शब्दान् शृण्वन्, शीतोष्णादीन्स्पृशन्, गन्धान् जिघ्रन्, अन्नरसानश्नन्, पन्थान गच्छन्, पुरीतति सर्वेन्द्रियोपरमलक्षणा निद्रा स्वपन्, उच्छ्वासनिश्वासभेदेन श्वसन्, उच्चावचानि वचनानि प्रलपन्, मूत्रादिकं विसृजन्, वस्तुजात गृह्णन्, उन्मिषन्निमिषन् उन्मषनिमेषणादिकं कुर्वन्नप्यवमिन्द्रियाणीन्द्रियार्थेषु स्वभावतो वर्तन्त इति धारयन्, सर्वा प्रवृत्तिरिन्द्रियाणामेव नाह किंचिदपि कर्म करोमि इति मन्येत मन्यत इत्यर्थ । न च 'कुर्वन्नपि न लिप्यते' इति विरुद्धमुच्यत इति वाच्यम् । कर्मठविलक्षणत्वात् इन्द्रियाणि स्वार्थेषु स्वभावत प्रवृत्तान्यपि तदज्ञानात् तत्तादात्म्यमेत्य अहमेव सर्व करोमीति यो ऽभिमन्यत तस्यैवोच्चावचकर्मलेप स्यात् तद्विपरीतस्य ब्रह्मात्मनिष्ठस्यन्द्रियन्द्रियार्थात्मात्मी

याभिमानविकलत्वेन कर्मलेपाभावात् न किंचिद्विरुद्धमित्यर्थः। यथा मृगतृष्णिकातत्त्वज्ञः तृषितो ऽपि जलबुद्धया तां पातुं न प्रवर्तते तथैव सर्वत्र-कर्म प्रत्यगभिन्नं ब्रह्म पश्यतः सर्वकर्मसंन्यास एवाधिकारप्रौव्यात् सो ऽयं विद्वान् कदाचिदपि न कर्मसु प्रवर्तते निवर्तते वेति भावः। 'मिथ्यामनोजृम्भितकर्मजाले न मे प्रवृत्तिर्न च मे निवृत्तिः' इति नैष्कर्म्यसिद्धिकारैरुक्तत्वात् ॥ ८, ९ ॥

यः स्वयं कर्मठो ऽपि ज्ञानीव कर्माचरति सो ऽपि न लिप्यत इत्याह—

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्मणीति। स्वाम्यर्थं भृत्यवत् यः कर्मठः परमेश्वराराधनार्थमेव सर्वं कर्म करोमीति ब्रह्मणि मनः समाधाय मोक्षफले ऽपि सङ्गं त्यक्त्वा सर्वाणि कर्माणि करोति, सो ऽयमम्भसा पद्मपत्रमिव पुण्यपापतन्मिश्रकर्मणा ज्ञानीव न लिप्यते। मत्प्रसादलब्धज्ञानतो निर्लेपो भवतीत्यर्थः ॥ १० ॥

निष्कामकर्मानुष्ठातुः कर्मबन्धनाभावे शिष्टाचारं प्रमाणयति—

**कायेन मनसा वाचा केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वा ऽऽत्मशुद्धये ॥ ११ ॥**

कायेनेति। निष्कामकर्मानुष्ठातारो ये योगिनः ते सर्वे केवलेन कायेन युक्ताहारविहारतः स्वाधीनेन केवलेन मनसा कर्मफलसंकल्पकामाकुण्ठिनेन केवलया वाचा परमेश्वरभजनं विना नान्यप्रलपनासक्त्या स्वार्थ-

पराङ्मुखत्वेन केवलैः ज्ञानकर्मेन्द्रियैरपि, आत्मा ऽन्तःकरणम्, तच्छुद्धये नानाविधकर्मफलसङ्गं त्यक्त्वा नित्यनैमित्तिकादि कर्म कुर्वन्ति ॥ ११ ॥

येनैव कर्मणा कश्चिद्बध्यते तेनैव कर्मणा कश्चिन्मुच्यत इत्यत्र कर्मफलसङ्गासङ्गनिष्ठौ बन्धमोक्षावित्याह—

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

युक्त इति । ईश्वराराधनार्थमिदं कर्म न मे तत्फलभोगायेति धिया युक्तः समाहितो योगी कर्मफलसङ्गं त्यक्त्वा नित्यादि कर्म कुर्वन् तदुदितां चित्तशुद्धिं प्राप्य ज्ञानद्वारा नैष्कर्म्यप्रभवत्वात् नैष्ठिकीमविद्यातत्कार्यशान्ति कैवल्यमुक्तिमाप्नोति ।

'तपसा प्राप्यते सत्त्वं सत्त्वात्संप्राप्यते मनः ।
मनसा प्राप्यते ह्यात्मा ह्यात्मापत्त्या निवर्तते ॥'

इति श्रुतेः । अन्वयमुक्त्वा व्यतिरेकमाह—अयुक्त इति । कामस्य कर्मफलाभिलाषस्य करणं कामकारः, तेन कामकारेण स्वच्छन्दतः सर्वोत्तमेन मया कर्तव्यं कर्म भोक्तव्यं तत्फलमिति निश्चित्य तत्साधनीभूतकर्मानुष्ठानेन तत्फलमवश्यं साधयामीति कुबुद्धिमानयुक्तः मम पशुपुत्रस्वर्गादिफलायेदं कर्म करोमीति तत्फले ऽतीव सक्तो निबध्यते, यथा पशुः तृणेच्छया बध्यते तथा ऽयं कर्मठः फल्गुकर्मफलेच्छया बध्यते । यत एवमतः त्वं युक्तो भव सदेत्यर्थः ॥ १२ ॥

नित्यशुद्धिविकलस्यैवं तावत्केवलकर्मसंन्यासात्कर्मयोगो विशिष्यत इत्युक्त्वा विशुद्धचित्तस्य सर्वसंन्यास एव श्रेष्ठ इत्युपदिशति—

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देहे नैव कुर्वन्न कारयन् ॥ १३ ॥**

सर्वेति । वशीकृतकरणग्रामत्वात् वशी ज्ञानी कृतकृत्य इत्यर्थः । कृतकृत्यत्वे ऽपि स्वरूपाच्युतये किंचित्कर्म कर्तव्यं स्यादिति तत्राह—संन्यस्येति । नित्यनैमित्तिककाम्यप्रतिषिद्धात्मकानि सर्वाणि कर्माणि संन्यस्य निःशेषं परित्यज्य खलु ज्ञानी कृतकृत्यपदं गतः । कृतकृत्यत्वं नाम कालत्रये ऽप्यच्युतब्रह्मात्मभावारूढत्वम्; तद्वत स्वरूपच्युतेरसंभवात् । केन संन्यसितव्यानि कर्माणीति तत्राह—मनसेति । कर्मादावकर्मादिदर्शनयोग्येनेत्यर्थः । न च मनसा संन्यस्येति विशेषणात् मानसानामेव सर्वकर्मणां संन्यासो न वाक्यायाधीनकर्मणामिति वाच्यम् । वाक्कायव्यापाराणां मानसव्यापाराधीनत्वात् मनोव्यापाराभावे वाक्कायव्यापाराणामुपरमात् 'मनसैवानुद्रष्टव्यम्' 'नेह नाना ऽस्ति किंचन' इत्यादिश्रुतेः । किं च सर्वे कर्माणीत्यत्र मनोवाक्कायकर्मणामुपलक्षणार्थत्वात् तत्र संकोचे मानाभावात् सर्वाणि मानसवाचिककायिककर्माणि संन्यस्येत्यर्थः । स्वेन सर्वकर्माणि सन्यस्यापि लोकसंग्रहार्थं कर्म कर्तव्यमिति तत्राह—नेति । अविद्यावस्थायामेव हि कर्माणि चोद्यन्ते, न विद्यावस्थायाम्, विदुषो ऽविद्यातत्कार्यमासब्रह्मात्मनिष्ठत्वात् तादृशस्य स्वभिन्नलोकतत्संग्रहनिमित्तभेदधिषणाऽभावात् किंचिदपि कर्म नैव कुर्वन्नित्यर्थः । वान्ताशनमूत्रपुरीषादिवत् सर्वकर्माणि सन्यस्य पुनस्तत्प्रवृत्तेरयुक्तत्वात् तथा ऽपि कृतार्थत्वबुद्ध्या स्वयं कर्माकुर्वन्नकृतार्थैः कर्माणि कारयितव्यानीति तत्राह—नेति । परैरपि कर्माणि न कारयन्नुदास्त इत्यर्थः । अहं कृतार्थो ऽयमकृतार्थ इति धीरविद्वद्प्युपपद्यते न विदुषि, तस्य स्वव्यतिरेकेण कृतार्थाकृतार्थभिदामूलाज्ञानाभावात् । तथा च श्रुतिः —

'आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसंग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥
मतिमह न गृहीयात्नैव चान्य मदापयेत् ।
प्रेरयद्वा तथा भिक्षु स्वप्ने ऽपि न कदाचन ॥'

इति । एव भगवदुक्तसर्वकर्मसन्यासस्य मरिष्यतो विना जीवत पुरुषस्या सभवात् सर्वकर्मसन्यासच्छलेन मरणमेव स्यादिति तत्राह—आस्त इति । ज्ञानपूर्वकसर्वकर्मसन्यासात्प्राग्जीवन्मृतो ऽपि श्रुत्याचार्यप्रसादोत्थविवेकवैराग्य सजीविस्पर्शनमात्रेण सुप्तोत्थित इव जीवन् स्वमरणहेतु कर्म निर्मूल सन्यस्यास्त वर्तत एवेत्यर्थ । एवभूतो विद्वान् क्वासनमर्हतीत्यपेक्षाया तदधिकरण निर्दिशति—देह इति । 'सप्त वै शीर्पण्या प्राणा द्वाववाञ्चौ' इति श्रोत्रादिमूत्रद्वारान्तनवद्वारोपेते अनेकद्वारतत्पालोपेतपुरसदृश स्थूलदेहे किमज्ञ इव तत्रात्मात्मीयाभिमानेनास्ते[1] तत्राह—सुखमिति । आध्यात्मिकादितापत्रयप्रयुक्तनानाविधदु खविधुर सन् ब्रह्मात्मैक्यसुखस्वरूपेण देहादावात्मत्वात्मीयत्वाभिमानमपि सन्यस्य सुखमास्ते षड्भावविकाराणामाध्यात्मिकादिदु खाना च देहनिष्ठत्वात् ज्ञानिनस्तावत् सच्चिदानन्दाकृतिशून्यत्वेन देहत्रयविलक्षणत्वात् सर्वकर्मसन्यासे ऽपि ज्ञानी सर्वत्र सर्वदा ऽऽस्त इत्युक्ति निरङ्कुशा स्यादित्यर्थ ॥ १३ ॥

'एष ह्येव साधु कर्म कारयति त यमेभ्यो लाकेभ्य उन्निनीपते, एष ह्येवासाधु कर्म कारयति त यमेभ्यो लोकभ्यो ऽधो निनीपते'[1] इत्यादि श्रुतिप्रकटितनिरङ्कुशस्वतन्त्रेण परमेश्वरेणास्वतन्त्रो जीव शुभाशुभफलप्रदकर्मसु प्रवर्त्यते निवर्त्यते वा स्वातन्त्र्येण न स्वय कर्म कर्तुं त्युक्तु वा

[1] कौ ३ ८

पारयति; तथा सतीश्वरस्यैव जीवकोटिभिः शुभाशुभकर्मकारयितृत्वेन राग-द्वेषप्रयुक्तपुण्यपापसंबन्धादनीश्वरत्वमनिवार्यमित्यत आह—नेति द्वाभ्याम् ।

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

नेति । प्रत्ययभेदेन स्वे महिम्नि भवतीत्युत्तमः पुरुषः प्रभुः परमात्मा । अनाद्यविद्यावासनाऽनुरोधेन प्रवृत्तिशीलं लोकमुद्दिश्य कुर्विति कर्तृत्वं न सृजति । कर्तृहेतुताऽभावे ऽपि कर्महेतुता स्यादिति तत्राह—नेति । शास्त्रीयाशास्त्रीयनित्यादिकर्माणि रथशकटप्रासादादीनि ईप्सितत-मान्यन्यानि च कर्माणि न सृजति । कर्तृकर्महेतुताभावेपि कर्मफल-संयोगहेतुता स्यादित्यत आह—नेति । शास्त्रीयादिकर्म कर्तुः विचित्ररथ-शकटप्रासादादि कर्म कर्तुः लोकस्य तत्फलसंयोगं च न सृजति कर्तृकर्म-तत्फलसंयोगांश्च नोत्पादयतीत्यर्थः । तर्हि कथं लोकः कुर्वन् कारयंश्च प्रवर्तत इति तत्राह—स्वभाव इति । अविद्याद्यलक्षणप्रकृतेः स्वभावस्तु स्वाज्ञाना प्रवर्तकत्वादिरूपेण प्रवर्तते । प्रकृतिचिन्निरस्योः स्वाज्ञस्वज्ञस्वभाव-निष्ठत्वेनेश्वरस्य स्वेतरवस्तुशून्यत्वेन रागद्वेषवत्पुण्यपापयुक्तत्वसंबन्धवैरस्यादीश्व-रत्वं निरङ्कुशमित्यर्थः । 'एष ह्येव' इति श्रुतेः का गतिरिति चेदुच्यते । स्वाविद्यानिष्ठकर्तृत्वादिकं स्वस्मिन्नारोप्य मोमुह्यमानजीववृन्दानुकम्पया हे जीववृन्द ! न त्वं कर्ता कारयिता वा । तूलाविद्यापरवशत्वेनास्वतन्त्रत्वा-दीश्वरस्य कर्तृत्वं कारयितृत्वमुपपद्यते, स्ववशीकृताविद्यत्वात् स्वबन्धमोचने यतस्वमनीश्वरमतः तन्निरासाय सर्वकर्तारं सर्वकारयितारं परमेश्वरं भज, तद्भजनेन विशुद्धचित्तं सद्वह्मावज्ञानं प्राप्य तद्रूपं भवसि । तज्ज्ञाने जाते कर्तृत्वादिकं त्वय्यपि सेद्धुं न पारयति । कदा ऽपि कर्तृत्वादिदोषास्पृष्टे प्रत्य-

गभिन्ने परमेश्वरे तत्कथं संभवति? तस्मान्मायामात्रं कर्तृत्वादिकम्, न परमार्थतो ऽस्तीति बोधयितुम् 'एष ह्येव' इति दयावती कौषीतकी श्रुतिः मवृत्ता। नेश्वरे कारयितृत्वादिप्रतिपादनार्थमित्यर्थः ॥ १४ ॥

अस्त्वेवमीश्वरे न्यस्तभारस्यानुग्रहार्थं तत्कृतं पापं पुण्यं वेश्वरः स्वीकरोतीति तत्राह—

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ १५॥**

नेति। सर्वव्यापकत्वाद्विभुः परमेश्वरः सर्वत्र प्रयोजको ऽपि सन् कस्यचिद्भक्तस्य पापं सुकृतं वा नादत्ते न चैव स्वीकरोति, आप्तकामत्वे सत्यनादिमायया तत्तत्प्राणिपूर्वकर्मानुसारेण प्रवर्तकत्वात्। ननु भक्ताननुगृह्णात्यभक्तान्निगृह्णातीति सर्वत्र प्रसिद्ध्या ऽस्य विषमबुद्धित्वेन कथमाप्तकामतेति तत्राह—अज्ञानेनेति। सर्वत्र भेदविपयास्पदेन स्वाज्ञानेनावृतमाच्छादितं कल्पितमित्यर्थः। किमित्यपेक्षायामाह—ज्ञानमिति। 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः[1]।' 'सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव, अत्र ह्येव न विचिकित्स्यम्।' 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समो ऽनेन सर्वेण[2]' इत्यादिश्रुतिप्रसिद्धप्रत्यगभिन्नब्रह्मज्ञानं निरावृतमप्यज्ञानेनावृतवद्भातीत्यर्थः। तेन मिथ्याभूतेन स्वज्ञानावरणेन गाढं समावृताः सन्तो जन्तवः परमेश्वरः स्वभक्ताननुगृह्णात्यभक्तान्निगृह्णातीत्येवमादि सर्वसाम्यपरमाद्वैतत्वेन प्रसिद्धे वासुदेवे मयि वैषम्यादि परिकल्प्य

[1] तै २. ८.
[2] बृ. १ ३ २२

तदनुरोधेनात्मनि करोमि कारयामि इत्यादि च कल्पयित्वा मुह्यन्ति महामोहनिद्रामनुभवन्तीत्यर्थः ॥ १५ ॥

सर्वेषां जन्तूनामज्ञानावृतत्वेन संसारानिवृत्त्या तन्निवर्तकशास्त्रवैय्यर्थ्यं स्यादिति तत्राह—

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

ज्ञानेनेति । जन्तवः पूर्वोक्तरीत्या येनाज्ञानेनावृताः सन्तो मुह्यन्ति तदज्ञानं येषां जन्तूनां प्रत्यगभिन्नब्रह्मज्ञानेन नाशितं भवति । यद्वच्चक्षुष्मतामादित्यः स्वोदयसमकालमेव समस्तज्ञेयावरणमुद्धाट्य ज्ञेयजातं प्रकाशयति तद्वत्तेषां जन्तूनां मदाराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्धिगम्यप्रत्यगभिन्नब्रह्मज्ञानं स्वोदयसमकालमेव स्वाज्ञानं निर्मूल्य तत्परं स्वेतरभिदाऽसहसत्तासामान्यब्रह्मस्वरूपं प्रकाशयति । तस्मात् स्वाज्ञानप्रभवसंसारनिवर्तकनिष्ठाद्वयगोचरस्य शास्त्रस्य न वैय्यर्थ्यमित्यर्थः ॥ १६ ॥

एवंभूतब्रह्मात्मैक्यज्ञानिनां परमफलं प्रकटयति—

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

तदिति । येषां तज्ज्ञानेनातज्ज्ञानं नाशितं ते कीदृशा इति तत्राह—तद्बुद्धय इति । तस्मिन् प्रत्यक्तत्त्वाभिन्ने परतत्त्वे स्वान्तर्बाह्यविलसितविषयजातविमुखीकरणतोऽसकृदनुष्ठितश्रवणमनननिदिध्यासनाविर्भूताखण्डाकारवृत्त्यात्मिका बुद्धिर्येषां ते तद्बुद्धयः । बोद्धृबोद्धव्यजीवपरयोर्भेदाद-

खण्डाकारात्मिका तद्बुद्धिः कथमुदेतीत्यत आह—तदात्मान इति । बोद्धृबोद्धव्यरूपजीवपरकल्पनायाः स्वाज्ञानविजृम्भितत्वेन मिथ्यात्वात् तत्परत्वेन विभातपरमात्माभेदेन प्रत्यगात्मा येषां ते तदात्मानः देहादावात्मत्वात्मीयत्वाभिमानमुत्पाद्य तद्विपरीतब्रह्मात्मना ऽवस्थातुमशक्यत्वात्तदात्मत्वं कथमिति तत्राह—तन्निष्ठा इति । स्वभावकल्पिताविद्याद्वयतत्कार्यजाते तस्मिन्नेव ब्रह्मणि पर्यवसानत्वेन निष्ठा तात्पर्यं येषां ते तन्निष्ठा. । पुरुषार्थान्तरापेक्षातः प्रतिपन्नान्तरायाणां तन्निष्ठता कथं संभवतीत्यपेक्षायामाह—तत्परायणा इति । मुमुक्षुत्वदशायामेव पुरुषार्थान्तरबुद्धेः प्रहाणतः तत्कृतान्तरायाभावध्रौव्यात् तदेव परमयनं परायणं कैवल्यं येषां ते तत्परायणाः । कर्मत्रयकल्मषवतां तत्परायणत्वं कथमिति तत्राह—ज्ञानेति । सम्यग्ज्ञानोदकेन निर्धूतः क्षालितः कर्मत्रयकल्मषो येषां ते ज्ञाननिर्धूतकल्मषाः कर्मत्रयातीतब्रह्मनिष्ठाः संन्यासिन इत्यर्थः । ते किं फलं प्राप्नुवन्तीत्यत्राह—अपुनरिति । पुनरावृत्तिहेत्वज्ञानाभावादपुनरावृत्तिलक्षणां विदेहमुक्तिं गच्छन्ति । सत्तासामान्यरूपा भवन्तीत्यर्थः ॥ १७ ॥

कीदृग्भूताः संन्यासिनो विदेहमुक्तिं गच्छन्तीत्यत्र समदर्शिन इत्याह—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

विद्येति । विद्या स्वात्मविद्या च विनयः शमादिश्च, ताभ्यां संपन्ने शुद्धसत्त्वप्रधाने सर्वोत्तमे ब्राह्मणे रजःप्रधानत्वेन सर्वसंस्कारहितायां मध्यमायां गवि च तमःप्रधानत्वेनाधमे हस्तिनि च स्मर्तुं द्रष्टुं वक्तुं स्प्रष्टुमयोग्यत्वेनाधमाधमे शुनि चैव श्वपाके च सत्त्वादिप्रधानब्राह्मणादिदेहेषु

उत्तमादिभावं गतेष्वपि तद्गतगुणदोषास्पृष्टत्वेन सर्वसमं प्रत्यगभिन्नं ब्रह्म द्रष्टुं शीलं येषां ते समदर्शिनो ज्ञानिन इत्यर्थः। युक्तायुक्तविवेकविकलत्वात् तेषां पाण्डित्यं दुर्लभमिति तत्राह—पण्डिता इति। सर्वकर्मसंन्यासेन साकं युक्तायुक्तविवेकास्पदविषमबुद्धेः संन्यस्तत्वादेवं वैषम्यविपरीतसाम्यदर्शनमेव हि पाण्डित्यम्। तस्मात् पण्डिताः संन्यासिन एवापुनरावृत्तिलक्षणं कैवल्यं गच्छन्तीत्यर्थः ॥ १८ ॥

'पण्डिताः समदर्शिनः' इति यदुक्तं तत्तुच्छम्। उत्तममध्यमाधमाधमाधमसमदर्शनप्रभवदोषाक्रान्तविवेकत्वात्कथं ते पाण्डित्यमर्हन्तीत्यपेक्षायां ब्राह्मणादिश्वपचान्तगतविषमभावस्य तत्तदुपाधिनिष्ठत्वेनोपाधीनां मायिकत्वेन च मिथ्यात्वात्तत्तदुपाध्यवच्छिन्नसत्ताया घटशरावाद्यवच्छिन्नव्योमवदेकरूपत्वेन समत्वात् साम्यब्रह्मणो निर्दोषत्वेन प्रसिद्धत्वादेवंभूतसाम्यब्रह्मदर्शिनां पाण्डित्यं निरङ्कुशमित्याह—

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥**

इहेति। सर्वान्तर्यामित्वेन सर्वाधिष्ठानत्वेन सर्वविलक्षणत्वेन च समभावमापन्ने साम्ये ब्रह्मणि येषां समदर्शनपण्डितानां मनः स्थितं साम्यब्रह्मभावापन्नं तैः समदर्शनपण्डितैः इह वर्तमाने देह एव सृज्यत इति सर्गः जन्मादिः संसारो जितो मिथ्याऽऽत्मदृष्ट्या निरस्तो भवति। हि यस्मादुक्तलक्षणं साम्यं ब्रह्म निर्दोषं तस्मात्ते सर्वदोषरहितसाम्यब्रह्मात्मदर्शनपण्डिताः *प्रत्यग्दृष्ट्या कल्पितविषमभावे परब्रह्मणि तद्भावमापद्य* स्थिताः, अत एव निर्दुष्टाः पण्डिता इत्यर्थः ॥ १९ ॥

साम्यब्रह्मभावापन्नपण्डितलक्षणमाह —

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

नेति । बुद्धेरस्थिरविषयगताया स्थिरतावैरल्यात् तद्गत स्थिरता कथमिति तत्राह—स्थिरेति । सर्वभूतेषूपाधितारतम्यतो विषमेष्वपि तद्विकारास्पृष्टत्वेन साम्य निर्दोष प्रत्यगभिन्न ब्रह्माहमस्मीति स्थिरा बुद्धिर्यस्य सो ऽय स्थिरबुद्धि , अखण्डाकारबुद्धिवृत्तिकवलितचलविषयगतबुद्धिवृत्तित्वात् स्वाज्ञानावृतस्य ब्रह्मात्मविषयकस्थिरबुद्धिता वा कथमिति तत्राह—असमूढ इति । स्वाज्ञानेन समूढ आवृतो न भवतीत्यसमूढो निरावृत इत्यर्थ । स्वज्ञानप्रलयकालाग्निप्रचण्डज्वालया स्वावारकाज्ञानसान्द्रपटस्य भस्मीकृतत्वात् स्वभेदेन घटवदसाक्षात्कृतब्रह्मतत्त्वस्यासमूढता कथमिति तत्राह—ब्रह्मविदिति । स्वभेदेन ब्रह्मविच्चेत् समूढो भवेत् । तद्विपरीतत्वेनायमसमूढ सन् स्वाभेदेन ब्रह्मतत्त्व वेत्तीति ब्रह्मवित् । स कुत्रासनमर्हतीति तत्राह—ब्रह्मणीति । प्रत्यगभिन्ने ब्रह्मणि स्थित तद्भावमापन्न इत्यर्थ । प्रियाप्रिययो सतोस्तद्गतहर्षविषादयो दुस्त्यजत्वेन कथ योगी ब्रह्मभावमेतीति तत्राह—नेति । एवभूतो ज्ञाननिष्ठ सन्यासी प्रियमिष्ट स्वादुभक्षण प्राप्य न प्रहृष्येदप्रियमनिष्टमस्वादुभक्षण प्राप्य प्रदातार नोद्विजेत् देहाभिमानिनामेव प्रियाप्रिय हर्षविषादौ प्रयच्छत , तद्विपरीतस्त्वेवलात्मदर्शिन प्रियाप्रियप्राप्तिहेतुदेहाभिमानाभावाद्विद्वान्निरङ्कुश ब्रह्मभावमाप्नोतीत्यर्थ ॥ २० ॥

बाह्येष्टानिष्टविषयेषु यावद्यावद्रागद्वेषावरण विशीर्यते तावत्तावन्निरावृतप्रत्यगभिन्नब्रह्मसुखाविर्भावो ऽतिरिच्यत इत्याह—

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१ ॥**

बाह्येति । इन्द्रियापेक्षया बाह्याश्च स्पृश्यन्त इति स्पर्शाः शब्दादि-विषयाश्च तेषु बाह्यस्पर्शेषु सक्तिं न करोतीत्यसक्तः पराङ्मुख आत्मा ऽन्तः-करणं यस्य सो ऽयमसक्तात्मा शब्दादिविषयपराङ्मुखः सन् आत्मन्यन्तः-करणे तद्भावाभावप्रकाशकप्रत्यगभिन्नपरमात्मभावापन्ने यदपरिच्छिन्नं सुखं विन्दति लभते,

'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥'

इति श्रुतेः । यो यत्सुखं प्राप्य कदाचिदपि न बाह्यमान्तरं वा जानाति सो ऽयं ब्रह्मात्मनिष्ठः सन्न्यासी तत्सुखस्वरूपप्रत्यगभिन्नब्रह्मणि योगो निर्विकल्पसमाधिः तेन युक्तः तद्भावापन्न आत्मा ऽन्तःकरणं यस्य स ब्रह्म-योगयुक्तात्मा सन्नक्षय्यमपरिच्छिन्नं प्रत्यकूपरचिदैक्यसुखमश्नुते शब्दादि विषयसुखस्य क्षणिकत्वेनाक्षय्यसुखार्थिनैष्टानिष्टविषयकरागद्वेषावरणोद्घाटनाय स्वार्थेभ्य इन्द्रियाणि निग्रहीतव्यानीत्यर्थः ॥ २१ ॥

यतो बाह्यान्तरिन्द्रियद्वयविजृम्भितविषयद्वयविमुखस्याक्षय्यसुखावाप्ति र्दर्शिता वैषयिकसुखानामावन्तवत्त्वेन प्रसिद्धत्वादतः तेषु रमणं न कार्य-मित्याह—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

ये हीति । हे कौन्तेय ! हि यस्मात्कारणात् इन्द्रियैरिन्द्रियार्थसंस्पर्शतो जाता ये शब्दस्पर्शादिभोगाः विषयाः तेषां भोगकाले ऽपि परस्परस्पर्धाऽसूयादिव्याप्तत्वादपारदुःखस्यैव योनिः कारणं येषां ते दुःखयोनयः ते भवन्ति, तदासक्तचेतसामिहामुत्र च दुःखपरंपराया अनिवार्यत्वेन दुःखयोनय एव । एवकारतः स्वान्तर्बाह्यविजृम्भिनेन्द्रियद्वयेन विषययुग्मपरायणलक्षणसंसारदशायामपि न सुखगन्धो ऽस्तीति द्योत्यते । न केवलं दुःखयोनयो विषयभोगाः किं त्वाद्यन्तवन्तश्च इन्द्रियैरिन्द्रियार्थसंयोगो भोगानामादिः तद्वियोगो ऽन्तश्च तद्वन्तः । मध्यमक्षणभावित्वेन क्षणभङ्गुरत्वात् बुद्धिपूर्वकारिणा सदोपेक्षणीया भोगा इत्याह—नेति । मध्यात्मरत्यावरणभोगेष्ववगतपरमार्थतत्त्वो बुधो न रमते । दावाग्निवन्नादपि जुगुप्सत इत्यर्थः ॥ २२ ॥

बुधत्वप्रापकध्यानप्रतिबन्धककामक्रोधादिवेगस्य सोढुमशक्यत्वेन बुधत्वानुपपत्त्या तत्प्राप्यकैवल्यस्य दुष्प्रापत्वमाह एवमतः कैवल्यहेतुबुधत्वप्रतियोगिकामक्रोधवेगः कुण्ठनीय इत्याह—

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

शक्नोतीति । इन्द्रियगोचरेष्टविषयस्मरणश्रवणदर्शनादितृष्णैव कामः, तद्विपरीतत्वेनानिष्टविषयदर्शनश्रवणाद्यसहिष्णुत्वैव क्रोधः, ताभ्यां कामक्रोधाभ्यामुद्भवो यस्य वेगस्य तं कामक्रोधोद्भवं वेगं मनोनेत्रायुत्कटक्षोभकारणम् । कामेन वेगितो मातरमप्यभिलषति । तथैव क्रोधवेगितः पितरं हन्तुमारभते । एवं कामादिवेगस्य दुर्निवारता प्रसिद्धा । अतः स्वशरीरविमोक्षणात् पतनात् प्रागिहैव कामक्रोधोद्भववेगसमय एव यः सोढुं शक्नोति सो ऽयं बुधः प्रत्य-

गभिन्ने ब्रह्मणि युक्त स्वज्ञानकवलितमाज्ञानतत्कार्यकामक्रोधोद्भववेगत्वात् स एवापरिमितसुखी, नेतर कामक्रोधादिवेगवेगित इत्यर्थः ॥ २३ ॥

यः कामक्रोधवेगसहिष्णु ज्ञानी सो ऽयमन्तर्मुख सन्मोक्षमेतीत्याह—

**यो ऽन्तःसुखो ऽन्तरारामस्तथा ऽन्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतो ऽधिगच्छति ॥ २४ ॥**

य इति । स्वभास्यकामादिवृत्तिकलितविषयसुखवैमुख्येनान्त प्रत्यगात्मन्येव सुख यस्य स यो ऽयमन्त सुख स्वानन्दकवलितवैषयिकसुखत्वात् तथा तूलाविद्यारचितवनिताऽऽदिरति विना ऽन्त प्रत्यगात्मन्येव रमण यस्य स यो ऽयमन्तराराम स्वात्मरतिकवलितलल्नाऽऽदिरतित्वात् तथा बाह्यनृत्तगीतश्रवणदर्शन विना ऽन्त प्रत्यगात्मन्येव ज्योतिर्दृष्टि दर्शनं यस्य स यो ऽयमन्तर्ज्योति प्रत्यग्दृष्टिकवलितपराग्दृष्टित्वात् अन्त सुखान्तरारामान्तर्ज्योतिषामन्तर्मुख क इत्यपेक्षाया यो ऽन्त सुख सो ऽन्तरारामो यो ऽन्तराराम सो ऽन्तर्ज्योतिर्यो ऽन्तर्ज्योति सो ऽन्तर्मुखो योगी प्रत्यगभिन्नत्वेन भूत सिद्ध ब्रह्माहमस्मीति ब्रह्मभूत सन् जीवन्नेव-अज्ञानरूपेणावस्थान ब्रह्मनिर्वाण निरतिशयानन्दलक्षणविदेहकैवल्यमधिगच्छति, कृतकृत्यो भवतीत्यर्थ ॥ २४ ॥

लोके तावत्के ऽपि ब्रह्मनिर्वाण न लभन्ते सदुचितसाधनवैकल्यादित्यपेक्षायामुपायदुरितक्षयद्वारा चित्तशुद्धिहेतुनिष्कामकर्मानुष्ठानपरिपाकत स-यग्य वेदान्तश्रवणादिसिद्धज्ञानविज्ञानादिसाधनयौष्कल्यवता मुक्तिरयत्नसिद्धा स्यादित्यर्थाह—

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

लभन्त इति। ज्ञानप्रतिबन्धकस्य कल्मषस्य जागरूकत्वेन कथ विद्वासो ब्रह्मनिर्वाणमर्हन्तीति तत्राह—क्षीणेति । सम्यग्ज्ञानप्रतिबन्धक कल्मष येषा ब्रह्माहमस्मीति चिरभावनया क्षीण ते क्षीणकल्मषा । तत्र सशयवता कल्मष निवृत्ति कथमिति तत्राह—छिन्नेति । वेदान्तश्रवणासिभि छिन्न द्वैध संशय येषा ते च्छिन्नद्वैधा । अनियतात्मना सशयनिवृत्ति कथमिति तत्राह—यतेति । यतो नियत आत्मा कार्यकरणसघातो येषा ते यतात्मान । सर्वभूताहितकारिणा यतात्मता कुत इति तत्राह— सर्वेति । स्वात्मत्वेन सर्वेषा ब्रह्मादिस्तम्बान्ताना भूताना यद्धित तदेवाचारन्तीति सर्वभूतहिते रता । एव विशेषणविशिष्टा क इति तत्राह—ऋषय इति । सर्वत्र निर्भया सन्त ऋषन्त्यटन्तीति सम्यग्दर्शनसपन्ना ऋषय सन्यासिनो ब्रह्मात्मनिष्ठा इत्यर्थ । ते किं लभन्त इति तत्राह—ब्रह्मेति । त एव ब्रह्म निर्वाण कैवल्य लभन्त इत्यर्थ ॥ २५ ॥

उक्तविशेषणविशिष्टत्वेन कामक्रोधवेगगुण्ठनकारिणामृषीणामपि देहपतनानन्तरमेव कैवल्यावाप्ति नार्वागित्येव प्राप्ते तत्रोच्यते—

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥**

कामेति । यतीना परमहसपरिव्राजकशिखामणीनाम् अभित उभयथा ऽपि स्वशरीरे स्थिते मृते वा स्वेतरात्मप्रपञ्चारोपापवादविभ्रमातीतत्वेन प्रसिद्ध ब्रह्मनिर्वाण विदेहकैवल्य वर्तते नेतरेषामित्यर्थ । अनियतचेतसा यतित्वानुपपत्त्या तत्प्राप्यब्रह्मनिर्वाण कथमिति तत्राह—यतेति । स्वेतर

=

विषयतो यत निगृहीत चेतो येषा तेषा यतचेतसा यतित्व निरङ्कुश मित्यर्थ । कामक्रोधयो सतो यतचेतस्त्व कुत इति तत्राह—कामेति । रागमूल कामश्च द्वेषमूल क्रोधश्च कामक्रोधौ, ताभ्या वियुक्ताना जीर्णकाम क्रोधाना न यतचेतस्त्वव्याघात इत्यर्थ । केवलकामक्रोधवेगसहिष्णूना ज्ञानाभावे ऽपि मुक्ति स्यादिति तत्राह—विदितात्मनामिति । ब्रह्मैवाहमह-मेव ब्रह्मेति प्रत्यगभेदेन परमात्मा यैर्विदित तेषा विदितात्मना विदितात्मता-सुदृढत्वेऽकुण्ठितकामक्रोधवेगानामेव ब्रह्मनिर्वाणावाप्ति, अन्यथा केवलकाम-क्रोधवेगसहिष्णूना मुक्तिलाभे पाषाणादीनामनुत्पन्नकामक्रोधवेगानामपि मुक्तिर्वक्तव्या स्यात्, तस्माद्विदितात्मना यतीनामेवाभितो ब्रह्मनिर्वाणावाप्ति निरङ्कुशेत्यर्थ ॥ २६ ॥

एव विशेषणविशिष्टाना सद्योमुक्ति प्रतिपाद्याथ तादृशाधि कारविधुराणा मुमुक्षूणा सद्योमुक्तिप्रापकसम्यग्ज्ञानान्तरङ्गसाधनीभूत ध्यान-योगमाह—स्पर्शानिति द्वाभ्याम् ।

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाऽभ्यन्तरचारिणौ ॥ २७ ॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥**

स्पर्शानिति । बाह्या अपि स्पर्शा शब्दादिविषया स्वान्तश्चिन्तिता सन्तो ऽन्त प्रविशन्ति, अन्तश्चिन्तापरित्यागेन बाह्यस्पर्शान् बहिरेव कृत्वा ऽथ चक्षुर्मुन्मिमीलन्मनो निद्रातमसि बिलीयते, तथोन्मीलने च यथापूर्व बहि प्रसरेत्, उभयविघातरायनिकृन्तनतायोर्न्मीलनेन भ्रुवोरन्तरे मनो वृत्तिकलित चक्षुश्च कृत्वा, भ्रुवोर्मध्य चक्षुषी निधायेत्यर्थ । उच्छ्वासनि श्वास

रूपेण नासाबिलयोरभ्यन्तरचारिणौ प्राणापानौ भवत । यथा प्राणो बहिर्न गच्छत्यपानो ऽन्तर्न विशति तथा मन्दोच्छ्वासनिःश्वासाभ्या प्राणापानौ समौ निर्व्यापारौ कृत्वा अनेनैवोपायेन यता संयता इन्द्रियमनोबुद्धय यस्य सो ऽयं यतेन्द्रियमनोबुद्धि, अहं ब्रह्म ब्रह्माहमिति मननशीलो मुनि, अविद्यातत्कार्यग्रासो यो मोक्ष स एव परमयनं पर्यवसान यस्य सो ऽयं मोक्षपरायण, विगता इच्छाभयक्रोधा यस्य सो ऽयं विगतेच्छा-भयक्रोध; एवं यो वर्तते सो ऽयं यति नित्यं सदा स्वदेहे परदृष्ट्या स्थिते मृते वा मुक्त एव भवतीत्यर्थ ॥ २७, २८ ॥

एवं समाहितचित्तेन यज्ज्ञेयं ज्ञानानन्तरं यत्प्राप्य तद्वदन्नुपसंहरति—

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥ इति ॥**

इति श्रीमद्भगवद्गीता० कर्मसंन्यासयोगो नाम पञ्चमो ऽध्याय ॥

भोक्तारमिति । कर्तृरूपेण देवतारूपेण च यज्ञाना तपसा च भोक्तारं सर्वलोकाना महान्तमीश्वरं सर्वेषा ब्रह्मादिस्तम्बान्तभूताना सेवा-मनपेक्ष्य निर्हेतुजातकटाक्षभूषणपरमदयालुत्वेन सुहृदं सर्वभूतगुहाशय सर्व-कर्मफलप्रदातारं सर्वसाक्षित्वेन सर्वसाक्षित्वेन सर्वाधिष्ठानत्वेन स्वभावतो निरधिष्ठानसत्तासामान्यब्रह्मरूपत्वेन च वर्तमान मा नारायणं प्रत्यगभेदेन ज्ञात्वा ऽविद्यातत्कार्यशान्ति विदेहमुक्तिम् ऋच्छत्याप्नोति । इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ २९ ॥

सर्वकर्मत्यज साम्यब्रह्मदर्शनपण्डिता ।
यान्ति यद्ब्रह्मनिर्वाणं स मे कैवल्यकारणम् ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां पञ्चमो ऽध्याय ॥

# षष्ठो ऽध्यायः

समभावपराभृष्टयोगारूढस्य लक्षणम् ।
तत्साधनाना सर्वस्व चाह पार्थाय माधव ॥

पञ्चमाध्यायान्ते 'स्पर्शान्कृत्वा वहि' इति श्लोकद्वयेन ध्यानयोगो य सूत्रित तद्वृत्त्यर्थं षष्ठाध्याय आरभ्यते । तत्र शुद्धान्त करणानाम कामिनामेवाधिकारात् तद्विपरीताना कामिना तत्पदारोहाय तद्बहिरङ्गसाधन तै कर्तव्यमिति निष्कामकर्मानुष्ठातार स्तुवन् श्रीभगवानुवाच —अनाश्रित इति द्वाभ्याम् ।

श्रीभगवानुवाच—

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

अनाश्रित इति । य कर्मण्यधिकृत कामी श्रौतस्मार्तविहितकर्मफलमनाश्रित सन् स्वेन कार्यं कर्तव्य काम्यकर्म विपरीत नित्यादिकर्म करोति स निष्कामकर्मानुष्ठाता न निरग्नि अग्निसाध्ययज्ञादिकर्मणामपरित्यागात्, न चाक्रिय क्रियासाध्यपूर्तादिकर्मापरित्यागात् साग्नि सक्रिय सन्नपि काम्यकर्मानुष्ठातृभ्यो वरिष्ठ इति सन्यासी च योगी च भवतीति उपचर्यत इत्यर्थ ॥ १ ॥

वेदशास्त्रपुराणेषु सर्वत्र निरग्नेरक्रियस्यैव सन्यासित्वयोगित्वयो प्रसिद्धत्वेन साग्ने सक्रियस्य कामिन सन्यासित्वयोगित्वे कथमित्यत्र मुख्य सन्यासित्वाभावे ऽपि गौणसन्यासित्वादिमभवादिति परिहरति—

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

यमिति । हे पाण्डव ! वेदशास्त्रपुराणानि भगवति वासुदेवे मयि य सर्वकर्मफलसमर्पण सन्यासमिति प्राहु त निष्कामकर्मानुष्ठानलक्षण योग विद्धि । सन्यासयोगयो साम्यस्य दुर्लक्ष्यत्वादिति तत्राह— न हीति । हि यस्मात् असन्यस्तकर्मफलविषयकसकल्प कश्चन कश्चिदपि कर्मठो न योगी चित्तसमाधानवान् न भवति, तद्विषयकसकल्पस्य चित्तविक्षे पहेतुत्वात् । तस्मात् सर्वकर्मफलसकल्पस्य सन्यस्तत्वसाम्येन काम्यकर्मानुष्ठा तृभ्यो वैशिष्ट्यात् गौण्या वृत्त्या निष्कामकर्मयोगी सन्यासी च योगी च भवतीत्युच्यत इत्यर्थ ॥ २ ॥

एव निष्कामकर्मयोग स्तुत्वा तस्यावधिमाह—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

आरुरुक्षोरिति । ध्यानयोगे ऽवस्थातुमसमर्थस्यापि ध्यानयोगमारोढु मिच्छो आरुरुक्षो मुनेर्मुमुक्षो, कामिनश्चित्तशुद्ध्यभावात् तदर्थ निष्काम कर्मानुष्ठान योगारूढपदप्राप्त्यै कारण साधनमुच्यते । चित्तशुद्धिपर्यन्तमित्यर्थ । एव साधनपरिपाकवशादुत्पन्नचित्तशुद्धे तस्यैव योगारूढस्य सर्वकर्मसन्यास लक्षण शम सर्वोपरम कारण साधनमुच्यते ।

'यावत्कर्मोपरमते तावच्चित्त विशुध्यति ।
नि शेषकर्मसन्न्यासाद्योगारूढो भवेन्मुनि ॥'

इति स्मृते ॥ ३ ॥

कदा योगारूढो भवतीत्युच्यते—

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्यते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

यदेति । यदा यस्मिन्काले ज्ञानकर्मेन्द्रियार्थेषु शब्दादिविषयेषु नित्यनैमित्तिककाम्यप्रतिषिद्धकर्मसु च भोक्तव्यत्वेन कर्तव्यत्वेन च नानुषज्यते न मन्यते, आसक्तिं न करोतीत्यर्थ । तदा इहामुत्रार्थविलसितकामहेतुसक स्यान् सन्यसितु शीलमस्येति सर्वसकल्पसन्यासी ध्यानयोगारूढ इत्युच्यते । सर्वसकल्पसन्यासीत्युक्त्या कामस्य सकल्पमूलत्वेन कर्मण काममूलत्वेन च सर्वसकल्पसन्यासमात्रात् तत्कार्यसर्वकामतत्कार्यसर्वकर्मसन्यासो चोध्यते ।

'काम जानामि ते मूल सकल्पात्किल जायसे ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥
सकल्पाद्वै भवेत्काम कामात्कर्म भवेत्तत ।
अत सकल्पसत्यागात्तत्कार्यं त्यक्तमेव हि ॥'

इत्यादिस्मृते ॥ ४ ॥

यत सर्वसकल्पसत्यागमात्रेण मोक्ष तदभावे बन्धो भवत्यत सर्व सकल्पसन्यासेनात्मानमुद्धरेदित्याह—

**उद्धरेदात्मना ऽऽत्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

उद्धरेदिति । आत्मना सर्वसंकल्पभावाभावप्रकाशकप्रत्यग्भावारूढनिर्विकल्पकमनसा सर्वसंकल्पकामकर्मसागरमध्यगतमात्मानं मन संकल्पादिसंसारादुद्धरेत् । पुनर्यथोक्तलक्षणमात्मानं मनो नावसादयेत् नाधो नयेत् । संसारसागरमध्यगमात्मानं तदीयो बन्धु संसारादुद्धरिष्यतीति तत्राह—आत्मैवेति । हि यस्मात्संकल्पादिजुष्टस्यात्मनो मनस तत्संकल्पोत्थसंसारमोचने स्वयमात्मैव निर्मूलीकृतसंकल्पवृत्तिमन्मन एव बन्धु । एवकारात्स्वव्यतिरेकेणात्मनो बन्धुर्नास्तीति द्योत्यते । स्वान्यबन्ध्वभावे ऽपि स्वातिरिक्त शत्रु स्यादिति तत्राह—आत्मैवेति । प्रत्यग्भावारूढस्यात्मनो मनस पराग्भावारूढ आत्मा मन एव रिपु । तस्मात्स्वेनैव स्वात्मोद्धर्तव्य इत्यर्थ ॥ ५ ॥

एकस्यैवात्मनो बन्धुत्व रिपुत्व च मिथोविरुद्धमित्याशङ्क्य वस्तुत एकत्वे ऽपि पराक्प्रत्यग्भावालम्बनकृतस्य भेदस्य सत्त्वात् बन्धुत्व रिपुत्व चाविरोधेनोपपन्नमित्याह—

**बन्धुरात्मा ऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥**

बन्धुरिति । तस्यात्मन कार्यकरणसंघातानुग्राहकमनस स्वस्या पारपराङ्मुख आत्मा ऽन्त करणमेव बन्धु । बन्धुत्वमेव स्फोरयति— येनेति । येनात्मना प्रत्यग्भावारूढेनान्त करणेनात्मैव कार्यकरणानुग्राहकमन एव जित अतद्व्यापृतितो व्यावृत्य स्वभावे नियोजित स्ववशीकृत इत्यर्थ । अनात्मनस्त्ववशीकृतमनसस्तु विषयाकारपरिणतान्त करणरूप आत्मैव प्रसिद्धशत्रुवत् शत्रुभावे वर्तेत वर्तते । वशीकृतमनसो निर्विक्षेपत्वेन समाधिसंभवान् तद्विपर्ययस्य तदसंभवाच्च बन्धुत्वादिक संभवतीत्यर्थ ॥ ६ ॥

कथं पुनः संयतान्तःकरणस्य बन्धुरात्मेति उच्यते—

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

जितात्मन इति । कार्यकरणसंघातानुग्राहकमनोरूप आत्मा येन ब्रह्माकारपरिणतमनसा जितो वशीकृतः, तस्य जितात्मनः प्रशान्तस्योपशान्तसंकल्पादिवृत्तिमन्मनोरूपस्यात्मनः प्रत्यग्भावारूढस्याविद्याद्वयतत्कार्यजातात्परत्वेन तत्सर्वमतति व्याप्नोतीति परमात्मा स्वेन रूपेण समाहितः अभिव्यक्तो भवतीत्यर्थः । पूर्वार्धेन जितात्मवन्तं सर्वकर्मसंन्यासलक्षणज्ञानाधिकारिणं निरूप्य तयोत्तरार्धेन योगाङ्गान्युपदिशति—शीतेति । जलवातादिप्रभवं शीतमातपाग्न्यादिप्रभवमुष्णं चेष्टविषयजं सुखं चानिष्टविषयजं दुःखं च शीतोष्णसुखदुःखानि, तेषु शीतोष्णसुखदुःखेषु सभायां स्वस्य सर्वोत्तमत्वेन तत्रत्यैः प्रशंसनं पूजनं वा मानं तद्विपरीत्येन निन्दनं परिभवो वा अपमानं तयोः, शीतोष्णसुखदुःखेषु तूलाविद्याविजृम्भितेषु तथा मानापमानयोश्च समत्वमेव योगारूढत्वे हेतुरित्यर्थः ॥ ७ ॥

एवं समाहितचित्तः कथं व्यवहरतीत्यत्र तद्रीतिं वदन् योगारूढलक्षणमुपसंहरति—

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

ज्ञानेति । प्रत्यगभिन्नब्रह्मभावेन युक्तो योगी योगारूढ इत्युच्यते । काञ्चनादिष्वासक्तचेतसो युक्तात्मता कथमिति तत्राह—समेति । समानि

लोष्टाश्मकाञ्चनानि यस्य सो ऽय समलोष्टाश्मकाञ्चन मृत्पाषाणसुवर्णादिषु हेयोपादेयवैकल्येन समत्वाद्युक्तात्मतोपपद्यत इत्यर्थ । अविजितेन्द्रियस्य समत्व कुत इति तत्राह—विजितेति । ज्ञानकर्मेन्द्रियाणि स्वार्थकलनायो गतो येन विजितानि सो ऽय विजितेन्द्रिय । प्रत्यग्भावारूढमन कवलिते न्द्रियव्यावृत्तित्वात् न समत्वव्याघात इत्यर्थ । तूलाविद्याकृतविकारानु कारिणो विजितेन्द्रियता कथमिति तत्राह —कूटस्थ इति । घटशरावादि विकारानुगतमिव भासमानमपि तद्विकारास्पृष्टत्वेन तदवच्छिन्नाकाश कूट-मित्युच्यते । कूटवन्निर्विकार तिष्ठतीति कूटस्थ । स्वेतरविकारतदनुकरणा भावात् विजितेन्द्रियता निरङ्कुशेत्यर्थ । केनाप्यतृप्तात्मन कौटस्थ्य कथ मिति तत्राह—ज्ञानेति । निष्कामकर्मानुष्ठानजनितचित्तशुद्धे परम्,

'उपक्रमोपसहारावभ्यासो ऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्ग तात्पर्यनिर्णये ॥'

इति स्मृत्यनुरोधेन षड्विधलिङ्गपरामर्शतो वेदान्तशास्त्रपरिज्ञानमेव ज्ञानम्, तदेवापरोक्षानुभूतिरूढ चेत् विज्ञानम्, ताभ्या तृप्त आत्मा ऽन्त करण यस्य सो ऽय ज्ञानविज्ञानतृप्तात्मा न बाह्यविषयेण । तादृशकौटस्थ्यसमत्वादेव विशेषणविशिष्टो योगारूढ इत्यर्थ ॥ ८ ॥

पूर्वोक्तयोगारूढताप्राप्त्यन्तरङ्गसाधनमुपदिशति—

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

सुहृदिति । पूर्वार्धमेक पदम् । प्रत्युपकारानैरपेक्ष्यणोपकर्ता सुहृत् । स्नेहपाशत उपकर्ता मित्रम् । सदा रन्ध्रान्वेषणपूर्वकमपकार्यरि । स्वकार्यामा

वत सर्वत्रोपेक्षावानुदासीन । परस्परकोपेण मिथो विवदमानयो अपक्षपाती मध्यस्थ । स्वापकारित्वेन निग्रहीतव्यो द्वेष्य । स्वापत्काले यथाबल स्वापन्मोचको बन्धु । तेषु सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु शास्त्रार्थानुकारिषु साधुष्वपि शास्त्रार्थप्रतिषिद्धकारिषु पापेषु च स्वाचौपाधिकगुणवैचिन्ध्याद्धचनीचभाव गतेष्वपि तदधिष्ठानचैतन्यस्य निरूपाधिकत्वेन निर्गुणत्वादिति भावनया समरागद्वेषमूलविषमभावविरला बुद्धि यस्य सो ऽय समबुद्धि योगी योगारूढ साधकेभ्यो विशिष्यते । तत्साधनेभ्यो ऽन्तरङ्गसाधनानुष्ठातृत्वादित्यर्थ ॥ ९ ॥

एवभूतसमत्वबुद्ध्युपेययोगलक्षणमाह—योगीति त्रयोविंशत्या श्लोकै ।

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

योगीति । योगारूढपदेच्छुत्वाद्योगी स्वात्मानमन्त करण युञ्जीत मत्प्राप्त्यापन मन परमात्मन्यकीकृत्य स्थिरीकुर्यादित्यर्थ । कियन्त यामपर्यन्त मनुसन्धयमिति तत्राह—सततमिति । यथा यथा मनश्चैत्याभिमुख न भवेत्तथा तथा यावज्जीवमनुसधेयमित्यर्थ । तथा ऽपि किं चित्द्रोहयामनुसंधेयमिति तत्राह—रहसीति । गिरिगुहाऽऽदावेकान्ते रहस्येवानुसधयमित्यर्थ । आरुरुक्षोर्जनसबाधस्य विक्षेपहेतुत्वात् किं दारपुत्रादिभि मिलित्वा ऽनुसधयमिति तत्राह—एकाकीति । दारपुत्रधनादिक सन्यस्य स्वदेहमात्रावशिष्टो यथर्तत तेनैकाकिना मनो निग्रहीतव्यमित्यर्थ ।

'एकाकी नि स्पृहस्तिष्ठेन् हि केन सहालपेत् ।
आत्मनैव सहायन सुखार्थी विचरेदिह ॥

संदिग्ध सर्वभूताना वर्णाश्रमविवर्जित ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥'

इत्यादिश्रुते । एवमेकाकिनो ऽपि करणद्वयस्य सत्त्वेन विषयव्याप्तेर वैरल्यान्मनोनिग्रहावसर कुत इति तत्राह—यतेति । अन्त करणं चित्त बहिःकरणमात्मा तावुभावपि येन यतो सो ऽय यतचित्तात्मा करणद्वय-सत्त्वे ऽपि विषयग्रहणस्योपरमात् तेन मनो निग्रहीतुं शक्यमित्यर्थ । निगृहीतकरणग्रामस्यापि स्वप्राप्यमोक्षाशी सभवात तेन विक्षिप्तचित्तेन तत्कथं निगृह्यत इति तत्राह—निराशीरिति । निर्गता बन्धमोक्षविषया आशीस्तृष्णा यस्मात्सो ऽयं निराशी 'स्वसंकल्पवशात् बद्धो नि सङ्कल्पा द्विमुच्यते' इति श्रुत्या बन्धमोक्षयो संकल्पभावाभावनिष्ठत्वात् तद्धेत्वविद्या द्वयतत्कार्यातीतब्रह्मनिष्ठस्य मनोनिष्ठबन्धमोक्षाशाविरल्यादित्यर्थ । परिग्रह यतो निराशीस्त्वं कथमिति तत्राह—अपरिग्रह इति । शरीरस्थितिमात्र हेतुपरिग्रहेतर परिग्रहो न यस्यास्ति सो ऽयमपरिग्रह । एकाकीत्यादि-विशेषणसामर्थ्यात् सर्वकर्मसन्यासिन एवोक्तलक्षणध्यानाधिकारो द्योत्यत इत्यर्थ ॥ १० ॥

आदावासननियममाह—शुचाविति द्वाभ्याम् ।

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥**
**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

शुचाविति । स्वभावत संस्कारतो वा शुचौ देशे स्वासन स्वस्य स्थिरमचलमशिमान्यादिरोगानुत्पाद्यं नात्युच्छ्रितं नातिनीचमादौ शुद्धात्मनो

व्याघ्राजिनं कृष्णाजिनं वा ततश्चैलमिति यत्चैलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य तत्रासने उपविश्यैकाग्रं विक्षेपराहित्येन प्रत्यग्भावारूढं मनः कृत्वा यता नियता स्वान्तर्बाह्यविलसितचित्तेन्द्रियाणां क्रिया यस्य सो ऽयं यतचित्तेन्द्रियक्रिय सन्नात्मनो ऽन्तःकरणस्य शुद्धये ब्रह्मात्मनोर्योगमैक्यानुसंधानं युञ्ज्यादभ्यस्येदित्यर्थ ॥ ११, १२ ॥

योगाधिकारिणः चित्तैकाग्र्योपायं शरीरधारणमाह—सममिति द्वाभ्याम् ।

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

सममिति । कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवम् । सिद्धासनस्थकायमापादमस्तकं सममवक्रमचलं धारयन् स्थिरो दृढप्रयत्नो भूत्वा अर्धोन्मीलितचक्षुर्भ्यां स्वनासिकाग्रं संप्रेक्ष्य दश दिशश्चानवलोकयन्योकासन आसीतेत्यर्थ ॥ १३ ॥

प्रमादवृत्तिशून्यस्यैकत्रावस्थानं कुत इति तत्राह—

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

प्रशान्तात्मेति । प्रमादवृत्तिशान्त आत्मा ऽन्तःकरणं यस्य सो ऽयं प्रशान्तात्मा । प्रशान्तमनस एकत्रासनमुपपद्यत इत्यर्थः । 'द्वितीयाद्वै भयं भवति' इति श्रुत्या द्वैतस्य विद्यमानत्वेन तज्जभयस्यानिवार्यत्वात् प्रशान्तमनस्त्वं कुत इति तत्राह—विगतेति । परमाद्वैतदर्शनतो विगता भीः यस्य सो ऽयं विगतभी निर्भयब्रह्मैकवस्तिमीतित्वात् 'यदा ह्येवैष एतस्मिन्न-

दृश्ये ऽनात्म्ये ऽनिरुक्ते ऽनिलयने ऽभयं प्रतिष्ठां विन्दते । अथ सो ऽभयं गतो भवति' इति श्रुते । ब्रह्मचर्यव्रतपराङ्मुखस्याभयप्रतिष्ठा कुत इति तत्राह—ब्रह्मचारीति । ब्रह्मभावेन चरतीति ब्रह्मचारी, तस्य ब्रह्मचारिणो व्रत तद्ब्रह्मवाच्युतिपुर सर शरीरस्थितिमात्रनिर्वाहकभिक्षाशनादि, तस्मिन् ब्रह्मचारिव्रते स्थित तस्यैवाभयप्रतिष्ठाऽधिकारात् असयतमनसो ब्रह्मचर्यासन कथमिति तत्राह—सयम्येति । ब्रह्मचर्यव्रतादन्यत्र मन सयम्य प्रत्याहृत्य ब्रह्मचारिण्यमे परमेश्वरे मयि चित्तमन्त करण यस्य सो ऽय मच्चित्त तादृशस्य ब्रह्मचर्यव्रतस्थितिरुपपद्यते । पुरुषार्थान्तरेच्छोस्त्वचित्तत्व कथ मिति तत्राह—मत्पर इति । अह प्रत्यगभेदेन वासुदेव एव पर परम पुरुषार्थो यस्य सो ऽय मत्पर एवभूतो योगी युक्त समाहित सन्नासीत यथोक्तासनमुपविशेदित्यर्थ ॥ १४ ॥

एवमभ्यासफलमाह—

युञ्जन्नेवं सदा ऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

युञ्जन्निति । एव प्रागुक्तप्रकारेण नियत मानस यस्य सो ऽय नियतमानसो योगी स्वात्मान कार्यकरणसघातानुग्राहकमन्त करण युञ्जन् सन् प्रत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षण ब्रह्मनिर्वाणमेव यस्या सर्वकर्म सन्न्यासलक्षणाया शान्ते परमा निष्ठा ता निर्वाणपरमाम् अविद्या द्वयतत्कार्यशान्तिं मत्सस्था मद्रूपावस्थानलक्षणत्वेन मदधीनामधिगच्छति प्राप्नोतीत्यर्थ ॥ १५ ॥

एवमभ्यासिन आहारविहारादिनियममाह—नेति द्वाभ्याम् ।

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

हे अर्जुन! अत्यश्नत अधिक भुञ्जानस्य एकान्तमत्यन्तमनश्नत अभुञ्जानस्यापि योगो धारणा न चास्ति, अतिस्वप्नशीलस्यातिजाग्रत पुरुषस्यापि योग समाधिर्नास्त्येवेत्यर्थ ॥ १६ ॥

व्यतिरेकमुक्त्वा ऽन्वयमाह—युक्त इति ।

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**

'अर्धं सव्यञ्जनान्नेन तोयेनैक प्रपूरयत् ।
वायो सचरणार्थाय चतुर्थमवशेषयेत् ॥
पुरीषमूत्रोत्सर्गार्थं भिक्षार्थं विहरेत्क्वचित् ।
शिष्ट योगासने तिष्ठेत् सिद्धयर्थी यतिसत्तम ॥'

इत्यादिस्मृत्यनुरोधेन आह्रियत इत्याहारो ऽन्नादि, विहार पदक्रम, तौ युक्तौ नियतौ यस्य तस्य युक्ताहारविहारस्य श्रुतिस्मृत्यनुगृहीतस्वाश्रमोचितदेहेन्द्रियादिव्यापारकर्मसु युक्ता नियता चेष्टा यस्य तस्य युक्तचेष्टस्य,

'यामपट्क जागरस्य काल स्वप्नस्य चापर ।
एव जाग्रत्स्वपन्योगी नीरोगी सिद्धिमाप्नुयात् ॥'

इति स्मृत्यनुरोधेन युक्तौ स्वप्नावबोधौ यस्य तस्य योगिनो योग ससारदुःखहा भवति ॥ १७ ॥

एव नियत सन् कदा युक्तो भवतीत्यत आह—

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥**

यदेति । यदा यस्मिन्काले स्वचित्त बाह्यान्तर्व्यापारात् विनियत निगृहीत सत् तद्विपरीतब्रह्मात्मन्येवावतिष्ठते तदा दृष्टादृष्टसर्वकामेभ्यो नि स्पृहो भवति स एव युक्तो ब्रह्मनिष्ठ इत्युच्यते ॥ १८ ॥

ब्रह्मात्मनिष्ठचित्तोपमामाह—

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

यथेति । यतचित्तस्य सयतान्त करणस्यात्मन स्वस्य योगिन प्रत्य ग्रूपस्य परमात्मना योगमैक्य युञ्जतो भावयत चित्त प्रत्यगभिन्नब्रह्माभा वसन्त करण यथा निवातस्थो दीपो नेङ्गते न चलति तथैव कदाचिदपि न चल्तीत्यर्थ । स्वव्यतिरेकेण मन सकल्पकामकर्मवातप्रचाराभावादेव चित्त वृत्तिप्रचारदर्शनचतुरै निवातदीपयो योपमीयते सोपमा स्मृता चिन्तित त्यर्थ ॥ १९ ॥

'य सन्यासमिति प्राहुर्योग त विद्धि' इत्यादौ निष्कामकर्मैव योगशब्देनोक्त । इदानीं तु 'युक्ताहारविहारस्य योगो भवति दु खहा' इत्यादौ तु प्रत्यगभेदेन ब्रह्मानुसधानसमाधिरेव योगशब्देनोक्त । तत्र मुख्ययोग क इत्यपेक्षाया यथोक्तकर्मयोगस्य चित्तशुद्धिद्वारा ज्ञानप्राप्ता वुपायत्वात्दुपेयभूतसमाधियोगस्य मत्प्राप्त्यन्तरङ्गत्वात् अयमेव मुख्ययोग इत्याह—यत्रेति त्रिभि ।

**यत्रोपरमते चित्तं निरुद्धं योगसेवया।**
**यत्र चैवात्मना ऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

यत्रेति । एवमभ्यासबलादेकाग्रीभूतं योगिनश्चित्तं योगसेवया निरुद्धं सद्यत्र यस्मिन्नसंप्रज्ञातसमाधावुपरमते उपरतिं गच्छति । उपायोपेयभेदेन समाधिरपि द्विविधः संप्रज्ञातो ऽसंप्रज्ञातश्चेति । तत्र धियः सत्त्वपरिणतिरखण्डाकारवृत्तिर्ध्येयैकगोचरत्वेन कथंचिज्ज्ञायते यदा तदा संप्रज्ञातसमाधिरुच्यते । यदोक्तलक्षणा ऽखण्डाकारवृत्तिरपि ज्ञेयैकतानत्वेन दृश्यत्वेन वा कथंचिदपि न ज्ञायते तदानीमसंप्रज्ञातसमाधिरित्युच्यते ।

> 'ब्रह्माकारमनोवृत्तिप्रवाहो ऽहंकृतिं विना ।
> संप्रज्ञातसमाधिः स्याद् ध्यानाभ्यासप्रकर्षतः ॥
> प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
> असंप्रज्ञातनामा ऽयं समाधिर्योगिनां प्रियः ॥'

इति श्रुतेः । यत्रासंप्रज्ञातसमाधावेव चात्मना ब्रह्मीभूतान्तःकरणेन तत्पदलक्ष्यं परमात्मानं त्वंपदलक्ष्ये प्रत्यगात्मन्यप्रतिबद्धापरोक्षतया पश्यंस्तुष्यति अखण्डानन्दभरितो भवति तदा मत्स्वरूपो भवतीत्यर्थः । 'जीवात्मपरमात्मैक्यावस्था त्रिपुटिरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका समाधिः' इति श्रुतेः ॥ २० ॥

आत्मनि तुष्यतीति यदुक्तं तद्विवृणोति—

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

सुखमिति । अयं ध्यानयोगारूढो योगी अन्तं नाशमतीत्य वर्तत इत्यात्यन्तिकम्, अनन्तत्वात् अतीन्द्रियमिन्द्रियतद्विषयतत्संबन्धातीतत्वात् । तथा ऽपीन्द्रियनैरपेक्ष्येण प्रत्यग्भावकवलितबुद्धिग्राह्यमपरिमितसुखं यदवशिष्यते तदीदृशं सुखमात्मत्वेन वेत्त्यनुभवति । यत्रैवंभावापन्नासंप्रज्ञातसमाधौ स्थित सन् प्रत्यगभिन्नब्रह्मतत्त्वाच्चैव चलति न च्यवते । तूलाबियाविलसिताव स्थात्रयमतीत्य वर्तत इत्यर्थः । 'प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि हृदि संस्थिते देहे लब्धशान्तिपदं गते तदा प्रभा मनोबुद्धिशून्यं भवति' इति श्रुतेः ॥ २१ ॥

स्वात्मलाभमुपेयुषस्तादृशयोगिचित्तस्य चलनाभावं विशिनष्टि—

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणा ऽपि विचाल्यते ॥ २२ ॥**

यमिति । स्वज्ञानमहाराजबलेन स्वापहारिवेन प्रसिद्धं स्वाज्ञान तस्करं निर्मूल्य तन्मुपितं स्वात्मलाभं यं पुनर्लब्ध्वा ततो ऽधिकतरमपरं लाभं न मन्यते,

'आत्मलाभात्परं विद्यते न जगत्त्रये ।
येन विस्मृत्य निखिलं स्वाराज्ये सुखमश्नुते ॥'

इति स्मृतेः । नष्टद्रव्यलाभादपरं तुष्टिहेतु किमन्यदस्ति ? तस्यैव निरति शयानन्दत्वेन स्वेतरविस्मारकत्वात् । एवं परमसुखपरवशत्वेन यस्मिन्नसंप्रज्ञात-समाधौ स्थितो योगी गुरुणा दुःखेन शीतोष्णसुरदु खादिना आध्यात्मिका-दिना, वा शस्त्रपातेन वा ऽपि न विचाल्यते । स्वेतरगुरुलघुसुखदु खाभावेन स्वस्वरूपान्न कदाचिदपि प्रच्यवत इत्यर्थः ॥ २२ ॥

यत्रोपरमत इत्यारभ्य यो ऽयमसम्प्रज्ञातसमाधियोग प्रतिपादित तमेव योगमुपसहरति—

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगो ऽनिर्विण्णचेतसा ॥ २३ ॥**

तमिति । आध्यात्मिकादितानाविधदु खै सयोगो दु खसयोग, तेन दु खसयोगेन वियोगो दु खसयोगवियोग पूर्वश्लोकत्रयोक्तब्रह्मात्मैक्याखण्डा नन्दस्वरूपावस्थानलक्षण, तमसम्प्रज्ञातसमाधियोगसज्ञित कदाचित्कुत्रचित् कचिदपि विकल्पासहसत्तासामान्यस्वरूपमेवासम्प्रज्ञातसमाधियोगशब्दार्थं विद्यादित्यर्थ । एवमसम्प्रज्ञातसमाधिपदमारोढु प्रवृत्तस्य तत्सिद्ध्युदये ऽप्य विक्षिप्तचेतसा तदभ्यास एव कर्तव्य इत्याह—स इति । एतज्जन्मनि जन्मान्तरे वा स समाधियोग सिध्यतीति निश्चयेनाध्यवसायनानिर्विण्णम प्रक्षुभित चेतो यस्य तेनानिर्विण्णचेतसा अप्रमादाभ्यासिना सो ऽयमसम्प्रज्ञात समाधियोगोपाय सम्प्रज्ञातसमाधियोगो योक्तव्य कर्तव्य इत्यर्थ ॥ २३ ॥

स योग केन प्रकारेण कर्तव्य इति तत्राह—सकल्पेति द्वाभ्याम् ।

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

सकल्पेति । प्रत्यगभेदेन ब्रह्मानुसधानविरोधी सकल्प एव प्रभवो हेतु येषा तान् सकल्पप्रभवान् विषयलम्पटै काम्यन्त इति सर्वान् विषय गोचरान् कामानशेषत त्यक्त्वा निर्मूलीकृत्य प्रत्यगभावापन्नमनसैवेन्द्रिय ग्राम समन्तत स्वार्थेभ्यो विनियम्य उपरमेदित्युत्तरेणान्वय ॥ २४ ॥

किं युगपदुपरमण कर्तव्यमिति तत्राह—

**शनैः शनैरुपरमेद् बुद्धया धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥**

शनैरिति । स्वाज्ञानकालमारभ्य स्वज्ञानावधि प्रवृत्तस्यातद्व्यापारस्य सहसोन्मूलयितुमशक्यत्वेन शनै शनै क्रमेणैवोपरमेत् । किं कृत्वोपरमेदिति तत्राह—कृत्वेति । स्वस्या पर सनिहितत्वेन बुध्यत इति बुद्धि, तया बुद्धया, धृति विशुद्धसत्ववृत्ति, ता गृहीत्वा ऽवलम्ब्य तिष्ठतीति धृतिगृहीता, तया धृतिगृहीतया बुद्धया ब्रह्मात्मसस्थ मन कृत्वैवोपरमेत् । ततश्चिन्तनीय किमिति तत्राह—नेति । प्रत्यगभिन्नब्रह्मातिरेकेण न किंचिद्व स्तुजात चिन्तयत्, तत पर चिन्तनीयस्य मृग्यत्वादित्यर्थ । 'पर ब्रह्माहम स्मीति स्मरणस्य मनो न हि' इत्यादिश्रुते ॥ २५ ॥

एव ब्रह्मात्मभावेन तूष्णींभावापन्नमन्त करण गुणत्रयविजृम्भित विषयतृष्णया बहिर्निर्गत चेत्पुन किं कर्तव्यमिति तत्राह—

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

यत इति । आरुरुक्षववस्थाया साधको मुनि स्वभावत चल्म् अत एवास्थिर मन प्रत्यग्भाव विहाय रजोगुणाद्युद्रेकेण यतो यतो विषयनि मित्तात् बहिर्निश्चरति ततस्ततो विषयनिमित्तादेतन्मनो नियम्य प्रत्यगात्मन्येव वश नयेत् प्रत्याहरण कुर्यादित्यर्थ । यद्वा, आरूढावस्थायाम् आरूढो मुनिस्तु स्वमनो निर्विजिन्पमपि पूर्ववासनया प्रत्यगभिन्नब्रह्मभावोन्मुक्तमिव

चञ्चलवदस्थिरवचतो यत स्वकल्पितात् शब्दादिविषयनिमित्तान्निश्चरतीव प्रतिभाति, स्वेन साकं स्वकल्पितशब्दादीना प्रत्यगभिन्नब्रह्मातिरेकेणाभाव प्रमाणत स्वाध्यस्तत्वेन, ततस्तत कामसकल्पादिविजृम्भितमिथ्याभूतनाम रूपात्मकमहामोहादेतन्मनो नियम्य पृथक्कृत्य सर्वत्राततं व्याप्नोतीत्यात्मा, तस्मिन् प्रत्यगभिन्ने परमात्मन्येव यत्र कुत्र वा वर्तमानविषयाधिष्ठानचैतन्ये वा वशमैव्यं नयत् कुर्यादित्यर्थ ।

> 'यत्र यत्र मनो याति यमिनो विषयेच्छया ।
> तत्र तत्र न किं ब्रह्म ततस्तद् ब्रह्म निष्ठितम् ॥'

इत्यादिस्मृते ॥ २६ ॥

एव पुन पुनरभ्यासपाटवेनारुरुक्षोरारूढस्य वा स्वकल्पितत्वेन गुणत्रयमहामोहे तनुता गते सति इदानीं मन्मनो ब्रह्मभाव गतमिदानीं तृष्णया बहिर्निर्गतमिति भ्रान्तौ ब्रह्मातिरेकेण मनो नास्तीति प्रबोधतो निर्मुक्तिताया सत्या तत्परत्वेन विभात निरतिशय सुख स्वयमेवाविर्भवतीत्यु पदिशति—

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

प्रशान्तेति । एव सप्रज्ञातसमाध्यभ्यासबलाविर्भूतासप्रज्ञातसमा धियोगिन ब्रह्मात्मनिष्ठ स्वयमेव उत्तम प्रत्यगभिन्ननिरतिशयब्रह्मसुखमुपैति ।

> 'कामिनीकामुक हृदयमनिच्छन्त बलादपि ।
> यथा तथा ऽऽप्नोत्येषा योगिन ब्रह्मनिर्वृति ॥'

इति नैष्कर्म्यसिद्धिकारा आहुः । योगिनो ऽपि योगमायाप्रभवसिद्धिप्रयुक्त-कल्मषयुक्तस्य निष्कल्मषब्रह्मसुखावाप्तिः कुत इति तत्राह—कल्मषमिति । निष्कल्मषब्रह्मदृष्टिदृढोदयक्षालितयोगमायातत्कार्यकल्मषत्वाद्यथैन्द्रजालिकरचिता माया स्वस्वामिनमविकुर्वती सती परानेव विमोहयति, तथा योगमायाप्रभवा सिद्धिरपि योगिनमविकुर्वती सत्ययोगिनो विकरोतीत्यर्थः । यत एवमतो योगी निष्कल्मषः तं ब्रह्मसुखमुपैति । स्वाज्ञानेन भवतीति भूतं सर्वम् । तस्य सत्त्वेनाकल्मषत्वं कुत इति तत्राह—ब्रह्मभूतमिति । ब्रह्माहमहमेव ब्रह्मेति ब्रह्मात्मत्वेन सिद्धो ब्रह्मभूतः, स निष्कल्मषतापदमर्हतीत्यर्थः । स्वज्ञानकल्पितस्वाज्ञानभूतसर्वत्वात् 'सर्वं खल्विदं ब्रह्म' 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतेः । सत्त्वादिगुणत्रयसत्त्वात् तद्वतो ब्रह्मभूतता कथमिति तत्राह—शान्तरजसमिति । रजोग्रहणं तमःसत्त्वोपलक्षणार्थम् । निर्गुणब्रह्मात्मज्ञानतरणिकिरणकवलितगुणत्रयतत्कार्यध्वान्तत्वात्तस्य ब्रह्मभूततोपपद्यत इत्यर्थः । मानसे ऽशान्ते तद्धेतुगुणत्रयशान्तिः कथमिति तत्राह—प्रशान्तमनसमिति । प्रत्यगभिन्नब्रह्मज्ञानखड्गतः कामसंकल्पादिमस्तकच्छेदेन शान्तं मनः यस्य तं प्रशान्तमनसमेनमुक्तविशेषणविशिष्टं योगिनं ब्रह्मसुखमुपैति । हिशब्दात् ब्रह्मसुखाविर्भावप्रतिबन्धाभावो द्योत्यते ॥ २७ ॥

योगिनं ब्रह्मात्मसुखमुपैतीति यदुक्तं तदेव स्पष्टयति—

**युञ्जन्नेवं सदा ऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

युञ्जन्निति । विगतः कल्मषो यस्मात् विगतकल्मषो योगी प्रक्षीणाशेषपापपुण्यकल्मषत्वात् 'तस्य सुकृतदुष्कृते धूनुते' इति श्रुतेः । एवमुक्तप्रकारेणासंप्रज्ञातसमाधियोगे मनो युञ्जन् योजयन्सन् सुखेनानायासेन

प्रत्यगभिन्नब्रह्माण सस्पर्शं स्वाविद्याद्यत्कार्यनिवर्तकब्रह्मात्मसाक्षात्कार, त ब्रह्मसस्पर्शं वैषयिकसुखस्य क्षणिकत्वात् अन्तं ब्रह्मसुखस्य तदतीतत्वेन वर्तमानत्वादत्यन्तं सर्वोत्कृष्टानन्तसुखमश्नुते, अपरिमितानन्दसमुद्रो भवतीत्यर्थ ॥ २८ ॥

सातिशयाविद्याद्यदु खनिवृत्तिद्वारा निरतिशयानन्दाविर्भावलक्षणो मोक्ष सिध्यतीत्याह—

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

सर्वेति । संप्रज्ञातसमाधियोगेन युक्त आत्मा ऽन्त करणं यस्य सो ऽय योगयुक्तात्मा योगी स्वाविद्याद्यविजृम्भितानन्तकोटिपिण्डाण्डोपेतब्रह्माण्डपटलाख्याविद्यापादे सर्वत्र सर्वदा निष्ठोत्तत्वेन विषमभाव गते ऽपि तस्य त्रिपाद्ब्रह्माव्यतिरिक्तत्वेन सम त्रिपाद्ब्रह्माहमस्मीति दर्शनं ज्ञान यस्य सोऽयं समदर्शनो भूत्वा स्वमात्मानं सर्वभूतस्थं सर्वेषां भूतानां प्रत्यग्भूतत्वेन ब्रह्मादिस्तम्बान्तद्वयाम्बुजमध्यस्थ पुनर्विनिमयेन ब्रह्मादिस्तम्बान्तभूतानि स्वस्मिन्प्रत्यगभिन्ने परमात्मनि चाभेदेनेक्षते । तदा ऽसंप्रज्ञातसमाधियोगी भवति । निष्कामकर्मयोगानुष्ठानजनितचित्तशुद्धिगम्यप्रत्यगभिन्नब्रह्मज्ञानप्राप्ये मयि सर्वं वसत्यहं सर्वत्र वसामीति प्रबोधबलेनाविद्याद्यनिवृत्तो निरतिशयानन्दलक्षणो मोक्षो भवतीत्यर्थ ॥ २९ ॥

एवमात्मैकत्वदर्शनस्य फलमाह—

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

य इति । यो ब्रह्मात्मनिष्ठो मुनिः सर्वत्र चेतनाचेतनात्मके जगति वासुदेवं मां पश्यति, पुनश्चेतनाचेतनात्मकं सर्वं जगच्च वासुदेवे मयि पश्यति, तस्य ब्रह्मात्मनिष्ठस्याहं वासुदेवो न प्रणश्यामि स्वरूपतिरोधानं न करोमि । स च ब्रह्मात्मनिष्ठो ज्ञानी मे वासुदेवस्य न प्रणश्यति कदाऽपि मद्भावं न जहाति । तादृशं महानुभावं कृपादृष्ट्या ऽवलोक्यानुगृह्णामीत्यर्थः ॥३०॥

भूयो ब्रह्मज्ञानफलं स्तौति—

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानो ऽपि स योगी मयि वर्तते ॥ ३१ ॥**

सर्वेति । यो ब्रह्मात्मनिष्ठो योगी सर्वभूतान्तर्यामित्वेन सर्वप्रत्यक्त्वेन सर्वाधिष्ठानत्वेन स्वेतरसर्वशून्यत्वेन च स्थितं मां ब्रह्माहमस्मीति ब्रह्मैकत्वमैक्यमास्थितः सन् भवति, स सर्वथा सर्वप्रकारेण परारोपितप्रातिभासिकदेहस्थितिमात्रप्रयोजनयथोचितचेष्टाभिः वर्तमानो ऽपि मदभेदेन वासुदेवे मयि वर्तते मद्भावापन्नस्य सर्वथा वर्तमानो ऽपीति यथेच्छाचरणोक्तिरौपचारिकी, मद्भावकवलितचित्तद्वयस्य प्रवृत्तिनिवृत्तिव्यापारलेशस्याप्यनवकाशादित्यर्थः ॥ ३१ ॥

नानाप्रकारेण मां भजतां मध्ये सर्वभूतानुकम्पी श्रेष्ठ इत्याह—

**आत्मौपम्येन सर्वत्र समं पश्यति यो ऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥**

आत्मेति । हे पार्थ! योगपदमारोढुं यः प्रवृत्तो योगी स्वयमात्मैवोपमा तद्भाव औपम्यम्, तेनात्मौपम्येन यथा मम सुखमिष्टमनिष्टं दुःखम्, तथा

सर्वप्राणिनामिति सर्वत्र सर्वभूतेषु य समं पश्यति सर्वेषां सुखमेव वाञ्छति न कस्यचिद्दुःखं स योगी परम सर्वोत्कृष्टत्वेन मे मत संमत इत्यर्थ ॥ ३२ ॥

भगवदुक्तसाम्ययोग विस्पष्ट ज्ञातुमिच्छन्नर्जुन उवाच—यो ऽयमिति द्वाभ्याम् ।

अर्जुन उवाच—

**यो ऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥**

यो ऽयमिति । हे मधुसूदन¹ त्वया साम्येन यो ऽयमात्मौपम्येन सर्वप्राणिसमभावयोग प्रोक्त, तस्य साम्ययोगस्य स्थिरा दीर्घकाला स्थितिं न पश्यामि । कस्मात्² मनसश्चञ्चलत्वात् ॥ ३३ ॥

मनश्चाञ्चल्यमेव स्पष्टयति—

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

चञ्चलमिति । हे कृष्ण¹ स्वभावेन मन शोधितपारदवत् चञ्चल हि । चलतु मन किं तवेति तत्राह—प्रमाथीति । साम्यब्रह्मज्ञान स्पर्शनाशाशुर्यैमीति भिया तत्पदानारोहाय देहेन्द्रियादीन् प्रमथ्नाति क्षोभ करोतीति प्रमाथीत्युच्यते । मनसो दुर्बलत्वात् येन केनाप्युपायेन जेतुं शक्यमिति तत्राह—बलवदिति । ब्रह्मातिरेकेण मनो नास्तीति प्रबोधेतरसाधनैर्जेतुमशक्यत्वान्मनसो बलवत्त्वमित्यर्थ । मनसश्चलत्वेनादृढत्वात् ज्ञानेतर-

साधनेनापि जेतुं शक्यमिति तत्राह—दृढमिति। ज्ञानेतरसाधनाना स्वकलित-तत्वेन तैर्विरोधाभावात् कामसंकल्पादिदृश्चित्वलेपेतत्वेन दुर्भेदत्वात् दृढत्वम्। तथा ऽपि दृण्डे वदगतत्वमिहीतुं सुशकमिति तत्राह—सुदुष्करमिति। यथा खेचरस्य वायोः घटादिषु निरोधनमशक्यं तथैवत्र तस्य मनसो निग्रहं कर्तुं सुदुष्करं मन्ये ॥ ३४ ॥

अर्जुनोक्तमनश्चाञ्चल्यादिकमङ्गीकृत्यैव तन्निग्रहोपायं श्रीभगवानुवाच—असंशयमिति द्वाभ्याम्।

श्रीभगवानुवाच।

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

असंशयमिति। हे महाबाहो! मनसश्चञ्चलत्वेन निरोद्धुमशक्यमिति यदुक्तं तदसंशयम्। तथा चेत्तन्निग्रहोपायः कथमिति तत्राह—अभ्यासेनेति। हे कौन्तेय! अभ्यासो नाम ब्रह्मात्मातिरेकेण मनो नास्तीति निरानुसंधानम्। तेनाभ्यासेन मनो गृह्यते निगृह्यते निरोद्धुं शक्यते। तुशब्दो नि सदार्थः। वैराग्यातिरिक्तकेवलाभ्यासेनैव मनसो निग्रहीतुं शक्यत्वेन वैराग्यस्या-किंचित्करता ऽनिवार्येति तत्राह—वैराग्येणेति। वैराग्यं नाम दृष्टादृष्टविषय-निचयदोषदर्शनम्। तेन वैराग्येण च गृह्यते। वैराग्यस्याप्यभ्यासयोगो-पायत्वान्नाकिंचित्करतेति भाव ॥ ३५ ॥

अन्वयव्यतिरेकाभ्यां मनोनिग्रहाच्च योगसिद्धिरिति विशिनष्टि—

**असंयतात्मना योगो दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता शक्यो ऽवाप्तुमुपायतः ॥ ३६ ॥**

असंयतेति । स्वातिरिक्तविषयलोलुपत्वेनासंयत आत्मा मनो यस्य तेनासंयतात्मना पुरुषकीटेन साम्यबुद्धियोगो दुष्प्राप इति मे मम मतिः निश्चय इत्यर्थः । केन सुप्राप इति तत्राह—वश्यात्मनेति । विषयदोषदर्शन-वैराग्येण स्वातिरेकेण मनो नास्तीत्यभ्यासेन वश्यत्वं विधेयत्वमापादितः आत्मा ऽन्तःकरणं यस्य तेन वश्यात्मना पुरुषधौरेयेण तु पूर्वोक्तवैराग्यसह-कृताभ्यासोपायतो भूयो भूयो यतता प्रयत्नं कुर्वता समत्वबुद्धियोगः प्राप्तुं शक्यः ॥ ३६ ॥

इहामुत्रफलप्रापकाणि सर्वकर्माणि संन्यस्य ध्यानयोगाभ्यासं कुर्वतः तत्फलमप्राप्तस्य स्वारब्धकर्मक्षयतः स्वचेतसि चलिते कर्मसंन्यासात् कर्म-फलासिद्धेः सम्यग्ज्ञानाभावात् योगफलासिद्धेश्च तत उभयभ्रष्टो भूत्वा योगी कां गतिं गच्छतीति तद्गतिं विविदिषुरर्जुन उवाच—अयतिरिति त्रिभिः ।

अर्जुन उवाच ।

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

अयतिरिति । हे कृष्ण ! ध्यानयोगश्रद्धयोपेतो योगी प्रारब्धक्षय-लक्षणमरणकाले स्वाधीनताऽभावादयतिः योगाभ्यासाप्रयत्नवान्, अत एव योगाच्चलितमानसो भ्रष्टस्मृतिः सन्योगी योगफलसिद्धिं कैवल्यमप्राप्य कां गतिं गच्छति ॥ ३७ ॥

प्रश्नाभिप्रायं प्रकटयति—

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

कश्चिदिति । हे महाबाहो! योगाभ्यासव्याजेन समस्तकर्मणां संन्यस्तत्वात् न पुनरनुष्ठानाच्च तत्फलस्वर्गादिर्दुर्लभःवायोगफलानिष्पत्त्या मोक्षस्यापि तथात्वादुभयभ्रष्टो योगी ब्रह्मप्रापकज्ञानमार्गे ब्रह्मणः पथि स्वाविद्याऽऽवृतत्वहेत्वेन विमूढो भूत्वा वायुना छिन्नः शकलीकृतत्वेन छिन्नाभ्रमिव नश्यति कच्चित् । कच्चिच्छब्दः किंशब्दार्थः । नश्यति किं न वेति प्रश्नार्थः ॥ ३८ ॥

मद्गतसंशयच्छेत्ता त्वदन्यो नास्तीत्याह—

**एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

एतदिति । हे कृष्ण! हि यस्मात् अस्य संशयस्य च्छेत्ता निवर्तकः त्वदन्यो नोपपद्यते तस्मात्त्वमेव मे संशयमशेषतः छेत्तुमर्हसि ॥ ३९ ॥

योगभ्रष्टस्य नाशशङ्कामुन्मूलयन् प्रश्नोत्तरं श्रीभगवानुवाच —

श्रीभगवानुवाच ।

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

पार्थेति । हे पार्थ! हि यस्मात् परमकल्याणरूपकैवल्यप्राप्तिहेतुश्रवणमननादिकल्याणसाधनकृत् कश्चित्पुरुषो योगफलप्राप्त्यन्तराये ऽपि कुत्सितयोनिप्राप्तिलक्षणां दुर्गतिं न गच्छति । तस्मात्तस्य योगभ्रष्टस्येहास्मिन् लोके शिष्टगर्हणलक्षणो विनाशो न विद्यते, श्रद्धाभक्तिपुर सरं सन्मार्गगामित्वात् । हे तात! अमुत्र परलोके ऽपि पूर्वजन्मतो हीनजन्मप्राप्तिलक्षणो नाशो न

वियते, निगृहीतेन्द्रियग्रामत्वात् पुत्ररूपेणात्मानं तनोतीति पिता तात उच्यते। 'पितेव पुत्रं पुत्रवच्छिष्य' इति वचनात् शिष्योऽपि तात उच्यते। शिष्यलालनार्थं तानेति सम्बुद्धिरित्यर्थः ॥ ४० ॥

इहामुत्र च विनाशरहितो यदि योगभ्रष्टः, तदा कं लोकं प्राप्य पुनरावर्तेत इति तत्राह—

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

प्राप्येति। अल्पकालाभ्यस्तयोगभ्रष्टः सकृत् स्वानुष्ठितयोगप्रभावात् अश्वमेधादिपुण्यकृतां लोकान् प्राप्य तत्रत्यं सुखमनुभवन् तत्रैव शाश्वतीः समाः सवत्सरानुषित्वा तद्भोगक्षयतः शुचीनां सन्मार्गगामिनां श्रीमतामैश्वर्यशालिनां गेहे अभिजायते, सर्वैः श्लाघनीयं जन्म प्राप्नोतीत्यर्थः ॥ ४१ ॥

चिरकालाभ्यस्तयोगभ्रष्टस्येतोऽप्यधिकश्रेयोद्योतनार्थं पक्षान्तरमाह—

**अथ वा योगिनामेव कुले भवति धीमताम्।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

अथ वेति। अथ वा श्रीमतां कुलादन्यस्मिन् इत्यर्थः। केषां कुले इति तत्राह—योगिनामिति। प्रत्यगभिन्नब्रह्मविषयकधीमतामत एवाविद्याद्यतत्कार्यविदारियोगिनामेव कुले चिरकालाभ्यस्तयोगभ्रष्टो भवति। ब्रह्मचर्यपुरःसरं गुरुकुलवासं करोतीत्यर्थः। न त्वनारूढयोगिनामाश्रमे तादृशं जन्म सर्वैः किमप्राप्यमिति तत्राह—दुर्लभमिति। एवंविधानां कुले यदीदृशं

जन्म भवति तदेतत् जन्म लोके दुर्लभतरं कर्मठत्वे सति धनिनां कुले जन्म दुर्लभम् । दरिद्रयोगिनां कुले तु जन्म दुर्लभतरम् । प्रमादकारणाभावे सत्पुरुषसंनिधानादिना विद्यादयतत्कार्यात्मककैवल्यहेतुत्वादित्यर्थः ॥ ४२ ॥

अथ वेति द्वितीयपक्षे दरिद्रयोगिकुले यज्जन्मोक्तं तस्य कैवल्यहेतुत्वं प्रकटयति—

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

तत्रेति । हे कुरुनन्दन ! तत्र ब्रह्मज्ञानिजनशुश्रूषाऽधिकारजन्मनि पूर्वदेहानुष्ठितो यो योगः तं पौर्वदेहिकं प्रत्यक्परैक्यभावारूढाखण्डाकार-बुद्धिसंयोगं लभते । ततः पूर्वजन्मकृतश्रवणादिसंस्कारात् भूयः पुनरधिकतरं संसिद्धौ ब्रह्मस्वरूपावस्थानलक्षणायां मुक्तौ यतते यत्नं करोतीत्यर्थः ॥ ४३ ॥

पूर्वाभ्याससबलादयत्नाद्योगप्रवृत्तिः स्यादित्याह—

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशो ऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

पूर्वेति । स योगभ्रष्टः पूर्वजन्मकृतो ऽभ्यासस्तेन पूर्वाभ्यासेन बलवता अवशो ऽपि ज्ञानेच्छारहितो ऽपि पूर्वजन्माभ्यस्तध्यानादियोगं प्रति ह्रियत आकृष्टो भवति । योगाभ्यासजसहकृतायर्मो बलवत्तरो यदि सदा तेन योगसंस्कारो ऽप्यभिभूयते भोगमात्रतो बलवत्तराधर्मक्षये सति पुनर्योग-जसंस्कारः स्वयमेव कार्यमारभते । दीर्घकालतिरोहितयोगस्य नाशो नास्त्येव । यत एवमतो योगाभ्यासः श्रेष्ठ इत्यत्र हेत्वन्तरमाह—जिज्ञासुरिति । श्रवण-

दिद्वारा योगस्वरूपं जिज्ञासुरपि योगभ्रष्टः शब्दब्रह्म वेदस्तदुक्तकर्मफलं पशु-पुत्रस्वर्गादिकमतिवर्तते वेदोक्तकर्मफलमतिक्रम्य ब्रह्मज्ञानवत्त्वान् भवतीत्यर्थः। जिज्ञासुरपि शब्दब्रह्मातिवर्तते इत्युक्त्या बुद्धिपूर्वकं योगाभ्यासं कुर्वन्शब्दब्रह्मातिवर्तत इति किमु वक्तव्यमिति द्योत्यत इति भावः ॥ ४४ ॥

काकर्थं विशदयति—

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥**

प्रयत्नादिति। आदौ क्षणमात्रं शनैः शनैः क्षणोत्तराभिवृद्ध्या पुनः पुनः प्रयत्नाधिकं यतमानो ध्याननिष्ठो योगी तु स्वकृतध्यानाभ्यासबलेन संशुद्धं पुण्यपापतमिस्ररूपं किल्विषं यस्य सो ऽयं संशुद्धकिल्विषः सन् अनेकेषु जन्मसु किंचिंत्किंचित्संपादितवेदान्तश्रवणादिसंस्कारजनितप्रत्यगभिन्नब्रह्मज्ञानसंसिद्धो भूत्वा ततस्तद्दृढापरोक्षज्ञानानन्तरं परमामुत्कृष्टां गतिं मुक्तिं याति प्राप्नोतीत्यर्थः ॥ ४५ ॥

एवंभूतयोगस्य मोक्षहेतुत्वेन योगिनः सर्वाधिकत्वमाह—

**तपस्विभ्यो ऽधिको योगी ज्ञानिभ्यो ऽपि मतो ऽधिकः।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

तपस्विभ्य इति। हे अर्जुन! कृच्छ्रचान्द्रायणादिरूपं तपः, तस्मिन् निष्ठा येषां ते तपस्विनः, तेभ्यः तपस्विभ्यः योग्यधिक इति मतः। योग्यपेक्षया ज्ञान्यधिक इति तत्राह—ज्ञानीति। केवलशास्त्रार्थपरिज्ञानं येषां ते ज्ञानिनः. तेभ्यो ऽपि योग्यधिकः। निष्कामकर्मानुष्ठातारो योग्यधिका

इति तत्राह—कर्मिभ्य इति। ईश्वरार्पणबुद्ध्या चित्तशुद्धिपर्यवसायि निष्कामकर्मानुष्ठानं ये कुर्वन्ति ते कर्मिणः तेभ्यः कर्मिभ्यश्चापि प्रत्यग-भिन्नब्रह्मापरोक्षसम्यग्ज्ञानारूढो योगी अधिक इति मतो निश्चित। यस्मादेवं तस्मात् त्वमसंप्रज्ञातसमाधिलक्षणध्यानयोगी भव ॥ ४६ ॥

विराडाद्युपासका बहवो वर्तन्ते, तेषां मध्ये कतमः श्रेयानिति तत्राह—

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥ ४७॥ इति।**

इति श्रीमद्भगवद्गीतासु॰ अध्यात्मयोगो नाम षष्ठो ऽध्यायः ॥

योगिनामिति। यो ऽयं श्रुत्याचार्यवाक्यश्रद्धावान् योगी मद्गतेन मद्भावारूढेनान्तरात्मना मनसा भक्तिप्राप्त्युपायसकलत्वेन स्वभावसिद्ध-निष्कलत्वेन वा किंचिदपि विकल्पासहसत्तासामान्यब्रह्मरूपं मां त्रिपादहमह मेव त्रिपादिति सततमेवंप्रकारेण भजते सो ऽयं ब्रह्मात्मनिष्ठो योगी विराडा-द्युपासकानां मध्ये मे मम वासुदेवस्य युक्ततमो मतः स्वस्वरूपत्वेन संमत। इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ ४७ ॥

येन कृष्णेन कृष्णाय गीताशास्त्राद्यपदकृत।
निरूपितस्त्वपदार्थो नम प्रत्यक्परात्मने ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां षष्ठो ऽध्यायः ॥

# सप्तमोऽध्यायः

स्वगीतामध्यषट्केन वाच्यलक्ष्यविभागतः ।
ऐश्वर्यान्निष्कलं भावं भगवानाह तत्पदम् ॥
'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'

इति स्मृतिप्रकटितपारमैश्वर्यादिविशेषणविशिष्टो भगवानाद्यषट्केन

'त्वं पदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
स्मृत्या विधीयते यस्मात्तत्यागी पतितो भवेत् ॥'

इति स्मृत्यनुरोधेन जीवानां स्वपदप्राप्तिविघ्ननिहननायोपायोपेयात्मकनिष्ठाद्वयात्मकं त्वंपदार्थमुपन्यस्यार्जुनेनापृष्टमपि 'श्रद्धावान्भजते यो माम्' इति षष्ठाध्यायान्तप्रदर्शितप्रश्नबीजं स्वयमेवोपलभ्य तत्पदार्थं विवेचयितुं मध्यमषट्कमुवाच—

श्रीभगवानुवाच—

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

मयीति । हे पार्थ ! तत्पदार्थत्वेन सकलजगदधिष्ठाने वक्ष्यमाणलक्षणे सर्वेश्वरे मयि आसक्तं संलग्नं मनो यस्य स त्वं मय्यासक्तमना यदि

तदा मय्येव योगं मनःसमाधानं युञ्जन् अहमेवाश्रयो यस्य स त्वं मदाश्रयो भूत्वा समस्तविभूतिबलशक्त्यैश्वर्यादिसंपन्नं तत्पदवाच्यं नित्यबुद्धानन्दशुद्धचैतन्यरूपेण तत्पदलक्ष्यं वा यथा येन प्रकारेणासंशयं विस्पष्टं मा ज्ञास्यसि तन्मत्स्वरूपविषयकविज्ञानं शृणु ॥ १ ॥

वक्ष्यमाणं ज्ञानं स्तौति—

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

ज्ञानमिति । मयोच्यमानं ज्ञात्वेह श्रेयोमार्गे तव भूय पुनरन्यत् ज्ञातव्यं नावशिष्यते, तेनैव कृतार्थो भविष्यसीत्यर्थः । श्रुत्याचार्यमुखतो यथाविधि ज्ञातं ज्ञानम्, तदेव पुनरनुभवारूढं विज्ञानम्, तत्सहितमिदं तत्पदलक्ष्यगोचरं मत्स्वरूपज्ञानं ते तुभ्यं वक्ष्यामि ॥ २ ॥

त्वद्विषयकज्ञानं किमतिदुर्लभमिति तत्राह—

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

मनुष्याणामिति । मनुष्येतरजीवकोटीनां प्रायश श्रेयोमार्गप्रवृत्तिरेव नास्तीति द्योतयितुं मनुष्याणामित्युक्तम् । मनु प्रणव परमात्मा, त मनुं श्रुत्याचार्यप्रसादलब्धप्रत्यगभिन्नब्रह्मज्ञानेन ज्ञातारो भविष्यन्तीति मनुष्या उच्यन्ते । तेषां मनुष्याणां सहस्रेष्वनेकेषु मध्ये कश्चिदेवानन्तकोटिजन्मसु कृतपरिपाकवशात् चित्तशुद्धिद्वारा ज्ञानसिद्धये यतति । एवं सिद्धयर्थं यतता यत्नं कुर्वतां सहस्रेषु कश्चिदेव भूरिपुण्यप्रभावत शास्त्राचार्यप्रसादसिद्ध

ज्ञानो भवति । एवं सिद्धज्ञानानां सहस्रेषु कश्चिदेव मत्प्रसादेन ब्रह्माहमहमेव ब्रह्मेति तत्त्वतो मां वेत्ति । एवमुक्तरीत्या मज्ज्ञानमतिदुर्लभमपि केवलकृपया तुभ्यमभिधास्यामीत्यर्थः ॥ ३ ॥

एवं श्रोतारमभिमुखीकृत्य प्रकृतिद्वयावष्टम्भेन सृष्टयादिकर्तृत्वेन च तत्पदवाच्यार्थं निरूपयितुं परापरभेदेन व्यवस्थितं प्रकृतिद्वयं प्रत्याययति—

**भूमिरापो ऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

भूमिरिति । भूमिरापो ऽनलो वायुः खमित्यपञ्चीकृतपञ्चमहाभूतानि गृह्यन्ते । मनःशब्देन तत्कारणं वैक्षेपाहंकारो गृह्यते । बुद्धिशब्देन तत्कारणमावरणात्मकं महत्तत्त्वमुच्यते । अहंकारशब्देन तत्कारणमव्यक्तं गृहीतं भवति । एवमष्टधा प्रकृतिः मायाशक्तिर्भिन्ना,

'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥'

इति त्रयोदशाध्याये वक्ष्यमाणचतुर्विंशतितत्त्वात्मिका प्रकृतिरष्टधाभिन्नप्रकृत्यन्तर्भूतैवेत्यर्थः ॥ ४ ॥

अपरां प्रकृतिमुपसंहरन्परां प्रकृतिमाह—

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

अपरेति । हे महाबाहो ! या प्रकृतिर्मायाशक्तिरष्टधा भिन्नेति प्रतिपादिता सेयमपरा निकृष्टा परार्थत्वेन जडत्वात् । अचेतनसर्गमेकीकर्तुमष्टधा

प्रकृतिपरिणाममुक्त्वा पुनश्चेतनसर्गमेकीकर्तुं जीवस्यापि प्रकृतित्व प्रतिपादयति—इतस्त्वन्यामिति । इतो जडात्मकप्रकृतेरन्या विलक्षणा प्रकृति ममानपायिन्यस्ति ययेद परिदृश्यमान जगत् तत्तत्प्राणिकर्मानुरोधेन धार्यते ता पूर्वोक्तप्रकृतेरन्या जीवभूता क्षेत्रज्ञस्वरूपा मे मम परमेश्वरस्य परा प्रकृतिं विद्धि। चेतनाचेतनयोरेकीकरणाय जीवस्यापि प्रकृतित्वमुक्तमिति भाव ॥५॥

एव प्रकृतिद्वयमुक्त्वा तद्द्वारा स्वस्य जगत्सृष्ट्यादिकारणतामाह—

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

एतदिति । एते क्षेत्रक्षेत्रज्ञरूपे प्रकृती योनी कारणभूते यषा तानि एतद्योनीनि । एव प्रकृतिद्वयतश्चेतनाचेतनात्मकानि सर्वाणि भवन्तीति भूतानीत्युपधारय निश्चिन्वित्यर्थ । तत्रैका ऽनृतजडदु खात्मिका स्थूलसूक्ष्मकारणदेहरूपेण परिणमते । मदंशत्वेन चेतनात्मिका ऽपरा प्रकृतिस्तु सर्वत्र भोक्तृत्वेन जडप्रकृतितत्कार्यमनुप्रविश्य तत्सर्वं धारयति । उभयो प्रकृत्यो मत्त सभूतत्वेन ते च मदीये प्रकृती । अतो ऽहमेव सप्रकृतिकस्य कृत्स्नस्य जगत प्रकृत्यवच्छिन्नचैतन्यात् भवत्याविर्भवतीति प्रभवश्च, नित्यनैमित्तिकप्राकृतात्यन्तभेदेन चतुर्धा प्रलीयत इति प्रलय तिरोभावश्च, तथा तयोराविर्भावतिरोभावयो प्रकृतिद्वयद्वारा अहमेव परमकारणमित्यर्थ ॥ ६ ॥

प्रकृतिद्वयद्वारा अहमेव परमकारणमिति यदुक्त तद्विचार्यम्, प्रकृतिद्वयस्य तावत् जगत्तद्धारणरूपत्वेन च कारणत्वसभवात् स्वेतरवस्त्वन्तरशून्यत्वादीश्वरस्य जगत्कारणता कथमित्यपेक्षायामपराया प्रकृते अचेतनत्वेन जडत्वात् परायाश्चेतनत्वे ऽपि किंचिज्ज्ञत्वादेव जडत्वकिंचिज्ज्ञत्व

स्वरूपप्रकृतिद्वयस्य कार्यकारणताऽनुपपत्त्या स्वज्ञदृष्ट्या स्वेतरवस्त्वन्तरशून्य-सर्वेश्वरस्य स्वरूपेण कार्यकारणताऽभावे ऽपि स्वाज्ञदृष्ट्या कार्यत्वं कारणत्वं चोपपद्यतेतरामित्याचष्टे—

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

मत्त इति । हे धनंजय ! मत्तः सर्वेश्वरात् परतरमन्यत् कार्यकारणान्तरं न किंचिदस्ति । यस्मादेवं दीर्घसूत्रे मणिगणा इव सूत्रादिस्वरूपे मयि मिथः कार्यकारणात्मकं जगत्सर्वं प्रोतं ग्रथितमनुस्यूतम् । तस्मादहमेव कार्यकारणरूपेणावस्थित इत्यर्थः ॥ ७ ॥

जगदाविर्भावतिरोभावहेतुता तवास्तु, न तत्स्थितिहेतुता स्यात्; रसादिष्ववादीनां प्रोतत्वेन, विद्यमानत्वात् कथं त्वय्येव सर्वं प्रोतमित्युक्तं तत्राह—रसो ऽहमिति पञ्चभिः ।

**रसो ऽहमप्सु कौन्तेय प्रभा ऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

रस इति । हे कौन्तेय ! अप्सु रसो ऽहम्; रसरूपे मय्यापः प्रोताः, रसरूपया विभूत्या ऽप्सु स्थितो ऽस्मीत्यर्थः; रसाश्रयत्वादपाम् । एवं सर्वत्र द्रष्टव्यम् । शशिसूर्ययोः प्रभा ऽस्मि; सर्वप्रकाशकत्वेन प्रभारूपेण मयि शशिसूर्ययोः प्रोतत्वात् । तथा सर्ववेदेषु सारभूतः प्रणवो ऽस्मि; प्रणवार्थरूपे मयि सर्ववेदाना प्रोतत्वात् । तथा खे आकाशे सारभूतः शब्दो ऽस्मि; शब्दतन्मात्रे मयि खस्य प्रोतत्वात् । तथा नृषु पुरुषेषु पौरुषं पुंभावो ऽस्मि; पौरुषे सर्वोद्यमरूपे मयि पुरुषाणां प्रोतत्वात् ॥ ८ ॥

गन्धतेजोजीवनतपास्यहमेवेत्याह—

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥ ९॥**

पुण्य इति। पृथिव्या पुण्यः सहजो गन्ध गन्धतन्मात्रमहमस्मि, गन्धतन्मात्रे मयि पृथिव्या प्रोतत्वात्। तथा विभावसावग्नौ तेजो दीप्ति श्चाहम्, दीप्तिस्वरूपे मयि विभावसोः प्रोतत्वात्। तथा सर्वाणि भूतानि येन जीवन्ति सर्वेषु भूतेषु तज्जीवनमहम्; जीवनशब्देन प्राणादिधारणमायु रुच्यते, जीवनभूते मयि ब्रह्मादिस्तम्बान्तभूताना प्रोतत्वात्। तथा तपस्विषु वानप्रस्थादिषु द्वंद्वसहनरूपं कृच्छ्रचान्द्रायणादिरूपं सदसद्विवेकरूप वा तपो ऽस्मि, नानाविधतप स्वरूपे मयि तपस्विना प्रोतत्वात्॥ ९॥

बीजबुद्धितेजास्यहमेवेत्याह—

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्॥ १०॥**

बीजमिति। हे पार्थ! चेतनाचेतनात्मकाना सर्वभूताना सनातन चिरंतनं बीजं मा विद्धि। सजातीयकार्योत्पादनसमर्थत्वेनोत्तरोत्तरकार्यानु-स्यूतत्वमेव बीजस्य सनातनत्वम्; चिरंतनबीजभूते मयि सर्वभूताना प्रोतत्वात्। तथा बुद्धिमता व्यवसायिना प्रत्ययवैश्याभिव्यञ्जिका बुद्धिर्ज्ञान-महमस्मि; बुद्धिस्वरूपे मयि बुद्धिमज्जन्तूना प्रोतत्वात्। तथा तेज-स्विना सर्वोत्कृष्टं तेज प्रागल्भ्यमहमस्मि; सर्वसामर्थ्यरूपे मयि समर्थाना प्रोतत्वात्॥ १०॥

बलकामावप्यहमेवेत्याह—

**बलं बलवतां चाहं कामरागविवर्जितम्।**
**धर्माविरुद्धो भूतेषु कामो ऽस्मि भरतर्षभ ॥ ११ ॥**

बलमिति । हे भरतर्षभ ! बलवता बलिष्ठाना बलं सत्त्वमहमस्मि । बल कीदृशमिति तत्राह—कामेति अप्राप्तविषयकस्पृहा रज कार्यं कामश्च कामितेर्थे प्राप्ते ऽपि पुनरधिकस्पृहा तम कार्यं रागश्च, ताभ्या विवर्जितं शरीरस्थितिमात्रहेतुसामर्थ्यं सत्त्वकार्यं यत्तमहमस्मीत्यर्थ । बलस्वरूपे मयि बलवता प्रोतत्वात् । तथाभूतेषु दारेषु यथोक्तकाले धर्मशास्त्राविरुद्ध पुत्रोत्पत्तिमात्रहेतुक कामो ऽस्मि । यद्वा सर्वभूतेषु तत्तदाश्रमोक्तधर्मशास्त्राविरुद्ध शरीरस्थितिमात्रप्रयोजकाभिलाषः कामो ऽस्मि ॥ ११ ॥

स्वाधिष्ठेयप्रकृतेस्त्रिगुणात्मकत्वेन प्राणिनामपि त्रैविध्यात्तेषा कारण-महमेवेत्याह—

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

ये चेति । ये चैव सात्त्विका भावा शमदमादिगुणसपन्ना प्राणिन सन्ति, ये च राजसा भावा हर्षदर्पादिगुणिन प्राणिन सन्ति, ये च तामसा भावा शोकमोहादिसपन्ना प्राणिन सन्ति, ये च मिश्रगुणिन प्राणिन सन्ति तान् प्राणिन सर्वान् स्वस्वकर्मानुरोधेन मत्त एव जातान् विद्धि । यथा पितु पुत्राधीनता तथा तवापि स्वजन्यभावाधीनत्वादवि क्रियत्व कुत इति तत्राह—नेति । अनुवृत्तत्वेन मम भावाना व्यावृत्तत्वेन

च तेषु सर्वादिस्थानीयेषु रज्ज्वादिस्थानीयो ऽहं वासुदेवो न वर्ते । तद्भाव गुणदोषास्पृष्टत्वात् जीववत्तदधीनो न भवामीत्यर्थः । कथं पुनर्भावाना व्याप्तत्वं स्वतन्त्रत्वादिति तत्राह—ते मयीति । सर्वत्रानुवृत्ते प्रत्यगभिन्ने ब्रह्मरूपे मयि व्याप्तृत्वा नाना भावा स्वातन्त्र्यविरहा सन्तो वर्तन्ते । सर्वेषा भावाना मत्सत्ताऽतिरिक्तसत्ताऽभावात् ॥ १२ ॥

एवं सर्वकल्पनाऽन्तर्यामित्वेन तद्भावाभावप्रकाशकत्वेन तदध्यारोपापवादाम्पदत्वेन तत्संबन्धास्पृष्टत्वेन च प्रसिद्ध सर्वस्वतन्त्र सर्वेश्वर नित्यशुद्ध बुद्धपरमानन्दस्वभावं त्वा किमर्थं सर्वे न जानन्तीति तत्राह—

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

त्रिभिरिति । त्रिभि गुणमयै सत्त्वादित्रिगुणविकारै कामक्रोधरागद्वेषादिभावैः एभि सर्वमिदं चेतनाचेतनात्मकं जगदाबृतं सन्मोहितम् । यत एवमत एभ्य सत्त्वादिगुणतत्कार्येभ्य परं व्यतिरिक्त षड्भावविकाररहितत्वादव्ययं सर्वात्मानं नित्यशुद्धबुद्धपरमानन्दब्रह्मरूप मा न जानाति कृत्स्नस्य जगतो मन्मायामोहितत्वात् ॥ १३ ॥

जगतो मायामोहितत्वेन मायाशक्ते दुरतिक्रमत्वेन च यस्य कस्य वा जन्तोस्तत्त्वज्ञानापत्ते वैरस्यात् तत्प्रतिपादकशास्त्रस्याप्यकिंचित्करता ऽनिवार्यतापदमेवाईतीति तत्राह—

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

दैवीति । देवस्य मे विष्णोः सत्तातिरिक्तसत्ताशून्या दैवी । त्वमिव किं सा ऽपि स्वतन्त्रेति तत्राह—एषेति । त्वंकारयोग्यत्वात्तुच्छैषा मत्परतन्त्रा । तस्या. स्वातन्त्र्याभावद्योतको हिशब्दः । सा किं त्वमिव निर्गुणेति तत्राह—गुणमयीति । गुणत्रयोद्रेकवैधुर्यलक्षणगुणसाम्यरूपा ऽपि भाव्यनर्थस्वकार्यद्वारा त्रिगुणात्मिकेत्यर्थः । सा कस्य स्वाधीनेति तत्राह—ममेति । प्रत्यगभिन्नब्रह्मरूपस्य दासीव परिचारिणीत्यर्थं । तस्या नाम किमिति तत्राह—मायेति । प्रत्यगभिन्नब्रह्मस्वरूपातिरेकेण या मा प्रमादृष्टिनिर्मूलत्वात् सा मायेत्युच्यते । न चाहमज्ञ इत्यनुभवात् कथं मायाया मिथ्यात्वमिति वाच्यम्; तस्याः स्वविचारावधित्वात् । यथा प्रदीपानुगृहीतदृष्टेश्चिरकालस्थाप्यपि गुहासंतमसो न दृश्यते, तथा परमेश्वराराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्धिगम्यप्रत्यगभिन्नब्रह्मसम्यग्ज्ञानप्रचण्डमार्तण्डानुगृहीतदृष्टे· म्याज्ञानकालमारभ्यानुभूता ऽपि न दृश्यते, मिथ्याभूतत्वादित्यर्थ. ।

'अविद्यमानैवाविद्या वस्तुतत्त्वविचारिणाम् ।
अविचारेण मूढाना वज्रादपि दृढा यत· ॥'

इति वार्तिककारोक्ते । तथा चेत्तिरस्कर्तुं शक्येति तत्राह—दुरत्ययेति । मद्भावविधुरै पुरुषै दु खेनात्ययो ऽतिक्रमणं यस्या· सा दुरत्यया, दुष्प्रतरेयमित्यर्थ· । तथाविधा माया के ऽपि न तेरुरिति तत्राह—तरन्तीति । ये महाऽनुभावा मायाविन मायातत्कार्यमनन्याम्पृष्टं सर्वप्रत्यगभिन्नब्रह्मरूपं मा प्रपद्यन्ते ते मद्भक्ता एवैना त्रिगुणात्मिका मद्भावपराङ्मुखमहामोहकारिणीं तरन्त्यतिक्रामन्ति । मामेवेत्यवधारणतो मत्प्रापकसम्यग्ज्ञानेतरसाधनकोटिभि माया दुरत्ययेति द्योत्यते । यत एवमतो मत्प्रापकोपायोपेयभूतनिष्ठाद्वयप्रतिपादकशास्त्रस्य सफलत्वात् नाकिंचित्करताऽवकाश इति भावः ॥ १४ ॥

त्वत्प्रपत्तेर्मायाऽतिक्रमणहेतुत्वेन तेन दुस्तरामपि माया तीर्त्वा त्वा सर्वे किं न प्रतिपद्यन्त इति तत्राह—

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**मायया ऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

नेति । दुष्टजनश्लाघनीया कृति येषा ते दुष्कृतिन पापकर्माचरणपरायणत्वात् । न ते मा प्रपद्यन्त इति योजना । कथ ते त्वत्प्रापकहेतु पुण्यकर्म हित्वा पापकर्मैव कुर्वन्तीति तत्राह—मूढा इति । मूलाविद्यादृढपटेन कर्तव्याकर्तव्यज्ञानदृष्टे गाढमावृतत्वात् । कथमेवमावृतमिति तत्राह—अपहृतेति । किं ज्ञान कया ? मायया मदीयया अपहृत शास्त्रजन्यज्ञान येषा ते अपहृतज्ञाना मद्भक्तिविमुखाना शास्त्रजन्यज्ञानस्याकिंचित्करत्वात् । त्वद्भावाभावे ऽपि शास्त्रजन्यज्ञानिनो नरोत्तमा स्युरिति तत्राह—नराधमा इति । मद्भावारूढेतरप्राणिगम्यरौरवादिनरकोपमससारे स्वविज्ञातशास्त्रज्ञान विस्मृत्याधमजनवद्भ्रमन्त इति नराधमा । मद्भाववैमुख्येन निकृष्टत्वात् त्वद्भाव विना क भाव ते भजन्तीति तत्राह—आसुरमिति । 'दम्भो दर्पो ऽतिमानश्च क्रोध पारुष्यमेव च' इत्यादिवक्ष्यमाणलक्षणम् आसुर भावमाश्रिता सन्त स्वात्मभूतमपि मा न प्रपद्यन्ते, न भजन्तीत्यर्थ ॥ १५ ॥

के त्वा प्रपद्यन्त इत्यत्र पूर्वोक्तविपरीता सुकृतिन इत्याह—

**चतुर्विधा भजन्ते मां जनाः सुकृतिनो ऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

चतुर्विधा इति । हे अर्जुन ! अनेककोटिजन्मसुकृतपरिपाकवशादीश्वराराधनलक्षणनिष्कामकर्मानुष्ठानात्मिका शोभना कृति येषा ते सुकृतिन

परमेश्वर मा भजन्ते । के त इति तत्राह—जना, इति । भगवद्भजनतो ऽस्माकं जन्मादि नास्तीति दृढनिश्चयवन्तो ये ते जना उच्यन्ते । ते कतिविधा इति तत्राह—चतुर्विधा इति । चतुर्णां नाम निर्दिशति—आर्त इत्यादिना । यो राजचोरव्याघ्ररोगक्रूरग्रहादिना ऽभिभवमापन्नस्तन्निवृत्तये मा भजति सो ऽयमार्त इत्युच्यते । तत्र कश्चिद्राजादिकृतार्तिमोचने मामनादृत्य क्षुद्रदेवता भजति, न मद्भक्त स भवति । यो मत्तत्त्व श्रुत्याचार्यमुखेण ज्ञातुमिच्छति स जिज्ञासुरुच्यते । य इहामुत्र च स्वभोग साधनीभूतस्रक्चन्दनादिस्वर्गादिवाञ्छया मा भजति सो ऽर्थार्थीत्युच्यते । य सर्वप्रत्यगभेदेन ब्रह्मरूप मा जानाति स च ज्ञानीत्युच्यते । हे भरतर्षभ ! एव स्वकृतसुकृततारतम्यभेदेन चतुर्विधा मद्भक्ता मा भजन्तीत्यर्थ ॥ १६ ॥

एवप्रकारेण त्वा भजता मध्ये क श्रेष्ठ इति तत्राह—

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनो ऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

तेषामिति । तेषाम् आर्तादिचतुर्णां मध्ये तत्त्वतो मा जानातीति ज्ञानी विशिष्यते, सदा प्रत्यगभेदेन मन्निष्ठत्वात् । चतुर्णां भक्तत्वसाम्ये ऽपि ज्ञानिन कथ वैशिष्ट्यमिति तत्राह—नित्ययुक्त इति । नित्यस्वरूपे मयि वासुदेवो ऽहमहमेव वासुदेव इति युक्त, यद्वा नित्य मय्यय युक्त सर्वत्रात्मीयाभिमानाभावेन चित्तविक्षेपाभावात् । अस्त्वेव ज्ञानिनो नित्ययुक्तत्वम्, आर्तादीना त्वद्भक्ते समत्वेन ज्ञानिनि को विशेष इति तत्राह—एकभक्तिरिति । अविद्याद्यविजृम्भितनि सारससारमण्डले तदन्तर्यामित्वेन तद्भावाभावप्रकाशकत्वेन तत्सत्तास्फूर्त्यानन्ददत्वेन तदध्यारोपापवाददोषास्पृष्टत्वेन च सारभूतात्मत्वसादत्यन्ताभिन्न परमात्मा यो ऽवशिष्यते स एवाह-

महमेव स इति भक्तिर्भजन परमप्रेमलक्षण यस्य सो ऽयमेकभक्ति ज्ञान्येव विशिष्यते । आर्तादीना त्रयाणामेवमेकभक्त्यभावात् पुनस्तस्यैवाधिक्य हेतु दर्शयति—प्रियो हीति । मदेकभक्ते ज्ञानिनो ऽत्यर्थ तत्कृतसेवामनपेक्ष्य वासुदेवो ऽह प्रिय तदात्मभूतत्वात् । ज्ञानिन आत्मभूतत्वेन प्रियत्वे ऽपि तस्य त्वत्प्रीतिविषयत्व कुत इति तत्राह— स चेति । स च ज्ञानी वासुदेवस्य मम प्रिय । मद्भावारूढत्वेन मत्स्वरूपत्वात् । हि यस्मादेव तस्मात् ज्ञानी सर्वोत्तम इत्यर्थ ॥ १७ ॥

अस्त्वेव ज्ञानिन तव च मिथ प्रेमास्पदत्वम्, तदितर त्रयस्त्वद्भक्ता अपि किं त्वामप्राप्य ससरन्तीति तत्राह—

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८॥**

उदारा इति । आर्तादय सर्वे त्रयो ऽप्युदारा मम प्रिया एव, क्रमा देते मा प्रपद्यन्त इत्यर्थ । आर्तादीनामुदारत्वे ऽपि ज्ञानिन स्वात्मत्वेन तदतिरिक्तत्व स्फुटयति—ज्ञानीति । प्रत्यगभेदेन मद्भावारूढो ज्ञानी तु मदात्मैवेति सर्वेश्वरस्य मे मम मत निश्चय । अवधारणार्थ विशदयति— आस्थित इति । यस्मात् ज्ञानी मदेकभक्तित्वेन युक्तात्मा सन्ननुत्तमा सर्वोत्तमा गति मुक्ताख्याम् मामेवास्थितो मद्भाव प्रपन्नो भवति, मद्व्यतिरिक्तभावा नामभावात् । तस्मात् त्रिभ्यो मद्भावारूढत्वेन ज्ञान्यधिक इति भाव ॥१८॥

एवभूतो ज्ञानी दुर्लभ इत्याह—

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महाऽऽत्मा सुदुर्लभः ॥ १९ ॥**

बहूनामिति । बहूनां प्रत्यगभिन्नब्रह्मज्ञानहेतुपुण्यकर्मानुष्ठानजनित-चित्तशुद्ध्याश्रयाणामनन्तकोटिजन्मनामन्ते चरमजन्मनि सर्वकर्मसंन्यासलक्षण-प्रत्यगभिन्नब्रह्मज्ञानवान्मां ब्रह्मात्मरूपं वासुदेवं प्रपद्यते । केनोपायेनेति तत्राह—वासुदेवः सर्वमिति । 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' 'सन्मात्रं हीदं सर्वम्'[1] 'नारायण एवेदं सर्वम्'

'स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥
न तदस्ति न यत्राहं न तदस्ति न तन्मयम् ।
किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम् ॥'

इत्यादिश्रुत्यनुरोधेन यतः सर्वं चराचरात्मकं जगद्वासुदेवः ममापि सर्वान्तः-पातित्वादतो ऽहमपि वासुदेव एवेत्यनेनोपायेनायं ज्ञानी मां प्रपद्यते, अपरिच्छिन्नदृष्टित्वात् । तादृशं महानुभावं ज्ञानिनं स्तौति—स इति । स ब्रह्मात्मभावारूढत्वेन महानात्मा ऽन्तःकरणं यस्य स महाऽऽत्मा ब्रह्मात्म-निष्ठो मुनिः मनुष्याणां सहस्रेष्वित्यत्र चतुर्थपर्यायारूढत्वेन सुदुर्लभः तत्समो ऽन्यो नास्तीत्यर्थः ॥ १९ ॥

सर्वेषाम 'वासुदेवः सर्वम्' इति ब्रह्मात्मैक्यरूपैकभक्तिः कुतो नोदेतीत्यत्र हेतुः 'न मां दुष्कृतिनः' इति श्लोकेनोक्तमपि पुनर्हेत्वन्तर-माह—कामैरिति चतुर्भिः ।

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

[1] छा. उ. ६.

कामैरिति । ये मदतिरिक्तबुद्ध्या क्षुद्रदेवतायाजिन पुत्रपौत्र दारपुत्रवित्तपशुस्वर्गादिगोचरा यैः यैः कामा तैस्तैः कामैः हृतमपहृत शास्त्राचार्यप्रसादजन्यमपि ज्ञान येषा ते हृतज्ञानास्तुल्यविद्याकृतलितविवेका भूत्वा स्वया स्वात्मीयया प्रकृत्या पूर्वजन्मवासनारूपया नियता नियोजिता सन्त तत्तत्कामानुगुण जपोपवासादिक त त नियम यथाविध्यास्थाय मदन्य बुद्ध्या क्षुद्रदेवता प्रपद्यन्ते क्षुद्रदेवतारूपेणापि ते मामेव भजन्ति मद्व्यतिरिक्तोपास्याभावादित्यर्थ ॥ २० ॥

मद्व्यतिरेकेण क्षुद्रदेवतायाजिनामपि तत्तद्देवताविषये श्रद्धाभक्ती जनयित्वा तत्तत्कामपूरणमहमेव करोमीत्याह—

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

यो य इति । तेषा मदन्यदेवतायाजिना मध्ये यो यो यस्या यस्या देवताया भक्त मदभिन्ना या या तनु मूर्ति श्रद्धया भक्त्या चार्चितुं पूजयितुमिच्छति तस्य तस्य तत्तद्देवताभक्तस्य कामिन तामेव तत्तद्देवताविषयामचला निश्चला श्रद्धामास्तिक्यबुद्धि भक्ति च विदधामि प्रयच्छामीत्यर्थ ॥ २१ ॥

तत किमित्यत आह—

**स तया श्रद्धया युक्तस्तस्या राधनमीहते ।**
**लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥**

स तयेति । यो ऽय क्षुद्रदेवतोपासक स मद्व्यतिरिक्तान्यदेवतायाजी मद्दत्तया तया श्रद्धया युक्त सन् तस्या देवतायास्तन्वा राधनमीहते

उत्कटेच्छया करोतीत्यर्थ. । ततो मदभिन्नदेवतारूपतस्तात्कालिकहितान् तत्तद्देवतान्तर्यामिणा मयैव विहितान् निर्मितान् कामान् लभते । चशब्द-स्तल्लाभस्यान्तवत्त्वद्योतनार्थः । सर्वज्ञस्य मम तत्तत्प्राणिचित्तशुद्ध्यनुसारेण कर्मकाण्डादिकाण्डत्रयविहितफलदातृत्वेन प्रसिद्धत्वात् 'कर्माध्यक्ष: सर्वभूता-धिवास' 'एको बहूना यो विदधाति कामान्' इत्यादिश्रुतेः ॥ २२ ॥

सर्वासां देवतानां त्वत्तुल्यात्वात्तदाराधनस्यापि त्वदाराधनत्वाच्चैव सर्व-कर्माध्यक्षत्वेन सर्वेषां फलदातृत्वाच्च साक्षात्त्वद्भक्तानामन्यदेवताभक्तानां च को विशेष इति तत्राह—

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

अन्तवदिति । अस्मत्प्रत्ययालम्बनभूतप्रत्यगात्मन सकाशादियं देवता भिन्नेति परिच्छिन्नदृष्टिविदल्पा मेधा प्रज्ञा येषा तेषामल्पमेधसा तत्तच्चित्तानु-रोधेन तत्तद्देवतारूपं स्वीकृत्य सर्वेश्वरेण मया दत्तमपि तत्तत्फलं पशुपुत्र-स्वर्गाद्यन्तवत्, विनाशवदेवेत्यर्थः, तुशब्दस्त्ववधारणार्थत्वात् । अन्तवत्त्वमेव स्पष्टयति—देवानिति । देवानस्यादीन्यजन्तीति देवयज, ते देवानन्तवतो यान्ति । त्वद्भक्ता कं यान्तीति तत्राह—मामिति । मद्भक्तास्तु सर्वप्रत्यगभिन्नं मामेव यान्ति प्रत्यग्भावकवलितपरात्मभावत्वान्नित्यशुद्धबुद्धमुक्तस्वरूपा भवन्ती-त्यर्थ ॥ २३ ॥

क्षुद्रदेवतापेक्षया परमदयालुत्वेन निर्हेतुजातकटाक्षतो भक्तवृन्दाना-मनितरसाधारणकैवल्यफलप्रदातृत्वेन च सर्वसमर्थे त्वयि सति सर्वप्रकारेण त्वा विहाय त्वद्विपरीतविशेषणविशिष्टक्षुद्रदेवतामेव कथं भजन्तीति तत्राह—

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

अव्यक्तमिति । येषा ब्रह्मात्मसत्था बुद्धिर्न विद्यते ते अबुद्धयो मन्दप्रज्ञा श्रुत्याचार्यप्रसादलेशशून्यत्वात्, अव्यय षड्भावविकाराप्रष्ट त्वात्, अनुत्तम सर्वोत्कृष्टनिरतिशयानन्दरूपत्वात्, परमविद्यातत्कार्यपरत्वेन विभानात्, अव्यक्त तूलाविद्याविलसितमनोवाचामगोचरत्वात् । सर्वविकारासहस्रत्वासामान्यब्रह्मरूपस्य ममेदश नित्यशुद्धबुद्धपरमानन्दस्वरूपत्वेन प्रसिद्ध निष्कल भाव भक्तवृन्दस्वपदमाप्त्युपायभूतप्राकृतदि यमङ्गलविग्रह सकल भावमप्यजानन्त सन्तो ऽविद्याद्यतत्कार्यजातपाञ्चभौतिकीं व्यक्ति मूर्ति मा मन्यन्ते । तद्देपेणैव मामनादृत्य क्षुद्रदेवतोपासनमेव कुर्वन्तीत्यर्थ ॥ २४ ॥

एवंभावारूढाना स्वाज्ञाने हेतुमाह—

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढो ऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

नाहमिति । स्वयप्रकाशरूपो ऽप्यह मद्भावविधुराणामप्रकाशो भवामि । प्रकाशो ऽप्यप्रकाशो भवामीति कथमुच्यते ? तत्राह—योगमाया समावृत इति । योग प्रत्यगभिन्नब्रह्मगोचरज्ञान तस्य माया योगमाया मदीया प्रकृतिरघटितघटनापटीयसी, तया योगमायया समावृत इव मद्भावविकलस्या भक्तलोकस्यानभिव्यक्तप्रकाशो भवामि । न प्रकाशो भवामीत्यर्थ । न च योगमायया त्वमपि लोकवदावृतो यदि तदा लोकस्यव तवापि स्वरूप ज्ञानतिरोधान भवेदिति वाच्यम् । मम मायित्वात् 'माया तु प्रकृतिं विद्यान्मायिन तु महेश्वरम्[1]' इति श्रुते । मायातत्त्व जानतो मायाविनो

[1] श्वे ४ १०

न हि माया स्वविज्ञानमावारयितुं पारयति । मायिनः परमेश्वरस्य मम निरावृतक्रियाज्ञानेच्छाशक्तिमत्त्वात् स्वाज्ञदृष्ट्या मायायाः सत्त्वे ऽपि स्वदृष्ट्या मायाया मायात्वात् माया नास्त्येवेत्यर्थः । लोकस्यापि तथा ऽस्त्वित्यत आह—मूढ इति । मूलाज्ञानारूढो मूढो ऽयं लोकः स्वाज्ञानावृतदृष्टिर्वान्मां वासुदेवं नाभिजानाति किमिति तत्राह—अजमव्ययमिति । षड्भावविकाररहितत्वेनाविद्यातीतमिति न जानातीत्यर्थः ॥ २५ ॥

यथा त्वां लोको न जनाति तथा त्वमपि लोकं न जानासीत्यत आह—

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

वेदेति । हे अर्जुन ! परमेश्वरो ऽहं समतीतानि अतिक्रान्तानि वर्तमानानि भविष्याणि च चेतनाचेतनात्मकानि सर्वभूतानि वेद जाने । निरावृतत्वेनाकुण्ठितक्रियाज्ञानेच्छाशक्तिमत्त्वात् । कश्चन जन्तुः प्रत्यगभिन्नब्रह्मरूपं मां तु न वेद न जानाति । मज्ज्ञानप्रतिबन्धकतूलाविद्याऽऽवृतक्रियाज्ञानेच्छाशक्तिमत्त्वात् मद्भावारूढो मद्रूपेण सर्वं वेदेति तुशब्दार्थः ॥ २६ ॥

अविद्याद्यतीतत्वेन सर्ववेदान्तप्रसिद्धप्रत्यगभिन्नब्रह्मज्ञानप्रतिबन्धकमाह—

**इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

इच्छेति । हे भारत ! इष्टवस्तुविषयकस्पृहैवेच्छा, अनिष्टवस्तुविषयकक्रोधो द्वेषः । इच्छा च द्वेषश्चेच्छाद्वेषौ, ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषस-

मुत्थः, इच्छाद्वेषसमुत्थेन मिथो विरुद्धस्वभावेन शीतोष्णसुखदुःखादिद्वंद्वप्रयुक्तविवेकभ्रंशात्मकमहामोहेनाव्रक्षस्तम्बात्मकानि सर्वभूतानि, सृज्यन्त इति सर्गः, तस्मिन् सर्गे स्थूलादिशरीरपरिग्रहे तदानुकूल्येनाहं स्थूलः कृशः काणो बधिरः सुखी दुःखी किंचिज्जानामि न जानामीत्यादिदृढाभिमानरूपं संमोहं यान्ति । अतस्तेषां मज्ज्ञानाभावेऽलिच्छाद्वेषाभ्यदद्दष्टित्वेन मनुष्यकीटत्वात् ते मां कथं जानीयुरित्यर्थः ।

'इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥'

इत्यादिश्रुतेः ॥ २७ ॥

एवं सर्वभूतानि संमोहमेत्य धराविवरनिमग्नकीटोपमाः सन्तः त्वां न भजन्ति यदि, तदा त्वद्भजनप्रतिपादकवेदशास्त्रपुराणानि वैतथ्यपदं भजेयुरित्यपेक्षायामेवमनेकेषु सत्स्वपि केषांचित्पुरुषधौरेयाणामनन्तकोटिजन्मसुकृतपरिपाकवशान्मद्भावापन्नभक्तसंसर्गो भवेत् । तेन मदाराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्धिद्वारा साधनचतुष्टयसंपन्नाः सन्तो ऽथ वेदान्तश्रवणाद्यनुष्ठानेन मां भजन्ति हि । तेषामेवंभूतानां विद्यमानत्वात् मद्भजनप्रतिपादकवेदशास्त्रपुराणानि न वैतथ्यपदमर्हन्तीत्याह—

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**

*येषामिति* । येषां मद्भक्तसङ्गसुकृतलब्धस्वान्तःकरणशुद्धिहेतुनिष्कामकर्मानुष्ठातॄणां वेदान्तश्रवणादिमतिमन्थकषायमन्तमवसानं गतं निःशेषतो विनष्टमित्यर्थः । ते तु महानुभावा मद्भक्तग्रामण्यः शीतोष्णसुखदुःखादि-

द्वंद्वमोहविनिर्मुक्ता भूत्वा सर्वकर्मसंन्यासलक्षणप्रत्यगभिन्नब्रह्मनिष्ठायां दृढव्रताः सन्तः मां वासुदेवं प्रत्यगभेदेन भजन्ते ॥ २८ ॥

एवं मद्भजनेन ज्ञातव्यं मां ज्ञात्वा मद्भक्ताः कृतार्था भवन्तीत्याह—

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

जरेति । इहामुत्रफलभोगनैरपेक्ष्येण ये मद्भक्ताः जरामरणयोर्मोक्षाय निवृत्त्यर्थं सर्वेश्वरं वासुदेवं मामाश्रित्य मज्ज्ञानबहिरङ्गसाधननिष्कामकर्मानुष्ठानं चित्तशुद्धिपर्यन्तं कृत्वा सर्वकर्मसंन्यासपूर्वकं मज्ज्ञानान्तरङ्गसाधनवेदान्तश्रवणमननिदिध्यासनप्रमादेन यतन्ति निर्वर्तयन्तीत्यर्थः । तेन सकलजगतामभिन्ननिमित्तोपादानकारणं प्रत्यगभिन्नं ब्रह्मरूपं मां त एव विदुः मद्व्यतिरेकेण वस्त्वन्तराभावात् । कृत्स्नं समस्तमध्यात्मं सर्वप्राणिहृदयारूढप्रत्यगात्मस्वरूपमविद्यादृयतत्कार्यरूपमखिलं कर्म च मद्रूपेणैव विदुरित्यर्थः ॥

एवंविधानां मद्भक्तानां जात्वपि न योगभ्रंशो ऽस्तीत्याह—

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकाले ऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥ इति ॥**

इति श्रीमद्भगवद्गीतासु॰ ज्ञानविज्ञानयोगो नाम सप्तमो ऽध्यायः ॥

साधिभूतेति । अधिभूतादिशब्दार्थं भगवानुत्तराध्याये वक्ष्यतीति न व्याख्यातम् । ये अध्यात्मकर्माधिभूताधिदैवाधियज्ञविदो मद्भक्ताः अधिभूतं चाधिदैवं चाधिभूताधिदैवम् । तेन सह वर्तत इति साधिभूताधि-

दैवम्, अधियज्ञेन सह वर्तत इति साधियज्ञ च मा परमेश्वरं विदु, ते अध्यात्मादिपञ्चब्रह्मविदो मयि वासुदेवे युक्तमेकीभूत चेतो येषा ते युक्तचेतस सन्त प्राणप्रयाणकाले ऽपि प्रत्यगभेदेन मा विदु, तदानीं व्याकुलतया मा न विस्मरन्ति। यत एवंमतो मद्भक्ताना न योगभ्रशशङ्का सेद्धुं पारयति। इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ ३० ॥

यदभिन्ननिमित्तैककारण जगता नृणाम्।
चरमे जन्मनि प्राप्य ज्ञान तस्मै प्रसीदतु ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकाया सप्तमो ऽध्याय ॥

## अष्टमो ऽध्यायः

पार्थप्रश्नानुरोधेन ब्रह्माध्यात्मादिभेदत ।
सप्तपर्यायसर्वस्वमष्टमेनाह माधव ॥

सप्तमाध्यायान्ते 'ते ब्रह्म तद्विदु कृत्स्नम्' इत्यादिना भगवदुपदिष्टप्रश्नबीजमुपलभ्य ब्रह्माध्यात्मादिसप्तविधार्थं जिज्ञासुरर्जुन उवाच—किमिति द्वाभ्याम् ।

अर्जुन उवाच—

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**
**अधियज्ञः कथं को ऽत्र देहे ऽस्मिन्मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयो ऽसि नियतात्मभिः ॥ २ ॥**

किमिति । क्षराक्षरादिविभागास्पृष्टसत्तासामान्यरूपत्वात् हे पुरुषोत्तम! 'ते ब्रह्म तद्विदु' इत्यत्र यद्ब्रह्म मुमुक्षुभि वेदितव्य तत्किं सकल निष्कल वा, ब्रह्मशब्दस्योभयार्थसभवात् । कृत्स्नमध्यात्ममित्यत्रात्मान देहमधिकृत्य भवतीत्यध्यात्मम् । तत्किं श्रोत्रादिकरणग्राम तत्प्रत्यगात्मा वा, तयोरध्यात्मत्वाविशेषात् । कर्म चाखिलमित्यत्र किं तत्कर्म कृष्यादिर्यज्ञादिर्वा, 'विज्ञान यज्ञ तनुते, कर्माणि तनुते ऽपि च' इत्यत्र द्वैविध्यदर्शनात् ।

साधिभूताधिदैवमित्यत्र भूतान्यधिकृत्य भवतीत्यधिभूतम् । तत्किं पृथिव्यादि-कार्यैकदेशं तत्समग्रं वा तयोरप्यधिभूतत्वाविशेषात् । दैवमधिकृत्य भवतीत्यधि-दैवम् । तत्किमुच्यते ? देवताऽन्तरज्ञानं तदन्तर्यामि चैतन्यं वा, तयोरपि देवता-त्वस्य तुल्यत्वात् । हे मधुसूदन ! साधियज्ञं चेत्यत्र यज्ञमधिकृत्य भवतीति अधियज्ञ क विज्ञानात्मा परमात्मा वा ? स कथं केन प्रकारेण चिन्त्य ? किं तादात्म्येनात्यन्ताभेदेन वा ? येन केन वा स चिन्त्यो भवतु, सो ऽस्मिन्देहे किं वर्तते तद्वहिर्वा ? देहे वर्तमानो ऽपि को ऽसौ बुद्ध्यादि-तद्व्यतिरिक्तो वा ? अधियज्ञ कथं को ऽत्र इति न प्रश्नभेद, प्रकारभेद-सम्भवात् । प्रयाणकाले ऽपि चेयत्र नियत आत्मा ऽन्तःकरणं येषां तै नियतात्मभि त्वद्भक्तै कथं केन प्रकारेण सगुणत्वेन निर्गुणत्वेन वा ज्ञेयो ऽसि ? तत्सर्वं वदेत्यर्थ ॥ १, २ ॥

अर्जुनकृतप्रश्नक्रमेण प्रतिवचनं सर्वज्ञो भगवानुवाच—

श्रीभगवानुवाच—

**अक्षरं ब्रह्म परमं स्वभावो ऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

अक्षरमिति । किं तद्ब्रह्मेत्याद्यप्रश्नोत्तरमाह—अक्षरमिति । 'ओ-मित्येतदक्षरमिदं सर्वम्'[1] इत्यादिश्रुत्यनुरोधेन कालत्रये ऽपि स्वरूपान्न क्षरति तदक्षरम् । तस्यैवाविद्यातत्कार्यजातापरत्वेन बृहणात् निरतिशया-नन्दस्वरूपत्वेन यत्प्रसिद्धं तदेव निष्कलं परमं ब्रह्मोच्यते सकलस्यापि निष्कलोपायत्वात् उपायोपेययोरेकत्वाच्च ब्रह्मैकमेव, 'एकमेवाद्वयं ब्रह्म'

[1] मा आ १

इत्यादिश्रुतेः । किमध्यात्ममिति द्वितीयप्रश्नस्योत्तरं विशदयति—स्वभाव इति । पूर्वोक्तपरमाक्षरब्रह्मण· 'तत्सृष्ट्वा तदेवानुप्राविशत्[1]' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत[2]' 'अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणि[3]' इत्यादिश्रुत्यनुरोधेन प्रतिदेहमात्मानमधिकृत्य प्रत्यगात्मतया प्रवृत्तस्य स्वस्य भावः स्वभावो ऽध्यात्ममुच्यते । परमात्मस्वभावप्रत्यगतिरेकेण करणग्रामासंभवात् प्रत्यगात्मैवाध्यात्ममित्यर्थः । किं कर्मेति तृतीयप्रश्नस्योत्तरमाचष्टे—भूतानीति । भूतानां जरायुजादीनां भाव उत्पत्तिः,

'अग्नौ प्रास्ता ऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥'

इत्युद्भवश्च, तौ भावोद्भवौ करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकरो यो विसर्गो देवतोद्देशेन चरुपुरोडाशादिस्वद्रव्यपरित्यागः स एव यज्ञः कर्मसंज्ञितः निष्कामबुद्ध्या ऽनुष्ठितयज्ञादिकर्मणः चित्तशुद्धिगम्यज्ञानद्वारा परमपुरुषार्थहेतुत्वात् तदपेक्षया तद्विपरीतकृष्यादिकाम्यकर्मणां कुत्सितफलप्रदत्वादत एव बीजभूतयज्ञकर्मतृप्तदेवताप्रसादोत्थवृष्ट्यादिक्रमेण स्थावरजङ्गमात्मकभूतानि जायन्ते । ततः संसरन्तीत्यर्थः ॥ ३ ॥

अधिभूतं किमिति प्रश्नोत्तरमुपादत्ते—

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञो ऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

[1] तै २. ६.
[2] ऐ. ३. १२.
[3] छ. ६. ३.

अधिभूतमिति । देवस्य प्रत्यगात्मनो दहराकाशाल्यत्वात् तदुप स्थियोग्यो देह उच्यते । त बिभ्रतीति देहभृत , तेषा वरिष्ठत्वात् हे देहभृता वर । क्षरतीति क्षरो नश्वरो भावो देहादि यावद्भूतजातमधिकृत्य भवतीत्यधिभूत पृथिव्यादि समग्र कार्यजातमधिभूतशब्देनोच्यते । पृथिव्यादिकार्यैकदेशस्य समग्रे ऽन्तर्भावात् । अधिदैव किमिति प्रश्नोत्तर विशिनष्टि—पुरुष इति । सर्वप्राणिपुरीतति शेत इति पुरुष । यद्वा सूर्यादि करणग्रामान्तर्गतेन करणग्रामानुग्राहकेणानेन स्थूलसूक्ष्मात्मक जगत्पूर्णमिति पुरष सर्वप्राणिवृन्द सूर्यादिकरणग्रामाधिपवृन्द चाधिकृत्य भवतीत्यधिदैवम् । सर्वलिङ्गशरीरानुग्राहको हिरण्यगर्भ सूत्रात्मा अधिदैवम्, न देवताऽन्तर मित्यर्थ ।

'हिरण्यगर्भ समवर्तताग्रे भूतस्य जात पतिरेक आसीत् ।'
'आदिकर्ता स भूताना ब्रह्माग्रे समवर्तत ।
स वै शरीरी प्रथम स वै पुरुष उच्यते ॥'

इत्यादिश्रुतिस्मृतिभ्य । 'अधियज्ञ कथ को ऽत्र देहे ऽस्मिन्' इति प्रश्नोत्तर प्रकटयति—अहमिति । अग्निष्टोमादियज्ञजातमधिकृत्य भवती त्यधियज्ञ । सर्वयज्ञाभिमानिनी विष्ण्वाख्या देवता, 'यज्ञो वै विष्णु ' इति श्रुते । स विष्णुरहमेवात्र व्यवहारभूमौ देहे विज्ञानात्मऽत्यन्ताभेदेन बुद्धयादिव्यतिरिक्त परमात्मा ऽहमेवेत्यर्थ । सर्वेश्वरस्य मम सर्वयज्ञप्रवर्त कत्वेनाध्यात्मादिज्ञानास्पदत्वेन सर्वकर्माध्यक्षत्वेन परमार्थत सर्वकलनाऽसह नित्यशुद्धबुद्धपरमानन्दसत्तासामान्यब्रह्मरूपत्वेन च प्रसिद्धत्वात् ॥ ४ ॥

प्रयाणकाले च कथ ज्ञेयो ऽसीत्यर्जुनप्रश्नप्रतिवचनरूपेण तत्काल स्मरणोपाय तत्फल चाह—

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

अन्तकाल इति । यो मद्भक्त अन्तकाले चरमश्वासवेलाया मामेवान्तर्यामिस्वरूपत्वेन स्मरन् करणग्रामास्पदकलेवर देह मुक्त्वा अर्चिरादिमार्गेण प्रयाति स अपुनरावृत्तिलक्षण मद्भाव क्रमेण याति । तत्रास्मिन्नर्थे सशयो न कर्तव्य इत्यर्थ । न चान्तकाले मामेवेत्यवधारणात् अध्यात्मादिविशिष्टमेव स्मर्तव्यमिति वाच्यम् । विशिष्टस्मरणस्य चित्तविक्षोभहेतुत्वेन प्रधानस्मरणासभवात् । यत एवमतो विशिष्टस्मरणं विहायाहमेव प्रधानतया स्मर्तव्य इत्यर्थ । यद्वा मद्भावारूढो योगी स्वाज्ञानतत्कार्यजातान्तकालास्पदे चरमजन्मनि विष्ण्वाख्य व्यापनशील त्रिविधपरिच्छेदशून्य ब्रह्माहमस्मीति मामेव स्मरन् कलेवर तदुपलक्षिताहममाभिमान मुक्त्वा पुनस्तदभिमाना स्मरण प्रयाति तद्धेत्वज्ञानाभावात् सो ऽय मद्भक्त प्रत्यगभिन्नब्रह्मस्वरूपावस्थानलक्षण मम विष्णोर्भाव परमपद विदेहकैवल्य याति । याति न वेत्यत्रास्मिन्नर्थे सशयो न कर्तव्य , सम्यग्ज्ञानस्य कैवल्यफलत्वात्, 'तमेव विद्वानमृत इह भवति । नान्य पन्था अयनाय विद्यते' इति श्रुते ॥ ५ ॥

न केवल मा स्मरन् मद्भाव यातीति नियम , किं तु य भाव स्मरति तमेवैतीत्याह—

**यं यं वा ऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

य यमिति । हे कौन्तेय ! अन्तकाले प्राणवियोगकाले देही य य भाव देवताविशेष तदन्यद्वा स्मरन् कलेवर त्यजति त तमेव स्मृतं

भावमेवैति । न तदन्यं तदानीं प्राणोत्क्रमणयातनापरवशस्य तद्भावना कथं सेद्धुमर्हतीति तत्राह—सदेति । तस्य स्मर्यमाणवस्तुनो भावः तद्भावः, तदनुचिन्तनम् । तेन तद्भावेन भावितो भावः येन सः तद्भावभावितः । एवं भाववतो ऽन्तकाले प्राणोत्क्रमणयातनापरवशस्यापि तद्भावस्मरणवशाद्भवतीत्यर्थः ॥ ६ ॥

यस्मात्ततत्भावना प्रतिनियतफलप्राप्तिनिमित्तचरमश्वासकालस्मृतिहेतुः तस्मात्सदा मामनुस्मरेत्याह—

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

तस्मादिति । यस्मादेवं तस्मात्कारणात् त्वं वासुदेवे मय्यर्पितं संकल्पाद्विविधशून्यं मनो विषयाकारपरिणतिविनिर्मुक्तं ब्रह्माकारपरिणता बुद्धिश्च यस्य स त्वं मय्यर्पितमनोबुद्धिः सन् सर्वेषु कालेषु सुप्तेरुत्थाय पुनः सुस्यन्तं प्रत्यगभिन्नं ब्रह्मैवाहमस्मीति मामनुस्मर । यत एवं सर्वदा स्मरणं चित्तशुद्धिं विना न घटते, अतश्चित्तशुद्ध्यर्थं युध्य च युध्यस्वेत्यर्थः । एवं स्वधर्मानुष्ठानेन शुद्धान्तःकरणो भूत्वा मत्स्मृतिमनवरतमेव प्रत्यगानन्दाभिन्नपरमानन्दं मामेवैष्यसि । सकलनिगममौलिसंमतत्वेन प्रसिद्धे निःसंशये ऽर्थे संशयो न कार्य इत्यर्थः ॥ ७ ॥

एवं सर्वदा स्मरणस्य बहिरङ्गसाधनं युध्य चेति स्वाश्रमोचितनिष्कामकर्मानुष्ठानमुक्त्वा तदन्तरङ्गसाधनमभ्यासयोगमादिशति—

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

अभ्यासेति । हे पार्थ! मुमुक्षुकोटिचिन्त्ये मयि ब्रह्मैवाहमहमेव ब्रह्मेति संततानुस्मरणमभ्यासः, स एव योगः, तेन युक्तम्, तेनाभ्यासयोगयुक्तेन मदन्यविषयं गन्तुं शीलं यस्य तेनानन्यगामिना ब्रह्मात्माकारेण सर्वं चेतयति भावयतीति चेतः, तेन चेतसा परमं निरतिशयानन्दरूपत्वात्, दिव्यं देदीप्यमानरूपत्वेन सूर्यादिभासामवभासकत्वात्; पुरुषं पुरि शयनात् सर्वत्र पूर्णत्वाद्वा 'सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यम्'[1] इत्यादिश्रुत्यनुरोधेन मामुक्तलक्षणं चिन्तयन्मामेव याति ॥ ८ ॥

एवं ध्यायतः प्राप्यमाह—कविमिति द्वाभ्याम् ।

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

कविमिति । कं ब्रह्मादिस्तम्बान्तं प्राणिजातं स्वाभेदेन विन्दते जानातीति कविः कान्तदर्शी स्वाभेदेन सर्वज्ञत्वात् 'कविर्मनीषी परिभूः स्वयंभूः'[2] इत्यादिश्रुतेः । इदानींतनस्य कवित्वं कुत इति तत्राह—पुराणमिति । इदानींतनस्य कवेः सर्वज्ञत्वे ऽपि पुरा ऽपि नवत्वेन प्रसिद्धस्य स्वातिरिक्ताद्यन्तशून्यत्वेन क्रान्तदर्शित्वात् 'अजो नित्यः शाश्वतो ऽयं पुराणः'[3] इति श्रुतेः । पुराणपुरुषस्य निष्कलत्वेन नियन्तृत्वासंभवात् जगन्नियन्ता तदन्यो भवितुमर्हतीति तत्राह—अनुशासितेति । पुराणपुरुषः

[1] कौ. १. १८.
[2] ई. ८.
[3] क. २. १८.

स्वीयनिष्कलभावमविहायैव मूलाविद्यार्बीजाशमधिष्ठाय स्वयमेव जगद्भूत्वा जीवरूपेणानुप्रविश्य मलिनोपाधियोगतो ऽनीश्वरत्वं प्रपद्य तदुपाधिगुणदोषा-स्पृष्टेश्वररूपेणाज्ञवृन्दमुन्मार्गप्रवृत्तिनिवृत्त्यं सदा ऽनुशास्ति नियोजयतीत्यनु शासिता 'य· सर्वेभ्यो भूतेभ्यो ऽन्तरो यमयति[1]' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत[2] ।'

'भयादस्याग्निस्तपति भयात्तपति सूर्य ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम[3] ॥'

'ईश्वर. सर्वभूताना हृद्देशे ऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रा-रूढानि मायया' इत्यादिश्रुतिस्मृतिसहस्रेभ्यो य प्रतिपादितो नियन्ता सर्वेश्वर स परस्मात् पुराणपुरुषादभिन्न 'एकमेवाद्वितीयं ब्रह्म[4]' 'नेह नानास्ति किंचन[5]' इत्यादिश्रुते । 'पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दि-वो ज्यायान्[6]' इत्यादिश्रुत्या सर्वनियन्तु परमेश्वरस्य स्वनियम्यत्वेन प्रसिद्ध-पृथिव्यादिज्यायसामपि ज्यायस्त्वात्, बुद्ध्यादेरणुत्वात् तन्नियामकता कथमिति तत्राह— अणीयानिति । अणुरूपात् बुद्ध्यादेरप्यणीयस्त्वेन तन्नियन्तृत्वमुपपद्यत इत्यर्थ । 'अणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्मा ऽन्तर्हृदये[7]' 'अणोरणीयान्महतो महीयान्[8]'

[1] बृ ३ ७ १४
[2] बृ ३ ८ ९
[3] क ६ ३
[4] छा ६ २ १
[5] बृ ४ ४ १९
[6] छा ३. १४ ३
[7] छा ३ १४ ३
[8] क० २ २०

इत्यादिश्रुते । अणुमहद्रूपेण विद्यमानस्य जगतो नियन्तृत्वे ऽपि तत्पालकत्वं कथमिति तत्राह—धातेति । सर्वस्य चेतनाचेतनात्मकस्य जगत तत्तत्प्राणिकृतकर्मफलप्रदातृत्वेन पोषयितृत्वात् 'धाता विधाता भुवनस्य गोप्ता विष्णु ' इति श्रुते । धातृत्वेन चिन्तनीयस्य मनोवाग्विषयता स्यादिति तत्राह—अचिन्त्यरूपमिति । तूलाविद्याविजृम्भितेन्द्रियद्वयागोचरत्वेन प्रसिद्धस्यास्य रूपस्य चिन्तितुमशक्यत्वात् 'मनोवागगोचर ब्रह्म' इति श्रुते । ब्रह्मणो ऽचिन्त्यरूपत्वे स्वपरप्रकाशकत्व कथमिति तत्राह—आदित्येति । आदित्यवत् स्वपरवस्तुप्रकाशकत्वात् आदित्यवर्णं । यद्वा आदित्यादिभासामपि भासको वर्णो विपुलप्रकाशो यस्य सो ऽयमादित्यवर्ण ।

'न तत्र सूर्यो भाति न चन्द्रतारक
नेमा विद्युतो भान्ति कुतो ऽयमग्नि ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिद विभाति' ॥'

इत्यादिश्रुते । तादृश ब्रह्म कास्तनमर्हतीति तत्राह—तमस परस्तादिति । स्वाविद्यापदतत्कार्यजातात्तमस परस्तात्त्रिपाद्ब्रह्मस्वरूपत्वेन विभानात् 'तम परे देव एकीभवति परस्तान्न सन्नासन्न सदसदित्येव निर्वाणानुशासनम्' इति श्रुते । एव कविं पुराण इत्यादिविशेषणविशिष्ट यो ऽनुस्मरेदयमहमस्मीति ध्यायति स तमुपैतीत्युत्तरेणान्वय ॥ ९ ॥

एव ध्यातुर्यथोक्तफलाप्तये काल निर्दिशति—

**प्रयाणकाले मनसा ऽचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**

'क ५ १५

**भ्रुवोर्मध्ये प्राणमावेश्य सम्य-**
**क्स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

प्रयाणकाल इति । प्रयाणकाले प्राणोत्क्रान्तिवेलायां यो ध्यायी कविमित्यादिविशेषणविशिष्टं तमनुस्मरेत्, सो ऽयं ध्यायी तमेवोपैतीति योजना । कीदृग्रूपेण परमात्मा ध्येय इति तत्राह—पुरुष इति । पुरि शयनात् स्वेन रूपेणाविद्यापदतत्कार्यपूरणाद्वा पुरुषः त्रिविधपरिच्छेद-शून्यत्वात् 'सत्यज्ञानानन्तानन्दपरिपूर्णम्' इति श्रुतेः । परमात्मा स्व-रूपेणाविद्यापदपूरकश्चेत् पूर्यपूरकयोरभेदेन पूर्यनिष्ठो विकारः पूरके स्यादिति तत्राह—पर इति । स्वपूर्याविद्यापदतत्कार्यात्परत्वेन विभानात् 'तत्परः परमात्मा' इति श्रुतेः । परमात्मनः तत्परत्वे स्वप्रकाश्याविद्यापदाभावेन प्रकाशकत्वानुपपत्त्या ऽप्रकाशो भवेदिति तत्राह—दिव्यमिति । स्वभिन्न-प्रकाश्याविद्यापदाभावे ऽपि त्रिपात्स्वरूपेण सर्वदा देदीप्यमानरूपत्वात् दिव्यः 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः'[1] इति श्रुतेः । एवं विशेषणविशिष्टः परमात्मा किं बाह्यकरणकलापेन ध्येय इति तत्राह—मनसेति । बाह्यकरणमनपेक्ष्यैव केवलमनसा ध्यातुं शक्यत्वात् 'मनसैवानु-द्रष्टव्यम्' इति श्रुतेः । मनसः कामसंकल्पादिवृत्तिमत्त्वेन चञ्चलत्वप्रसिद्धेः तेन परमात्मा कथं स्मर्तव्य इति तत्राह—अचलेनेति । ब्रह्मात्मैक्यानुसंधाने प्रवर्तितं मनो विषयसंकल्पतो बहिर्निर्गतमपि भूयो भूयस्तत्संकल्पादिवृत्ति-निराकरणेन तदनुसंधाने निश्चलतामर्हतीत्यर्थः ।

'असंकल्पनशस्त्रेण च्छिन्नं चित्तमिदं यदा ।
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥'

[1] मु. २. १. १.

इति श्रुतेः। तादृशं मनः केन निश्चलं भवेदिति तत्राह—भक्त्येति। ब्रह्मैवाहमहमेव ब्रह्मेति ब्रह्मात्मैक्यानुसंधानरूपं भजनं भक्तिः, 'स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते' इति श्रुतेः। तादृशी भक्तिः केन जायत इति तत्राह—योगेति। ब्रह्मात्मैक्याकारपरिणताखण्डाकारवृत्तिर्योगः, तस्य बलं तदतिरिक्तपरिणामराहित्यम्, तेन योगबलेन चैव युक्तः स योगी सिद्धासनस्थः सन्दृढभावनया ग्रन्थित्रयोपेतानि षट् चक्राणि विभिद्य सुषुम्णानाड्यन्तर्गतचित्रानाडीद्वारा भ्रुवोर्मध्ये प्राणं प्राणोपलक्षितकरणग्राममावेश्य सहस्रारचक्रस्थं कविं पुराणमित्यादिविशेषणविशिष्टं तुर्यतुर्यमुपेत्य विदेहमुक्तो भवतीत्यर्थः ॥ १० ॥

एवं साङ्गफलमभ्यासयोगमुक्त्वेदानीं वक्ष्यमाणोपायभूतप्रणवालम्बनत्वेन प्रसिद्धस्य ब्रह्मणो वेदविद्वदनत्वं मुक्तगम्यत्वं ब्रह्मचारिभिरुपास्यत्वं चाह—

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

यदिति। केनाप्यविषये प्रत्यगभिन्नब्रह्मणि वेदार्थविदां मुक्तिः कथं प्रवर्तेत इत्यपेक्षायां ब्रह्मात्मनिष्ठाविषयतामत्यक्त्वैव प्रवृत्तेत्याह—वदन्तीति। 'अन्यत्र धर्मात्[1]' इत्युपक्रम्य 'ब्रह्म प्राप्तो विरजो ऽभूद्विमृत्यु[2]' इत्यन्तेन 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः[3]' इत्युप-

[1] क. २. १४.
[2] क. ६. १८.
[3] प्र. ५. २.

क्रम्य 'परात्पर पुरिशय पुरुषमीक्षते[1]' इत्यन्तेन 'ओमित्येतदक्षरमिद सर्वम्[2]' इत्युपक्रम्य 'आत्मना ऽऽत्मान य एव वेद' इत्यन्तेन 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्युपक्रम्य 'अस्थूलमनण्वह्रस्वम्[3]' इत्याद्यन्तेन च वेदविदो वेदार्थविदो ब्रह्मात्मनिष्ठा मुनयो महासचास्वरूपतो न क्षरतीत्यक्षर यद्ब्रह्म वदन्ति तस्य ब्रह्मण सर्वात्मरूपत्वेन सर्वैरपि प्राप्तु शक्यत्वान्मुक्तोपसृप्यत्वव्यपदेशो निरर्थक इति तत्राह—विशन्तीति । किं तत् ? यदक्षर निष्कल ब्रह्म । के तद्विशन्तीति तत्राह—यतय इति । सम्यग्ज्ञाननिष्ठामारुह्य चरमसाक्षात्कारार्थं यतन्त इति यतय सन्यासिन, तेषा चरमसाक्षात्कारानुरागित्वात् । तत्पदार्हता कथमिति तत्राह— वीतरागा इति । स्वेतर वस्तुशून्यधिया चरमसाक्षात्कारे तत्फले वा वीतो रागो येषा ते वीतरागा यत्पद विशन्ति विदेहमुक्ता भवन्तीत्यर्थ । यदेतन्मुक्तोपसृप्य तत्प्राप्तिसाधनानुष्ठान न के ऽपि चरन्तीति तत्राह—चरन्तीति । मुमुक्षवो ब्रह्मचारिणो यदक्षर ज्ञातुमिच्छन्त सन्तो गुरुकुले द्विविधब्रह्मचर्यव्रतमाचरन्ति । बाह्यमान्तर चेति द्विविध हि ब्रह्मचर्यम् । अष्टाङ्गमैथुनास्पृष्टत्व बाह्य ब्रह्मचर्यमुच्यते । ब्रह्माकारमन परिणतिरान्तर ब्रह्मचर्यम् । तज्जीवन्मुक्तैरनुष्ठेयमित्यर्थ ।

'दर्शन स्पर्शन केलि कीर्तन गुह्यभाषणम् ।
सकल्पो ऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्ग प्रवदन्ति मनीषिण ।
विपरीत ब्रह्मचर्यमनुष्ठेय मुमुक्षुभि ॥
ब्रह्मभावे मनश्चारो ब्रह्मचर्यं विदुर्बुधा ।'

[1] प्र ५ ५
[2] मा आ १
[3] बृ० ३ ८ ८

इत्यादिश्रुतेः । तादृशं चेद्ब्रह्म कथं मया ज्ञातुं शक्यमित्याशङ्कमानमर्जुनमालक्ष्याह—तत्ते पदं प्रवक्ष्य इति । तदक्षराख्यं ब्रह्म जीवन्मुक्तपूगैः पद्यते गम्यत इति पदं सर्वप्रत्ययमिलं सत्स्वरूपं विदेहकैवल्यम्, तत्प्रापकं यज्ज्ञानं तत्ते तुभ्यं प्रवक्ष्ये । किं विस्तरेण वदसि? नेत्याह—संग्रहेणेति । यथा ते तद्विषयको बोधो भवेत् तथा संक्षेपतः कथयिष्यामीत्यर्थः ॥ ११ ॥

तत्ते पदं संग्रहेण प्रवक्ष्य इति प्रतिज्ञातोपायं व्यनक्ति—सर्वद्वाराणीति द्वाभ्याम् ।

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥**

सर्वद्वाराणीति । सर्वाणि श्रोत्रादीन्द्रियाणि स्वार्थोपलब्धिद्वाराणि बाह्यशब्दादिविषयग्रहणपूर्वकं संयम्य निगृह्य बाह्यान्तःसंकल्पत्यागपूर्वकं हृदि मनो निरुध्य तत्रैव वशीकृतेन मनसा मूलाधारमारभ्य ब्रह्मरन्ध्रान्तगामिन्या सुषुम्नानाड्यन्तर्गतकैवल्यनाड्योर्ध्वमाकृष्य प्राणवायुमात्मनः स्वस्य मनसा साकं मूर्ध्नि ब्रह्मरन्ध्रे सहस्रारचक्रे आधाय स्थिरीकृत्य,

'कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।
ओंकारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥'

इति श्रुत्यनुरोधेन मनसा प्रणवोच्चारणं योगः, तस्य धारणामास्थितः प्राप्तवानित्यर्थः ॥ १२ ॥

ततः किं कुर्वन् तत्पदं यातीत्यपेक्षायामाह—

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् १३ ॥**

ओमिति। ओमित्येवंरूपं ब्रह्मवाचकत्वेन प्रसिद्धमेकाक्षरं तदर्थभूतब्रह्मानुसंधानपूर्वकं व्याहरन्मनसोच्चारयन् ततः परमुच्चारणव्यापारं विहाय ब्रह्म प्रणवार्थस्वरूपकवलितजाग्रज्जाग्रद्विश्वविश्वविराड्विराडादित्रिपञ्चदशकलनावैभवं तुर्यतुर्यं ब्रह्माहमस्मीति मामनुस्मरन् सन् देहं देहोपलक्षितं सर्वत्रात्मात्मीयाभिमानं निःशेषतः त्यजन् यो मद्भावारूढो योगी स्वाविद्याद्वयतत्कार्यविजृम्भिताद्देहाभिमानात् प्रयाति विमुक्तो भवति, स ब्रह्मात्मनिष्ठो मुनिः परमां पराभूमिप्रतिष्ठितत्वेन प्रसिद्धां मद्रूपिणीं तुर्यतुर्यस्वरूपावस्थानलक्षणविदेहकैवल्यरूपां गतिं याति, विदेहमुक्तो भवतीत्यर्थः। यद्येवं सद्योमुक्तिं गन्तुमधिकारी न भवेद्यदि तदा सर्वद्वाराणि संयम्येत्याद्युक्तरीत्या ऽऽप्लुतरूपेण ओमित्येकाक्षरं ब्रह्मावलम्बनत्वात् ब्रह्म व्याहरन् तदर्थमीश्वरं मामनुस्मरन् पाञ्चभौतिकं देहं त्यजन्यः प्रयाति स प्रणवोपासकः प्राणवियोगानन्तरमर्चिरादिमार्गेण ब्रह्मलोकं प्राप्य तत्र वेदान्तश्रवणादिजनितज्ञानविज्ञानसम्यग्ज्ञानानि संपाद्य ब्रह्मणा सह परमामुत्कृष्टां गतिं याति 'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इति श्रुतेः॥ १३॥

पूर्वोक्तमुक्तिद्वयं वायुधारणकुशलानामेव, नेतरेषामिति तत्राह—

**अनन्यचेताः सततं यो मां स्मरति नित्यशः।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ १४॥**

अनन्येति। हे पार्थ! मद्व्यतिरिक्तान्यस्य दुर्लभत्वेन यो मद्भक्तः ब्रह्मैवाहमहमेव ब्रह्मेत्यनवरतानुसंधानादनन्यभावमापन्नं चेतो यस्य सो ऽयमनन्यचेताः सन् प्रत्यगभेदेन मां परमात्मानं स्मरति। किं दिनमेकमेवं स्मर्तव्यमिति तत्राह—नित्यश इति। प्रतिदिनं यावज्जीवं स्मर्तव्यमित्यर्थः। यावज्जीवं प्रतिदिनं किं घटिकामात्रं स्मर्तव्यम्? तत्राह—सततमिति। सततं

निरन्तरम्, सुखेरुत्थाय सुस्यन्तमित्यर्थ । 'सुखेरुत्थाय सुस्यन्त ब्रह्मैक प्रविचिन्त्यताम्' इति श्रुते । एव मा य स्मरति तस्यैव मद्भावारूढत्वेन नित्ययुक्तस्य प्रत्यगभिन्नब्रह्मज्ञानिनो वासुदेवो ऽह सुलभ वायुधारणा विना ऽपि तदात्मत्वेनानायासतो लभ्य इत्यर्थ ॥ १४ ॥

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभय सर्वभूतेभ्यो ददाम्येतद् व्रत मम ॥'

इत्येव परमसुलभत्वेन प्रख्यातबिरुद त्वामनुप्राप्य त्वद्भावारूढा योगिन किं स्वय्यवातिष्ठन्ते उत धूमादिमार्गतश्चन्द्रलोकादिगन्तृपुरुषवत् पुनरावर्तन्ते ? तथा चेत् किं तव सौलभ्यनेत्याकाङ्क्षायामाह—

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**

मामिति । यत एवमुक्तलक्षणा मद्भावारूढत्वेन महात्मा ऽन्त करण यथा ते महाऽऽत्मानो मद्भक्ता स्वाविद्यापदतत्कार्यकल्पनासहसत्तासामान्यस्वरूपावस्थानलक्षणविदेहकैवल्यरूप मामुपेत्याध्यात्मिकादिदु खानि आलीयन्ते ऽस्मिन्निति दु खालय पुनर्जन्म नाप्नुवन्ति । तर्कि शाश्वतम् ? तत्राह—अशाश्वतमिति । अनवस्थितस्वरूपेन क्षणभङ्गुरत्वात् 'तमेव ज्ञात्वा ऽति मृत्युमेति' 'तरति शोकमात्मवित्' 'गुहाग्रन्थिभ्यो विमुक्तो ऽमृतो भवति' इत्यादिश्रुते । अतस्ते सम्यग्ज्ञानफलात्मकत्वेन परमा सर्वोत्कृष्टा सिद्धिं मत्स्वरूपावस्थानलक्षणा मुक्ति गता प्राप्ता, नान्यथेत्यर्थ ॥ १५ ॥

'न च पुनरावर्तते' इति श्रुत्या ब्रह्मलोकगामिनामप्युनरावृत्तिदर्शनात् त्वत्प्राप्तेरपि तत्तुल्यत्वात् तयो को विशेष इत्येव प्राप्ते, तत्रोच्यते—

छा ८ १५ १

**आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनो ऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

आ ब्रह्मेति । हे अर्जुन ! *भवन्त्यस्मिन् भूतानीति भुवनम्*, ब्रह्मणः चतुराननस्य भुवनं ब्रह्मलोकः तस्मात् ब्रह्मभुवनात् ब्रह्मलोकेन सह सर्वे लोका पुनरावर्तिनः ब्रह्मलोकस्यापि कालपरिच्छिन्नत्वेन नश्वरत्वात्, तल्लोकप्राप्तिहेतुपुण्यकर्मानुष्ठानमहिम्ना ब्रह्मलोकं प्रविष्टानामपि पुनरावृत्तिदर्शनात् ज्ञानकर्मसमुच्चयानुष्ठानेन वैकल्ययोगाभ्यासेन संन्यस्य ज्ञानाभावे ऽपि,

'स्वदारोपनिषद्गीता विष्णोर्नामसहस्रकम् ।
श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यति ॥'

इति स्मृत्युक्तरीत्या स्वाश्रमोक्तकर्मानुष्ठानेन च ये ब्रह्मलोकं प्रविष्टा ते तत्र चतुराननसंसदि वेदान्तश्रवणादिजनितसम्यग्ज्ञानसंपन्ना भूत्वा 'न च पुनरावर्तते' इति श्रुत्युक्तरीत्या ब्रह्मणा सह मुक्तिं लभन्ते । दीर्घकालेन मुक्ता भवन्तीत्यर्थः । त्वां प्रपन्नानामपि न सद्योमुक्तिः स्यादिति तत्राह—नेति । हे कौन्तेय ! सम्यग्ज्ञानोक्तफलं ब्रह्मैवाहमहमेव ब्रह्मेति प्रत्यगभिन्नब्रह्मरूपं मामुपेत्य वर्तमानानां तु 'ज्ञानसमकालमेव मुक्त कैवल्यं याति' इति श्रुत्या सद्योमुक्तिं विना पुनर्जन्म धूमादिमार्गप्रविष्टानामिव पुनरावृत्तिरर्चिरादिमार्गतो ब्रह्मलोकं प्रविष्टानामिव क्रममुक्तिर्वा न विद्यते । ज्ञानसमकालमेवाविद्यातत्कार्यजातान्मुक्तत्वात् 'एतद्यो वेद निहितं गुहायां सो ऽविद्याग्रन्थिं विकिरतीह सोम्य ।'

'क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथा ऽऽत्मन्यात्मविन्मुनिः ॥'

घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥
दर्शनादर्शने हित्वा स्वय केवलरूपत ।
य आस्ते कविशार्दूल ब्रह्म न ब्रह्मवित्स्वयम्' ॥

इत्यादिश्रुतिभ्य ॥ १६ ॥

'तपस्विनो दानशीला वीतरागास्तितिक्षव ।
त्रिलोक्या उपरि स्थान लभन्ते शोकवर्जिता ॥'

इति स्मृत्यनुरोधेन भूरादिलोकत्रय प्रविष्टाना पुनरावृत्तिसभवे ऽपि महर्लोकादिलोकचतुष्टयगतानामपुनरावृत्तिश्रौव्यात् ब्रह्मलोकसहिता लोका कथ पुनरावर्तिन इत्यपेक्षाया दिनपक्षमासर्त्वयनसवत्सरादिकालसख्या परिच्छिन्नत्वादात्मलोकमृते सर्वे लोका पुनरावर्तिन एवेत्याह—

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां ते ऽहोरात्रविदो जनाः ॥ १७ ॥**

सहस्रेति । 'सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदु' इति वचनत सहस्र चतुर्युगानि पर्यन्तमवसान यस्याह तत्सहस्रयुगपर्यन्त यद् ब्रह्मणो विराज चतुराननस्याहरह परिमाण विदु, यथा ऽहस्तथा रात्रिं चतुर्युगसहस्रान्ता विदु । के विदुरिति तत्राह—त इति । एव ब्रह्मण अहोरात्रविभाग शास्त्रदृष्ट्या विदन्ति इत्यहोरात्रविद । येषा सर्वेलोकाना मावन्तवचनेन त लोका जन्मनाशवन्त इति ज्ञान ते जना उच्यन्ते । त एव ब्रह्मणो ऽहोरात्रविभाग विदुरित्यर्थ । न चन्द्रार्कगत्या कालप्रमाण ज्ञा । शास्त्रदृष्ट्या कालगणनाप्रकार उच्यते—मनुष्याणा यद्वर्ष तद्देवाना

महोरात्रम् । एवं दिनपक्षमाससंवत्सरभेदेन द्वादशवर्षसहस्रैश्चतुर्युगं भवति । चतुर्युगसहस्राणि ब्रह्मणो दिनं भवति । तावता कालेन पुनस्तस्य रात्रिर्भवति । द्वे अहोरात्रे एकं दिनं भवति । तस्मिन्नेकस्मिन्दिने सप्तानामपि लोकानामुदयस्थितिलया जायन्ते । पञ्चदश दिनानि पक्षो भवति । पक्षद्वयं मासो भवति । मासद्वयमृतुर्भवति । ऋतुत्रयमयनं भवति । अयनद्वयं वत्सरो भवति । वत्सरशतं ब्रह्ममानेन ब्रह्मणः परमायुःप्रमाणम् । 'तावत्कालस्तस्य स्थितिरुच्यते' इत्यादिश्रुतेः । एवं ब्रह्मलोकादीनां कालपरिच्छिन्नत्वात् पुनरावर्तित्वं सिद्धमित्यर्थः ॥ १७ ॥

ब्रह्मणश्चतुराननस्याहनि रात्रौ च यदाविर्भावतिरोभावपदमेति तदुच्यते—

## अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
## रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

अव्यक्तादिति । ब्रह्मणः प्रजापतेश्चतुराननस्य स्वापावस्थैवाव्यक्तशब्देनोच्यते । तस्यावस्थाया अनभिव्यक्तत्वात् अव्यक्तत्वम् । तस्मादव्यक्तात् स्वापावस्थारूपादेव चेतनाचेतनात्मका प्रजास्ततो ऽस्मिन् व्यज्यन्ते आविर्भवन्तीति व्यक्तयो मूर्तयः प्रभवन्ति अभिव्यक्ता सत्य आविर्भवन्तीत्यर्थः । एवं व्यक्तयः कदा ऽऽविर्भवन्तीति तत्राह—अहरिति । ब्रह्मणः प्रजापतेरहरागमे, प्रबोधवेलायामित्यर्थः । पुनः कदा व्यक्तयस्तिरोभवन्तीति तत्राह—रात्र्यागम इति । तथैव ब्रह्मणः परमेष्ठिनो ऽव्यक्तमिति संज्ञा यस्य कालस्य सो ऽयमव्यक्तसंज्ञकः । तस्मिन् अव्यक्तसंज्ञके रात्र्यागमे स्वापकाले या पुरा ऽऽविर्भूतास्ताः सर्वा व्यक्तयः प्रलीयन्ते तिरोधानं प्रयान्तीत्यर्थः ॥ १८ ॥

ननु ब्रह्मणः प्रतिदिनं प्रत्यवान्तरकल्पं प्राणिपटलस्याभिनवत्वेन पूर्वकल्पकृतपुण्यपापकर्मणां निष्फलत्वादिदानीं मकृतकर्मणो ऽपि तथात्वात् बन्धमोक्षवतः प्राणिपटलस्याभावादेवं व्यवस्थाहेतुकर्मोपासनाज्ञानकाण्डाना साफल्यस्य वैरल्यं स्यादित्याशङ्क्य प्रकटितदोषपूगपरिहारार्थं संसारिणां वैराग्यसंपादनार्थं च प्रतिकल्पं प्राणिपटलं स्वैकमेवाविद्याकामकर्मवशादाविर्भावतिरोभावौ पुन पुनरनुभवतीति स्फोरयति—

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**राज्यागमे ऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

भूतग्राम इति । हे पार्थ! यः प्राणिनिचयः पूर्वकल्पे स्थितः सो ऽयं भूतग्राम एव ब्रह्मणः पितामहस्याहरागमे भूत्वा भूत्वा पुनस्तद्राज्यागमे प्रलीयते । पुनरहरागमे ऽवश. अस्वाधीनः सन् प्रभवति उत्पद्यते । एवं प्रत्यवान्तरकल्पादौ भूतग्रामस्यैकत्वात् नोक्तदोषपटलावकाशो नापि काण्डत्रयवैयर्थ्यमिति भावः ॥ १९ ॥

एवं ब्रह्मलोकादीनामनित्यत्वं प्रतिपाद्य तद्विपरीतत्वेन ब्रह्मात्मलोकस्य स्वस्य परमार्थनित्यत्वं प्रकटयति—पर इति द्वाभ्याम् ।

**परस्तस्मात्तु भावो ऽन्यो ऽव्यक्तो ऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

पर इति । तस्मात्पूर्वोक्तभूतग्रामबीजभूतादव्यक्तात् परत्वेन विभानात् पर । ततपरत्वं कथमित्यत्र तद्विलक्षणत्वादित्याह—अन्य इति । तस्यापि व्यक्तत्वात्तदन्यत्वं युत इति तत्राह—अव्यक्त इति । करणग्रामागोचरत्वादिदानींतनस्य तवाव्यक्तत्वं युत इति तत्राह—सनातन इति ।

आदिमध्यान्तशून्यत्वेन प्रसिद्धस्य भूमात्मनो ऽव्यक्तत्वादेवं विशेषणविशिष्टः सनातनो यो भावो वर्तते सो ऽयं मद्भावो ब्रह्मादिस्तम्बान्तेषु सर्वेषु भूतेषु नश्यत्स्वपि न विनश्यति, परमार्थसत्यत्वादित्यर्थः ॥ २० ॥

पूर्वोक्तो यो ऽव्यक्तो भावः तस्याक्षरत्वं साधयति—

**अव्यक्तो ऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

अव्यक्त इति । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' इत्यादिश्रुत्या करणग्रामाग्राह्यत्वेन 'अव्यक्तो ऽयमचिन्त्यो ऽयमविकार्यो ऽयमुच्यते' इत्यादिना च यो ऽव्यक्तः परमात्मा निर्दिष्टः पुनः स एव 'येनाक्षरं पुरुषं वेद सत्यं तथा ऽक्षरात्संभवतीह विश्वम्' इत्यादिश्रुत्या परमाक्षर इत्युक्तः । परमाक्षरात् परमा गतिरन्येति तत्राह— परमेति । यो मद्भावो ऽव्यक्तो ऽक्षर इत्युक्तः तमेवाव्यक्ताक्षरशब्दार्थं परमात्मानं मुक्तपुगप्राप्यत्वेन परमामुत्कृष्टां गतिं विदेहमुक्तिमाहुः, ब्रह्मात्मनिष्ठा इति शेषः । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुतेः । कथं पुनस्ते परगतित्वमित्यत्र सूरिभिन्दप्राप्यत्वात्तदुपपद्यत इत्याह— यमिति । 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः' 'त्वं ब्रह्मासि' 'अहं ब्रह्मास्मि' 'आवयोरन्तरं न विद्यते' 'त्वमेवाहमहमेव त्वम्' इत्यादिश्रुत्यनुरोधेन सूर्यादौ प्रौढप्रकाशत्वेन यन्निष्कलं चैतन्यं वर्तते तदेवाहमहमेव ब्रह्मेति ये पश्यन्ति ते सूरयो यं प्रत्यगभेदेन प्राप्य न निवर्तन्ते न पुनर्जन्म लभन्ते स्वभेदेन पुनर्जन्मादिहेतुस्वाज्ञानाभावात् तदेव मम विष्णोः परममुत्कृष्टं धाम स्वरूपत्वात् । यत एवमतो ऽहमेव सूरीणां परमां गतिरित्यर्थः ।

'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ।'

इति श्रुतेः ॥ ११ ॥

सर्वोपेयलेन सूरिपटलप्राप्यावुपायः क इत्यपेक्षायां यथोक्ता ऽनन्यभक्तिरेवाकुण्ठित उपाय इत्याचष्टे—

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

पुरुष इति । हे पार्थ! चेतनाचेतनात्मकानि भूतानि यस्य परमकारणस्यान्तःस्थानि स्वाविद्याकार्यत्वात् कार्यस्य कारणान्तःपातित्वात् । कुण्डे बदरवत् कार्यजातं कारणे ऽन्तर्भवतु; कार्यदशायां कारणस्य तदन्तर्भावात् तद्व्यापकत्वं कुत इति तत्राह—ततमिति । कार्यदशायामपि परिदृश्यमानमनृतजडदुःखात्मकं सर्वं कार्यजातं जगद्येन परमकारणत्वेन प्रसिद्धसच्चिदानन्दरूपेण पुरुषेण मृदा पटादिकमिव ततं व्याप्तं कवलितमित्यर्थः । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुतेः । कार्यकारणयोर्व्याप्यव्यापकतोक्त्या व्याप्यनिष्ठविकारस्य व्यापकगतत्वात् व्यापकस्याप्यनृतजडदुःखत्वं स्यादिति तत्राह—पर इति । यः सर्वाधिष्ठानं येन सर्वं ततं स पुरि शयनात् पूर्णत्वाद्वा स्वकार्यव्यापकः पुरुषः परः अनृतजडरज्ज्वादिव्यावृत्तसर्पादिवत् सर्वानुवृत्ते व्यापके कारणात्मनि व्यावृत्तस्य व्याप्यस्य कार्यजातस्यानुवृत्तातिरिक्ताभावप्रमाणानिमिथ्याभूतव्याप्यनिष्ठविकारः परमार्थसत्ये व्यापके कथं सेद्धुं पारयति? यत एवमतः सर्वस्मात्पुरुषः पर इत्यर्थः । 'अन्यदेव तद्विदितादथो अविदितादधि'[1]

[1] के १. ३.

'सर्वस्य साक्षी तत सर्वस्मादन्यो विलक्षण' इत्यादिश्रुते । पुरुषस्य विदिताविदितात् परत्वेन तत्प्राप्त्युपायस्य स्मृयत्वात् तदुपलब्धि कथमिति तत्राह—भक्त्यति। किंरूपा सा भक्ति? मत्तस्त्वमुत्कृष्ट त्वत्तो ऽहमपकृष्ट इति सेव्यसेवकरूपा। तस्या अपि विदितत्वात् तल्लभ्यत्व कुत इति तत्राह—अनन्ययेति। जगदिदमन्यदह जीवो ऽन्य, आवयो कारणमीश्वरो ऽन्य, सेव्यो ऽय सेवको ऽहमित्याद्यन्यभावविकल्पया अनन्यया स्वव्यतिरिक्तान्य-शून्यो वासुदेवो ऽहमहमेव वासुदेव इत्येवरूपया मद्भावापत्त्या युक्तया भक्त्यैव लभ्य । तस्या भक्ते विदिताविदितदोषास्पृष्टत्वात् तयैव लभ्य इत्यर्थ ।

'असाधनमसाध्य यत्त्रिपाद्विभवक मह ।
तत्कथ भेदधीयेव विना तद्रूपभावनाम् ॥'

इति नैष्कर्म्यसिद्धिकारवचनात् ॥ २२ ॥

प्रत्यगभिन्नब्रह्मज्ञानात्परमपुरुषप्राप्तिरुक्ता । न च तादृश ज्ञानमर्चिरादि द्वारमपेक्षते, तस्य स्वफलप्राप्तौ साधनान्तरासहत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुत्या वेदनान्तरसाधनाभावश्रवणात्तथा ऽपि विद्वाननुक्रम्य ब्रह्मभावमुपैतीति चेन्न, विदुषो गत्युत्क्रान्तिनिषेधश्रवणात्, 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुते । तथा सति 'तद्य इत्थ विदुर्ये चेमे ऽरण्ये श्रद्धा तप इत्युपासते ते ऽर्चिषमभि सभवन्त्यर्चिषो ऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासा स्तान्मासेभ्य सवत्सर सवत्सरादादित्यमादित्याच्चन्द्रमस चन्द्रमसो विद्युत तत्पुरुषो ऽमानव स एनान् ब्रह्म गमयत्येष देवयान पन्था इत्यथ इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभि सभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपर पक्षाद्यान् षड् दक्षिणैति मासास्तान्नैते सवत्सरमभि प्राप्नुवन्ति मासेभ्य

पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तं देवाना-मन्नं त देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वा ऽथैतमेवाध्वानं पुनर्नि-वर्तन्ते' इति देवपितृमार्गसद्भावप्रमाणभूतश्रुतेः का गतिरित्याकाङ्क्षाया निष्कलप्रत्यगभिन्नब्रह्मचरमसाक्षात्कारहेतुसम्यग्ज्ञानिषु मार्गद्वयप्रमाणभूतश्रुति-गतिकुण्ठने ऽपि सकलब्रह्मप्राप्त्युपायशरणेष्विष्टापूर्तादिकर्मानुष्ठायिषु च मार्गद्वयप्रमाणभूता श्रुतिः गतिमर्हतीति व्याचष्टे—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

यत्रेति। हे भरतर्षभ! यत्र कालाभिमानिदेवतानुगृहीतकाले तु प्रयाता मृता योगिनो ऽयोगिनश्चानावृत्तिमपुनर्जन्मावृत्तिं पुनर्जन्म च यान्ति, तं कालं कालाभिमानिदेवतासहितं वक्ष्यामि। न च कालशब्देन दक्षिणो-त्तरायणकालविशेषो भवेदिति वाच्यम्। दक्षिणोत्तरायणयोर्मृतानामप्युपासना-तारतम्यत फलतारतम्यसम्भवात् कालशब्देन कालाभिमानिनीभिरातिवाहिक-देवताभि प्रापणीयमार्गो भवितुमर्हतीत्यर्थ ॥ २३ ॥

'अनावृत्तिमावृत्तिं प्रयाता यान्ति' इत्यत्र मार्गद्वयं निर्दिष्टम्। तत्र यथोक्तज्ञानविकलत्वे ऽपि स्वाश्रमाचारसंपन्नाना यतीना हठादियोगिना निष्कामकर्मानुष्ठातॄणा च क्रममुक्तिद्वारमर्चिरादिमार्गमाह—

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

अग्निरिति। अग्नि कालाभिमानिन्यातिवाहिकी देवता। तथा ज्योतिरर्चिरभिमानिन्यातिवाहिकी देवता। आतिवाहिकीशब्दः सर्वत्रानुष-

च्यते। तथा अहरहरभिमानिनी देवता। शुक्लः शुक्लपक्षाभिमानिनी देवता। षण्मासा उत्तरायणमित्यत्राप्युत्तरायणाभिमानिन्यातिवाहिकी देवतोच्यते। तत्र पूर्वोक्तदेवतोपलक्षिते सुषुम्णामार्गगम्यार्चिरादिमार्गे प्रणवयोगकर्मोपासनाभिः सगुणब्रह्मविदः सकलब्रह्मशरणाः संन्यासिनो योगिनः कर्मिणश्च प्रयाताः सन्तः निष्कलं ब्रह्म क्रमेण गच्छन्ति,

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति'[1] ॥'

इति श्रुतेः। तत्रोक्तामृतत्वमापेक्षिकमित्यर्थः ॥ २४ ॥

धूमादिमार्गस्य पुनरावृत्तिहेतुत्वेन तन्निरूपणमकिंचित्करमित्यत्र धूमादिमार्गस्य गतागतत्वादर्चिरादिमार्गस्य पुनर्निर्गमनाभावात् धूमादिमार्गापेक्षया ऽर्चिरादिमार्गो महीयानिति स्तोतुं धूमादिमार्गस्यापि वक्तव्यत्वान्नाकिंचित्करतेत्याह—

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

धूम इति। धूमो रात्रिः कृष्णपक्षः षण्मासा दक्षिणायनमित्यत्र पूर्ववत्तत्तदभिमानिन्यातिवाहिकी देवतोच्यते। तत्राप्यातिवाहिकीदेवतासहित धूमादिमार्गमालम्ब्य गच्छन्निष्टापूर्तादिकर्मकृद्योगी चन्द्रमसि भवं चान्द्रमसं ज्योतिः स्वकृतकर्मफलं प्राप्यानुभूय तद्भोगक्षये पुनर्निवर्तते, तद्भोगक्षयस्य सावशेषत्वात्, शेषकर्मणा बीजभूतेन सहाकाशवायुधूमाभ्रमेघवृष्टिद्वारा भूमिं प्रविश्य व्रीह्याद्यन्नभावमुपेत्य संस्कारतः प्राणिजठरं प्रविश्य ततः शुक्ल-

[1] क. ६. १६

रूपेण रमणीययोनिं पापकर्मप्राचुर्यतो नीचयोनिं वा प्रविश्य यथोक्तकाले जन्म लब्ध्वा पूर्ववासनया पुनरपि शुभाशुभादि कर्म कृत्वा तत्फलमनुभूय घटीयन्त्रवदविश्रान्तो भवति। क्षुद्रकर्मकारी चेत्तदा धूमादिमार्गतो गमनागमनं विना मशकादिरूपेण भूत्वा भूत्वा पदे पदे म्रियते। ततो ऽपि क्रूरकर्मकारी यदि तदा कल्पपर्यन्तस्थायिपाषाणादिभावमुपैति। यत एवमतो विवेकिना धूमादिमार्गो जुगुप्सितव्य इत्यर्थः। 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा ऽभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति। तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, ऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा। अथैतयो: पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते, तस्माज्जुगुप्सेत'[1] इति श्रुतेः ॥ २५ ॥

सकलब्रह्मशरणाना रात्रिकृष्णपक्षदक्षिणायनमरणतो ब्रह्मप्राप्त्यभावे प्राप्ते तत्राग्न्यादिशब्दाः तदभिमानिदेवतावाचका इति वक्तुं मार्गद्वयस्य नित्यत्वं साधयति—

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।**
**एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः॥ २६ ॥**

[1] छा—५, १०, ५, ८.

शुक्लकृष्णे इति । अर्चिरादिगतिः शुक्ला प्रकाशप्राचुर्यात्, धूमादिगतिः कृष्णा तमःप्राचुर्यात् । एते शुक्लकृष्णे गती अर्चिरादिधूमादिमार्गौ योग्ययोगिजुष्टजगतः शाश्वते अनादी इति मते निश्चिते । न चानादेर्गन्तवत्त्वं कुत इति वाच्यम् । तद्गन्तानादित्वस्यापेक्षिकत्वात् स्वाज्ञानकालमारभ्य स्वज्ञानावधि संसारस्य विद्यमानत्वात्तदनुरोधेनानयोर्गत्योरप्यनादित्वं स्वज्ञाने सति तद्गन्तानादित्वानन्तत्वयोर्मृषात्वात्, यत एवमतः स्वाज्ञदृष्टिमवलम्ब्यैव तयोरेकया सकलब्रह्मशरणो ऽनावृत्तिं क्रममुक्तिं याति । अन्यया कृष्णया गत्या वेदोक्तेष्टापूर्तादिकर्मकर्ता त्वावर्तते पुनर्जन्म भजतीत्यर्थः ॥२६॥

*एवमुक्तप्रकारेण मार्गद्वययाथात्म्यं यो जानाति स पूर्ववत्तत्र न मुह्यतीत्याह—*

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

नैते इति । हे पार्थ! यस्मादेते ऽर्चिरादिधूमादिसृती क्रममुक्तिसंसारप्रापकमार्गौ यथावज्जानन् कश्चन कश्चिदपि योगी धूमादिगतिप्रापकसंसारहेतुस्वर्गादिफले तदपेक्षया सर्वोत्कृष्टार्चिरादिगतिप्राप्यक्रममुक्तौ वा न मुह्यति । किं तु सद्योमुक्तिहेतुसम्यग्ज्ञानसाधने प्रवर्तते । तस्मात्कारणात्त्वमपि मार्गद्वये मोहविधुरो भूत्वा सर्वेषु कालेषु प्रत्यगभिन्नब्रह्मध्यानयोगयुक्तो भव ॥ २७ ॥

उक्तस्वप्रापकध्यानयोगं स्तुवन्नुपसंहरति—

**वेदेषु यज्ञेषु तपःसु चैव**
**दानेषु यत्पुण्यफलं प्रदिष्टम् ।**

**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥ इति ।**

इति श्रीमद्भगवद्गीतासूपनिष० अक्षरब्रह्मयोगो नामाष्टमो ऽध्यायः ॥

वेदेष्विति । पवित्रपाणित्वादिनियमाधीतेषु वेदेषु तदुदितेषु यज्ञेषु साद्गुण्यतया ऽनुष्ठितेषु कायशोषणादिविविधतपःसु देशकालपात्रसमर्पितसर्वस्वदानेषु च शास्त्रतो यत्पुण्यफलं प्रदिष्टं देवयानादिमार्गद्वयगम्यमत्येति । किं कृत्वेत्यत आह—विदित्वेति । पार्थभगवत्प्रश्नप्रतिवचनसिद्धान्तार्थं विदित्वा ऽनुष्ठाय प्रत्यगभिन्नब्रह्मज्ञानयोगी भूत्वा मार्गद्वयादिविभ्रममत्येतीत्यर्थः । तदतिक्रम्य किमुपैतीति तत्राह—स्थानमिति । किं लोकान्तरेषु? तत्राह—परमिति । स्वाविद्याद्वयतत्कार्यविजृम्भितब्रह्मलोकादिसर्वलोकात्परत्वेन यद्विभातं तत्परं स्थानं विष्णोः परमं पदं विदेहकैवल्यमुपैतीत्यर्थः । किमिदानीं रचितं तत्राह—आद्यमिति । यदविद्यापदतत्कार्याध्यारोपापवादविकल्पासहं त्रिपात्परब्रह्मतत्त्वं सत्तासामान्यमिति विख्यातं तदेवाद्यं स्थानम् । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ २८ ॥

चरमश्वासवेलायां यत्स्मर्तव्यं महाऽऽत्मभिः ।
तत्तारकब्रह्म मम हृदये जयतु स्वयम् ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायामष्टमो ऽध्यायः ॥

## नवमो ऽध्यायः

अचिन्त्ययोगमायात पारमैश्वर्यवैभवम् ।
अनन्यभक्ते कैवल्यहेतुत्व चाह केशव ॥

अष्टमाध्यायान्ते 'इद विदित्वा योगी पर स्थानमुपैति चाद्यम्' इति यत्स्वरूपमुक्तमिदानीं तत्पारमेश्वर रूप तत्प्राप्तिहेतुज्ञानविज्ञान म्यानन्यभक्ते प्रभाव च प्रकटयितु नवमाध्याय श्रीभगवानुवाच—

श्रीभगवानुवाच—

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसे ऽशुभात् ॥१॥**

इदमिति । पूर्वाध्यायादौ यज्ज्ञान मयोक्त तदिद तु ज्ञान तुभ्य वक्ष्यामीति योजना । तुशब्द पूर्वोक्तज्ञानाद्वैशिष्ट्यद्योतक । कस्मै वक्ष्यसीति तत्राह—तुभ्यमिति । किंगुणविशिष्टायेति तत्राह— अनसूयव इति । भूयो भूय स्वमाहात्म्यमेव प्रकटयति भगवान्— परमकारुणिके भगवति वासुदेवे मय्यनसूयवे मदुद्धारणार्थ केवलकृपयोपदिशति भगवानिति श्रद्धालवे तुभ्यमर्जुनाय प्रत्यगभिन्नब्रह्मज्ञान वक्ष्यामि । तज्ज्ञान किंविशिष्टमिति तत्राह—विज्ञानसहितमिति । यन्मया प्रकटितस्वरूप ज्ञात्वा अपरोक्षीकृत्य त्वमिदानीमेव स्वाज्ञानविजृम्भितससाररूपादशुभान्मोक्ष्यसे

तज्ज्ञानं विशेषानुभूत्या ज्ञायत इति विज्ञानं तत्सहितं तद्विशिष्टमित्यर्थः । किं तद्गुह्यं तत्राह—गुह्यतममिति । कर्मकाण्डविषयकज्ञानमुत श्रुत्याचार्यप्रसादलभ्य ज्ञानं देहातिरिक्तप्रत्यग्ज्ञानं वा गुह्यम्, उपासनाकाण्डविषयकज्ञानं परमात्मपरोक्षज्ञानं वा गुह्यतरम्, स्वानुभूतिपरामृष्टप्रत्यगैक्यसम्यग्ज्ञानं गुह्यतमम्, अनेककोटिजन्मशोभनकर्मपरिपाकतश्चरमजन्मलभ्यत्वात् गुह्यतमत्वमुपपद्यत इत्यर्थ ॥ १ ॥

श्रोतारमर्जुनं वक्ष्यमाणगुह्यतमज्ञानाभिमुखीकरणाय तज्ज्ञानं प्रस्तौति—

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

राजेति । या प्रत्यगभिन्नब्रह्मविद्यामाश्रित्य तदितरविद्यापटलं राजते सेयं राजविद्या सर्वविद्याऽधिराजत्वात् विद्याऽन्तरेभ्यो विशिष्यते ; सैवेद खलु प्रत्यगभिन्नब्रह्मज्ञानं सर्वज्ञानेभ्यो विशिष्यत इति प्रसिद्धम् । ज्ञान्यन्तरेभ्यो ब्रह्मज्ञानी विशिष्ट पूजनीयश्च यस्मिंस्तुष्टे तुष्यति सर्वमिति च

'य यं लोकं मनसा संविभाति
विशुद्धसत्त्व कामयते याश्च कामान् ।
तं तं लोकं जयते ताश्च कामा-
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम ॥
यद्येको ब्रह्मविद् भुङ्क्ते जगत्तर्पयते ऽखिलम् ।
तस्मादग्निव्य सर्वत्र पूजनीयो विदा वर ॥'

इति श्रुतिस्मृतीतिहासपुराणेषु सर्वत्र प्रसिद्धत्वान्न गोप्यतापद्मेतदर्हतीति तत्राह—राजगुह्यमिति । यदनधिकारिणे गोपनीयं तद्गुह्यं मन्त्रतन्त्रादिधर्म-

शास्त्ररहस्य च तदपेक्षया गोपनीयत्वेन गुह्यतमत्वात् उत्तमाधिकारिणे वक्तव्यत्वात् अत एव गुह्याना राजत्वात् राजगुह्यम् । तथा च श्रुति —

'आदौ शमदमप्रायैर्गुणै शिष्य विशोधयेत् ।
पश्चात्सर्वमिद ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥'
'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टे ऽहमस्मि ।
असूयकायानृजवे शठाय मा मा ब्रूयाद्वीर्यवती तथा स्याम् ॥'
'यमेवैष विद्याश्रुतमप्रमत्त मेधाविन ब्रह्मचर्योपपन्नम् ।
अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥'
'अज्ञस्यार्धप्रबुद्धस्य सर्व ब्रह्मेति यो वदेत् ।
महानरकसाम्राज्य स तेन विनियोजित ॥'

इत्यादि । स्मृतिश्च 'न बुद्धिभेद जनयेदज्ञाना कर्मसङ्गिनाम् ।' 'तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्' इति । अज्ञाना पतनहेतुत्वात् तत्किमपवित्रमिति तत्राह—पवित्रमिति । शूद्र प्रत्युपदिष्टाध्ययनवत्साधनचतुष्टयसपत्तिविकलत्वेनानधिकारिणा पतनहेतुत्वे ऽपि तद्वतामनन्तकोटिजन्मसचयमूलस्वाज्ञानापवित्रग्रासकत्वात् पवित्र पुण्यकर्म तीर्थयात्राकरणस्यापि पावनहेतुत्वात् किमनेन ज्ञानेनेति तत्राह—उत्तममिति । पुण्यकर्मतीर्थयात्रादीना चित्तशुद्धिपर्यवसायित्वात् । तावन्मात्रेण स्वाज्ञानापवित्रक्षालनासभवाच्चित्तशुद्ध्यनन्तरभाविस्वज्ञानोदयमात्रेण स्वाज्ञानमलादर्शनात् स्वफलप्राप्तावुपायान्तरासहत्वाच्च पावनहेतूना ज्ञानमेवोत्तममित्यर्थ । एव केनावगम्यत इति तत्राह—प्रत्यक्षेति । सुखादिवदनुभवप्रत्यक्षेणावगमो ऽवगतिर्यस्य तत्प्रत्यक्षावगमम् । यद्वा, प्रत्यक्षमवगम्यत इत्यवगम स्वाज्ञानतत्कार्यनिवृत्तिलक्षण कैवल्यफल यस्य प्रत्यक्षावगम कर्तृकारकक्रियाफलानुवादकधर्मविरुद्धत्वात् । प्रत्यक्षावगमत्वे ऽपि नादर्तव्यमेतदिति तत्राह—धर्म्यमिति । 'सर्वं

कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यादिस्मृत्यनुरोधेन प्रत्यगभिन्नब्रह्मधारणाहें धर्मे स्वज्ञाने स्वाज्ञानविजृम्भितकर्तृकारकक्रियाफलानुवादकधर्मशास्त्रानुकूलप्रवृत्तिनिवृत्तिव्यावृत्तेः परिसमाप्तत्वेन स्वप्रतियोगिधर्माभावात् तद्‌धमसरूपस्वधर्मदर्शनपेतत्वाद्धर्म्यम्। अतो मुमुक्षुभिरादर्तव्यमित्यर्थः। किं धर्मानुष्ठानवदायाससाध्यमिति तत्राह—सुसुखमिति। यथा परीक्षकोपदेशमात्रादनर्घं रत्नं ज्ञातुं सुकरं तथा गुरूपदेशमात्रेण ब्रह्मज्ञानसाधनानुष्ठानं कर्तुं सुसुखं सुखसाध्यमित्यर्थः। यथा आयासतारतम्यतो भूयस्त्वमल्पत्वं च कर्मफलस्य श्रूयते, तथा ऽऽयासतारतम्यतो ज्ञानफलस्यापि भूयस्त्वमल्पत्वं च न्याय्यं वक्तुम्। निरायाससाध्यज्ञानफलस्याल्पत्वेन व्ययः स्यादित्याशङ्‌क्यमानं प्रत्याह—अव्ययमिति। न स्वतः परतो वा व्ययो ऽस्तीत्यव्ययम्। बहुलतरायाससाध्यधर्मतत्फलविपरीतत्वादनायासलब्धमपि ज्ञानफलमव्ययमेवेत्यर्थः। 'अव्ययमनावनन्तं तदव्ययम्' 'यद्भूतयोनिं परिपश्यन्ति धीराः' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतेः। यतो वक्ष्यमाणज्ञानमेवंविशेषणविशिष्टमतस्त्वया श्रद्धाभक्तिपुरःसरमनुसंधेयमित्यर्थः॥ २॥

ननु वक्ष्यमाणज्ञानस्यातिसुलभत्वेन सर्वे तदवाप्त्यै त्वामेव प्रपद्यन्ते यदि तदा संसारिणां मृग्यत्वात् संसारनिवर्तकशास्त्रस्य वैरर्थ्यं स्यादित्यपेक्षायाम् अशुद्धचित्तानां तत्र श्रद्धाऽनुदयेन संसारकल्पनाध्रौव्यात् तन्निवर्तकशास्त्रस्य नार्किचित्करतेत्याह—

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि॥ ३॥**

अश्रद्दधाना इति। हे परंतप! ब्रह्माहमस्मि ब्रह्मैवास्मीत्यैक्यधारणाऽर्हस्याम्यानन्यभक्तिलक्षणसम्यग्ज्ञानधर्मस्य विचारे प्रतिपत्तौ फले च येषां

श्रद्धा आस्तिक्यबुद्धिर्वेदिति ते अश्रद्धानाः श्रद्धाभक्तिध्यानशमादिसाधन-विरला इत्यर्थः। तेषां तद्वैरल्यं कुत इति तत्राह—पुरुषा इति। स्वाविद्या-विजृम्भिताः पुरुषाः, दुःखसंसारवेषमायामहामोहावृतदृष्टित्वात्तेषां श्रद्धाऽऽदि-साधनवैरल्यं युक्तमित्यर्थः। एवंविधाः मुद्वासनमर्हन्तीति तत्राह— निवर्तन्त इति। अश्रद्धानादिविशेषणविशिष्टा जन्तवो मत्प्राप्त्यनन्यभक्त्यतिरिक्त-साधनानुष्ठाने प्रवृत्ता अपि सर्वान्तर्यामित्वेन सर्वप्रत्यक्त्वेन सर्वाधिष्ठानत्वेन स्वेतरसर्वासत्त्वेन च वर्तमानं मामप्राप्य 'जीवापेतं वा व किलेदं म्रियते न जीवो म्रियते' इति श्रुतिप्रकटितामृतभावमपि जीवजातं मृतमिव करोतीति मृत्युस्तूलाविद्याविजृम्भितः संसारः, तद्वर्त्मनि नितरां वर्तन्ते तत्रैवारान-मर्हन्ति। मृत्युकवलिते संसारमार्गे सदा परिभ्रमन्तीत्यर्थः॥ ३॥

वक्ष्यमाणज्ञानश्रद्धाऽश्रद्धावत्स्तुतिनिन्दाभ्यां श्रोतारमभिमुखीकृत्य यद्वक्तव्यं तज्ज्ञानं विशिनष्टि—

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥ ४॥**

मयेति। परमकारणभूतेन मया चेतनाचेतनात्मकं सर्वमिदं जग-त्ततम्। किमस्मद्गोचरव्यक्तमूर्तिना त्वया व्याप्तम्? नेत्याह—अव्यक्तेति। भक्तेच्छोपात्तमूर्तभावस्य करणग्रामगोचरत्वेन व्याप्त्यसंभवात् तद्विपरीतत्वे-नाव्यक्ता मूर्तिर्यस्य तेनाव्यक्तमूर्तिना परमार्थनित्यनिष्कलसच्चिदानन्दरूपेण मया सर्वमिदं कवलितमित्यर्थः। न च निरात्मकं भूतजातं किंचिद्व्यवहाराय कल्पते। इदमस्तीदं भातीदं प्रियमिति व्यवहारास्पदत्वेन विद्यमानत्वात् सर्वं मदात्मकमेवेति भावः। त्वदात्मकान्यपि भूतानि किं त्वय्येव तिष्ठन्त्युत स्वदन्यत्रेति तत्राह—मत्स्थानीति। परमकारणभूते ऽव्यक्तमूर्तौ मयि

तिष्ठन्तीति मत्स्थानि सर्वभूतानि चेतनाचेतनात्मकानि ब्रह्मादिस्तम्बान्तानि मत्स्थानीत्युच्यन्ते। तेषां मदात्मकत्वेन मदन्यत्र विश्रमाभावात्। यथा मृदात्मका घटशरावादयो मृत्स्था तथा त्वदात्मकानि सर्वभूतानि त्वत्स्थानि भवन्तु। घटशरावादिषु मृदिव त्वन्मयभूतेषु त्वमपि किं तिष्ठसि? नेत्याह— न चेति। कार्यकारणभावमापन्नयोः मूर्तद्रव्ययोरितरेतराश्रयतोपपद्यते। न चामूर्तस्य मूर्तेन सश्लेषो ऽस्ति। यथा ऽनुवृत्तव्योम्नो व्यावृत्तघटाद्यश्लेषो दृश्यते, तथा व्योम्नो ऽप्यन्तरतमत्वेन सर्वानुवृत्तस्य मम न केनचित्सश्लेषो युक्तः। तस्मात्तेषु भूतेषु न चाहमवस्थितः। यत एवमतो ऽनुवृत्तव्यावृत्तयोरितरेतराश्रयता नोपपद्यत एवेत्यर्थः ॥ ४ ॥

अव्यक्ताकाशस्य तवामूर्तत्वेन व्यावृत्तभूतसश्लेषाभावे ऽपि सर्वानुवृत्ते त्वयि व्यावृत्तभूतजातस्य सश्लेषसंभवात् तैरसश्लिष्टत्वं कुत इति तत्राह—

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥ ५॥**

न चेति। न च कुण्डे बदराणीव मत्स्थानि सर्वभूतानि भवन्ति। सर्वानुवृत्ते मयि तेषां व्यावृत्तत्वेन मिथ्यात्वात् वितथावितथयोः सश्लेषायोगादेव मे तैः सश्लेषो भवेत्। ननु मूर्तामूर्तयोः सश्लेषाभावे कथं मया ततमिदं सर्वं मत्स्थमिति विरुद्धमुच्यत इति चेत्तस्य व्यापकत्वाश्रयत्वयोरविरोधान्न विरुद्धमित्याह—पश्य मे योगमिति। मे मम परमेश्वरस्यैश्वरं योगमघटितघटनाचातुर्यमवलोकय। मद्योगमायावैभवस्यामतर्क्यत्वात् न कश्चिद्विरोधावकाश इत्यर्थः। स्वयोगमायावैभवमेव प्रकटयति— भूतभृदिति। को ऽयं भूतभृत्? तत्राह—ममात्मेति। स्वाविद्याऽऽवृतदृष्टीनां सोपाधिकत्वविपश्चितस्य मम परमेश्वरस्य मद्राबकत्वलितातद्भावयोगिपटलानु

भवसिद्धो निरुपाधिक आत्मा गगनवदसङ्गो ऽपि सन् भूतानि ,बिभर्ति धारयति पालयतीति भूतभृदित्युच्यते । भूतभृत्त्वे ऽपि भूताविर्भावतिरोभावहेतुता कुत इति तत्राह—भूतभावन इति । स्वव्यावृतभूतान्याविर्भावयति तिरोभावयतीति च भूतभावन । परमार्थतो नाहं भूतेषु वसामि नापि मयि भूतानि वसन्ति मद्व्यतिरेकेण भूतभौतिकजातशून्यत्वादनात्मप्रपञ्चो नास्त्येवेत्यर्थः ,

'अनात्मेति प्रसङ्गो वा अनात्मेति मनो ऽपि वा ।
अनात्मेति जगद्वा ऽपि नास्त्यनात्मेति निश्चिनु ॥
यथैव मृन्मयः कुम्भस्तद्वद्देहो ऽपि चिन्मयः ।
आत्मानात्मविवेको ऽयं मुधैव क्रियते ऽबुधैः ॥'

इत्यादिश्रुतेः ॥ ५ ॥

अस्त्वेवं स्वद्वाबारूढाना तेषा कृतकृत्यत्वात् । प्रकृते तावद्यथा देहादिजन्मस्थितिभङ्गकर्मणा जीव क्लिप्यते, तथा त्वमपि भूतग्रामजन्मस्थितिभङ्गकर्मणा क्लिप्यस इत्याकाङ्क्षायाम् 'मया ततमिदम्' इत्यादिश्लोकद्वयेन यो ऽर्थो ऽभिहित तमेतमर्थं दृष्टान्तेन स्पष्टयति—

**यथा ऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

यथेति । यथा सर्वत्र गच्छतीति सर्वत्रगो वायु परिमाणतो महानपि नित्यं सदा स्वोत्पत्तिस्थितिलयकाले ऽवकाशं विना कस्याप्युत्पत्त्य संभवात् म्नोत्पत्त्याद्यवकाशहेतुत्वेन स्वकारणभूताकाशे तिष्ठतीत्याकाशस्थो ऽपि नाकाशेन वायु संक्लिप्यते वायुना ऽऽकाशं वा । निरवयवत्वे-

नाकाशस्य वायुना संश्लेषाभावे ऽपि वायोः सावयवत्वेनाकाशेन संश्लेषः स्यादिति चेत्र; सावयवयोरेव निरवयवसावयवयोः सामानाधिकरण्याभावेन संश्लेषवैरल्यस्य स्फुटत्वादिति पुरस्तादेवोक्तत्वात्। तथा सर्वाण्याकाशादीनि पञ्च महाभूतानि तथा भौतिकजातानि चाकाशस्थानीयविज्ञानात्मामिन्ने परमात्मनि मयि संश्लेषमन्तरेण तिष्ठन्तीति मत्स्थानीत्युपधारयावधारय, निश्चिन्वित्यर्थः ॥ ६ ॥

स्वस्यासङ्गत्वे ऽपि योगमायया जगत्स्थितिहेतुता यथोपपद्यते तथा सृष्टिप्रलयहेतुता ऽप्युपपद्यत इत्याह —

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

सर्वेति। हे कौन्तेय! कल्पक्षये प्रलयकाले सर्वभूतान्याकाशादिभूतभौतिकजातानि मामिकां मदधीनत्वेनास्वतन्त्रां त्रिगुणात्मिका प्रकृतिं यान्ति, जडप्रकृतौ विलीयन्त इत्यर्थः। कल्पक्षये भूतानि प्रकृतिं यान्ति चेत् कल्पादौ भूतानि स्वयमेव प्रकृतेः एवोत्पद्येरन्; किं स्वप्रकृत्यतिरिक्तकारणताकल्पनेनेत्यत आह—विसृजामीति। कल्पादौ सृष्टिकाले पुनस्तान्याकाशादीनि भूतभौतिकजातानि विशेषेण सृजामि। भूतानां प्रकृतिवशगत्वेन प्रकृतेर्जडत्वेन च तयोराविर्भावतिरोभावकारणमहमेवेत्यर्थः ॥ ७ ॥

प्रकृतेर्जडत्वात् भूतानां चेतनत्वे ऽपि प्रकृतिपरतन्त्रत्वादीश्वरस्यापि स्वेतरवस्तुशून्यत्वेन कार्यकारणताऽनुपपत्तेरित्येवं प्राप्ते, तत्रोच्यते। परमेश्वरस्य स्वेतरवस्तुशून्यत्वे ऽपि मद्व्यवष्टम्भत कार्यत्वं कारणत्वं चोमुपपद्यत इत्याह—

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

प्रकृतिमिति । स्वेतरवस्त्वनतरङ्गः परमेश्वरो ऽहं स्वां स्वाधीनां प्रकृतिमवष्टभ्याधिष्ठाय प्रलयकाले मदीयप्रकृतौ प्रलीनं स्वाज्ञानतत्कार्यम्भावरूपा प्रकृतिस्तद्वशात् तत्पारतन्त्र्यात् अवशमस्वतन्त्रं कृत्स्नमिमं चतुर्विधं भूतग्राममनादिसंसारे विशेषेण सृजामि । कदा? पुनः पुनः प्रतिकल्पमित्यर्थः । वीप्सातः संसारस्यानादित्वं द्योत्यते ॥ ८ ॥

स्वाज्ञानपरवशं भूतग्रामं विषमं विदधतस्तव तत्तद्धर्मादिसंबन्धतो जीववदनीश्वरत्वं किं न स्यादित्याकाङ्क्षायामाह—

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

न चेति । हे धनंजय ! यद्भूतग्रामकृतपुण्यपापवासनाऽनुरोधिविषमसृष्टिनिमित्तकर्मलेपतो जीववदनीश्वरत्वं मयि शङ्कसे, तानि कर्माणि मां न च निबध्नन्ति । विषमं कर्म कुर्वतः तत्प्रयुक्तो बन्धः स्यादिति शङ्कमानं प्रत्याह—असक्तमिति । तेषु विषमसृष्टिहेतुषु पुण्यपापकर्मसु करोमीदं कर्म ममेदमिति च कर्तृत्वाद्यभिमानविकल्पवादसक्तमसङ्गोदासीनस्वभावं परमेश्वरं तानि कर्माणि कथं बध्नीयुः? तत्कथमिति तत्राह— आसीनमिति । यथा कश्चिदुदासीनो विवदमानयोर्हानिं वृद्धिं वा प्रपश्यतोरप्युपेक्षको निर्विकारो भवति, तथा कूटस्थरूपेणासीनं नित्यशुद्धबुद्धापरिमितानन्दं फलमुफलवन्ति कर्माणि स्प्रष्टुमपि न पारयन्तीत्यर्थः । एवं मद्भावारूढस्य यस्य कस्यचित्फलकामनाकर्तृत्वाभिमानाभावो धर्माधर्मासंश्लेषे कारणमिति भावः ॥ ९ ॥

तवेश्वरस्य जगत्स्रष्टृत्वं तत्रोदासीनत्वं च तमःप्रकाशवद्विरुद्धमित्याशङ्क्याह—

**मया ऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।**
**हेतुना ऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

मयेति । हे कौन्तेय ! 'कर्माध्यक्षः सर्वभूताधिवासः' 'यो अस्याध्यक्ष परमे व्योमन्' इत्यादिश्रुतिषु सर्वेषां सर्वकर्मफलदातृत्वेन चेतनाचेतनात्मकविश्वाधिष्ठानत्वेन च प्रसिद्धेन मया अध्यक्षेण निर्विकारतया निमित्तभूतेन स्वाश्रयाऽनाद्यनिर्वचनीया प्रकृतिः सचराचरं जगत् सूयते उत्पादयतीत्यनेन मदधिष्ठानहेतुना सचराचरमिदं जगत्पश्यामि शृणोमि सुखासुखमनुभवामि किंचिज्जानामि न जानामीत्येवंरूपेण विपरिवर्तते, पौनःपुन्येन भूत्वा भूत्वा संसारचक्रे परिभ्रमति । लोहव्यापारहेत्वयस्कान्तवन्ममेश्वरस्य संनिधिमात्राधिष्ठातृत्वात् जगत्कर्तृत्वं तत्रोदासीनत्वं चाविरुद्धम्, वस्तुत उभयाभावादिति भावः ॥ १० ॥

ननु 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुत्या अद्वैतपरमानन्दस्वरूपेण सर्वात्मभूतमपि त्वां ज्ञात्वा कुतो न भजन्तीत्याकाङ्क्षायामाह—अवजानन्तीति द्वाभ्याम् ।

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

अवजानन्तीति । मूलाज्ञानदृढपटावृता देहादावात्मात्मीयाभिमानारूढा मूढा पुरुषाधमाः प्रत्यगभिन्नब्रह्मरूपिणो मम स्वाविद्यातत्कार्यजातात् परं भावं नित्यशुद्धबुद्धमुक्तपरमानन्दस्वभावं सर्वेषामाकाशादिभूताना-

मन्तरतमत्वेन प्रसिद्धं भक्तपूगास्वपदप्राप्तिहेतुं सकलं भावं च,अजानन्त सन्त सर्वेषां ब्रह्मादिस्तम्बान्तभूतानां महान्तमीश्वरं मा तूलाविद्याविजृम्भिता मानुषीं तनुमाश्रितं मत्वा केवलमनुष्यो ऽयमित्यवजानन्त्यवज्ञा परिभवं च कुर्वन्ति । मदवज्ञादोषेण मामज्ञात्वा संसरन्तीत्यर्थः ॥ ११ ॥

ईश्वरावज्ञानात्तेषां किं भवतीति तत्राह—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

मोघेति । मद्भिन्नदेवता क्षिप्रफलं दास्यति इत्येवं मोघा आशा आशिषो येषां ते मोघाशा भवन्ति, परमार्थफलवहिष्कृतत्वात् । त्वा परिभवं कुर्वतामपि नित्यनैमित्तिककर्मानुष्ठानादमोघाशा स्युरिति तत्राह—मोघेति । मदवज्ञा दोषतो मोघानि नित्यनैमित्तिककर्माणि येषां ते मोघकर्माणः मद्भावविकलकर्मणा बन्धहेतुत्वात् । मोघकर्माणो ऽपि शास्त्रार्थपरिज्ञानात् सफलाशा स्युरिति तत्राह—मोघेति । तथा मदवज्ञादोषेण मोघं व्यर्थं शास्त्रार्थपरिज्ञानं येषां ते मोघज्ञाना कुतर्कतो विपरीतभावनादोषदुष्टत्वात् कुतर्कनष्टेन तेषामाशा सफला भवेदिति तत्राह—विचेतस इति । पुरुषार्थान्तरे ऽपि विक्षिप्त चेतो येषां ते विचेतसः । मद्भावविकलाना विशेषस्य ध्रौव्यात् न केवलमुक्तदोष तेषाम्, किं तु वर्तमानदेहपातानन्तरं निकृष्टयोनिप्राप्तिः निरङ्कुशत्याह—श्रिता इति । छिन्द्धि भिन्द्धि पिब खादेति रक्षसामियं राक्षसी परस्व परदारानपहरेत्याद्यसुराणामियमासुरी, तामेवरूपां मोहिनीं महामोहकरीं प्रकृतिं स्वभावमाश्रिता भवन्ति । कदा ऽपि ते मा न भजन्तीत्यर्थः ॥१२॥

के त्वामुक्तलक्षणं भजन्तीत्याकाङ्क्षायां श्रद्दधाना मद्भक्ता इत्याह—महात्मानं इति द्वाभ्याम्—

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

महात्मान इति । हे पार्थ ! मदाराधनलक्षणनिष्कामकर्मानुष्ठानतो महान्विशुद्ध आत्मा अन्तःकरणं येषां ते महात्मानः । तुशब्दतो महदपरिच्छिन्नब्रह्मात्मभावारोहेच्छा द्योत्यते । साधनचतुष्टयसंपन्नाः पुरुषाः 'अभयं सत्त्वसंशुद्धि' इत्यादिवक्ष्यमाणलक्षणां देवानां प्रकृतिं दैवीं प्रकृतिं शमदमदयाश्रद्धादिस्वभावमाश्रिताः सन्तः अनन्यमनसः प्रत्यगनन्यत्वेन विद्यमाने परमपुरुषे मयि मनो येषां ते अनन्यमनसो भूत्वा परमकारणत्वेन महदादिभूतानामादिं महासत्तास्वभावत्वादव्ययं मां श्रुत्याचार्यदिनकरानुगृहीतवेदान्तज्ञानदृष्ट्या ज्ञात्वा अपरोक्षीकृत्य प्रत्यगभेदेन भजन्ति सेवन्त इत्यर्थः ॥ १३ ॥

एवं भजतां भजनप्रकारमाह—सततमिति द्वाभ्याम्—

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

सततमिति । केचिदनन्यभक्त्या साधनचतुष्टयसंपन्नाः नित्ययुक्ताः संन्यासिनः प्रणवमहावाक्यैः प्रत्यगभिन्नब्रह्मरूपं वासुदेवं मां कीर्तयन्तः स्तुवन्तः सन्तः उपासते । केचिदनन्यभक्त्या स्वेन्द्रियद्वयनिग्रहे नित्ययुक्ता वानप्रस्था द्विविधं ब्रह्मचर्यमेव दृढं व्रतं येषां ते दृढव्रता भूत्वा सर्वकर्मसंन्यासलक्षणप्रत्यगभिन्नब्रह्मनिष्ठामारोढुं यतन्तो यत्नं कुर्वन्तः सर्वभूतगुहाशयं माम् उपासते । केचिन्निरतिशयप्रेमलक्षणभक्त्या नित्ययुक्ताः परमैकान्तिनो भागवताः सर्वेश्वरूपिणं मां सर्वत्र पश्यन्तो नमस्यन्तश्चोपासते ।

'ईश्वरो जीवरूपेण प्रविष्टो भगवानिति ।
प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥'

इति श्रुते ॥ १४ ॥

पूर्वोक्ताधिकारिण केन प्रकारेण त्वामुपासत इति तत्राह —

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

ज्ञानेति । उत्तमाधिकारिण केचिदन्य सर्वकर्मसन्यासलक्षणब्रह्मनिष्ठार्हा सन्यासिन प्रत्यग्ब्रह्मणोरेकत्वेन वासुदेव सर्वमिति सर्वात्मैकत्वदर्शन ज्ञान तदेव यज्ञ तेन ज्ञानयज्ञेन यजन्त अनुसधान कुर्वन्त सन्तो मामद्वैतभावनयोपासते । चापिशब्दाभ्या प्रत्यग्ब्रह्मणोरभेदभावना द्योत्यते । तेषा क्वापि द्वैतभान न भातीत्यर्थ । मध्यमाधिकारिण कथमुपासत इति तत्राह—पृथक्त्वेनेति । केचिन्मध्यमाधिकारिणो यो ऽसौ भगवान् विष्णु सो ऽयमादित्यचन्द्रादिरूपेणावस्थित इति पृथक्त्वेनोपासते । मन्दाधिकारिण कथमुपासत इति तत्राह—बहुधेति । केचिन्मन्दाधिकारिणो बहुधा बहुप्रकारेण विश्वतोमुख विराड्भाव प्रतिपद्य चेतनाचेतनेषु भगवानेक एवावस्थित इत्युपासते, 'एको देवो बहुधा सनिविष्ट' इति श्रुते ॥ १५ ॥

एकस्त्व बहुधा कथमुपास्यो भवसीति तत्राह—अहमिति चतुर्भि ।

**अहं क्रतुरहं यज्ञः स्वधा ऽहमहमौषधम् ।**
**मन्त्रो ऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

अहमिति । अग्निष्टोमादि श्रौतं कर्माहमेवेत्याह—क्रतुरिति । स्मृत्युक्तं पञ्चयज्ञादिकं कर्माहमेवेत्याह—यज्ञ इति । श्राद्धादिकं कर्माहमेवेत्याह—स्वधेति । ओषधिभवमन्नं भेषजं वा ऽहमेवेत्याह—औषधमिति । पितृदेवतोद्देशेन येन हविर्दीयते स याज्यापुरोऽनुवाक्याद्यहमेवेत्याह—मन्त्र इति । मन्तारं त्रायत इति मन्त्रः, मनोव्यापाराधीनत्वात् । होमसाधनद्रव्यमहमित्याह—आज्यमिति । आहवनीयादिरहमिति विशिनष्टि—अग्निरिति । हवनक्रिया ऽप्यहमित्यादिशति—हुतमिति । क्रियाकारकफलादिकं मदतिरिक्तं नास्तीत्यर्थः ॥ १६ ॥

इतश्च सर्वात्मकत्वं स्फोरयति—

**पिता ऽहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥**

पितेति । परिदृश्यमानस्य चराचरात्मकस्यास्य जगतः कारणमहमित्याह—पिता जनयिता निमित्तकारणम्, माता जनयित्र्युपादानकारणम्, अभिन्ननिमित्तोपादानकारणमहमित्यर्थः । सर्वकर्मफलप्रदाता कर्माध्यक्षो ऽहमेवेत्याह—धातेति । हिरण्यगर्भो ऽप्यहमित्याह—पितामह इति । मुमुक्षुभिर्वेदितव्यमहमित्याह—वेद्यमिति । पापपटलशोधकपुण्यतीर्थादिरहमित्याह—पवित्रमिति । वेदब्रह्मवेदनसाधनमहमित्याह—ओंकार इति । तत्प्रमाणमप्यहमित्याह—ऋगिति । ऋक्साम यजुरेव च, चकारादथर्वाङ्गिरसो ऽपि गृह्यते ॥ १७ ॥

इतश्च स्वस्य सर्वात्मकत्वे हेत्वन्तरमाचष्टे—

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

गतिरिति । यावदविद्याद्य तावत्स्वर्गादिकर्मफलं गम्यत इति गमको ऽहमित्याह—गतिरिति । स्वकृतकर्मफलप्रदानेन जगत्पोष्टा ऽहमित्याह—भर्तेति । सर्वान्तरत्वेन नियामको ऽहमित्याह—प्रभुरिति । स्वसाक्ष्यपटलभावाभावेक्षको ऽहमित्याह—साक्षीति । कार्यकरणप्रपञ्चो यत्र निवसति तदधिष्ठानमहमित्याह—निवास इति । प्रपन्नजनाध्यात्मिकादिदुःखानि यत्प्रयोगमात्रेण शीर्यन्ते तादृशो ऽहमित्याह—शरणमिति । प्रत्युपकारनैरपेक्ष्येण सर्वप्राण्युपकर्ता ऽहमेवेत्याह—सुहृदिति । प्रकर्षेण भवत्यनेन सर्वमिति तदुत्पत्तिकारणमहमित्याह—प्रभव इति । प्रलीयते ऽस्मिन् सर्वमिति प्रलयकारणमहमित्याह—प्रलय इति । तिष्ठत्यस्मिन् सर्वमिति सर्वाधिकरणमहमिति दर्शयति—स्थानमिति । कालान्तरोपभोग्यतया निधीयन्ते ऽस्मिन्निति निक्षेपो ऽहमित्यादिशति—निधानमिति । सर्वप्राणिनां प्ररोहकारणमहमिति प्रत्याययति—बीजमिति । बीजस्य नश्वरत्वशङ्कां शातयति—अव्ययमिति । व्रीह्यादिबीजानां नश्वरत्वे ऽपि सर्वप्ररोहबीजस्य पारमेश्वरस्य सच्चिदानन्दरूपत्वेन कदाचिन्न व्यतीत्यव्ययत्वं निरङ्कुशमित्यर्थः ॥ १८ ॥

इतश्च सर्वात्मकत्वं व्याचष्टे—

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

तपामीति । ग्रीष्मकाले सूर्यादिरूपेण जगत्तापं करोमीत्याह—तपामीति । कैश्चिद्रश्मिभिर्वर्षं निगृह्णामीत्यर्थः । प्रावृट्काले कैश्चिद्रश्मिभिर्वृष्टिं वितरामीत्याह—वर्षमुत्सृजामीति । सर्वप्राणिजीवनं देवानामुपभोग्यं वा ऽहमित्याचष्टे—अमृतमिति । सर्वप्राणिपूगोपसंहर्ता

ऽहमित्याह—मृत्युश्चेति । चाक्षुषमभिव्यक्तनामरूपं विशेषवस्तुजातमह मित्याह—सदिति । अनभिव्यक्तनामरूपत्वेनाचाक्षुष सामान्यवस्तुजात चाहमित्याह—असच्चेति । एतत्सर्वमहमेवेति मत्वा बहुधा मामेवोपासत इति पूर्वेणान्वय ॥ १९ ॥

'महाऽऽत्मानस्तु मा पार्थ' इत्यादिना प्रत्यवपर्यायेकत्वेन पृथक्त्वेन बहुधा या तरतमज्ञानयज्ञारूढा य मामुपासते ते स्वकृतोपासनातारतम्येन सद्योमुक्तिं क्रममुक्तिं वा प्राप्नुवन्तीति प्रकटयितुम् 'अवजानान्ति मा मूढा' इत्यादिश्लोकद्वयेन क्षिप्रफलप्रतिपित्सया मदतिरिक्तधिया देवताऽन्तरयाजकाना गतागतलक्षणससारगतिं निगमयति—त्रैविद्या इति द्वाभ्याम् ।

> त्रैविद्या मां सोमपाः पूतपापा
> यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
> ते पुण्यमासाद्य सुरेन्द्रलोक-
> मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥

त्रैविद्या इति । ऋग्यजु सामरूपा तिस्रो विद्या येषा ते त्रिविद्या त्रिविद्या एव त्रैविद्या । तिस्रो विद्या अधीयते विदन्तीति वा त्रैविद्या । वेदत्रयोक्तकर्मपरायणा इत्यर्थ । मद्रूप देवताऽन्तरमिति जानन्तो ऽपि परमार्थतो वेदत्रयविहितयज्ञैरिन्द्रादिरूपिण मामेवेष्ट्वा सपूज्य यज्ञशिष्ट सोम पिबन्तीति सोमपा । तेनैव पूतपापा विगतकल्मषा सन्त स्वर्गतिं स्वर्गे लोकगमन प्रति य प्रार्थयन्ते ते कामिन पुण्यफल सुरेन्द्रलोकमासाद्य दिवि स्वर्गे दिव्याननुत्तमान् देवभोगानश्नन्ति भुञ्जते ॥ २० ॥

स्वर्गप्राप्तिरपि भगवत्प्राप्तितुल्येति तत्राह—

**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रैधर्म्यमनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ॥ २१ ॥**

ते तमिति । ते स्वर्गकामा पशुसदृशबुद्धित्वात् तं स्वकाङ्क्षितं विपुलं स्वर्गलोक तद्गतसुखस्य विपुलत्वात् विशाल तत्सुख भुक्त्वा भोगप्रापक- पुण्ये क्षीणे सति मृतिपर्यवसायित्वात् मर्त्यलोक मनुष्यादिलोक विशन्ति । एवमुक्तरीत्या त्रयाणा वेदत्रयविहिताना हौत्रादिधर्माणा समाहारस्त्रिधर्मं तदेव त्रैधर्म्य त्रिवेदोक्तकर्मानुप्रपन्ना आश्रिता भूत्वा कामान् कामयन्त इति कामकामिन कर्मफलाभिलाषावृततदृष्टित्वात् गतागत गमनागमनं लभन्ते ।

'प्लवा ह्येता अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो ये ऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापि यन्ति[1] ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा ।
नाकस्य पृष्ठे सुकृते ऽनुभूत्वेमं लोक हीनतर वा विशन्ति[2] ॥'

इति श्रुते ॥ २१ ॥

फलाभिसंधिना योगक्षेमौ स्याता तदभिसंधिं विना ज्ञानयज्ञेनैकत्व पृथक्त्वविश्वतोमुखत्वेन निष्कलसकलभावेन त्वामनन्यभक्त्या भजता कथ योगक्षेमौ स्यातामित्यपेक्षायामाह—

[1] मु—१, २, ७
[2] मु—१, १. १०.

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

अनन्या इति । सर्वप्रत्यगभिन्न परमात्मा ऽहमेव न मत्तो ऽन्य परमात्मेति दृढभावनाऽऽरूढत्वात् अनन्या सन्यासिनो मुख्याधिकारिण । तेषा मुख्याधिकारित्व कुत इति तत्राह—जना इति । जन्मादिषड्भावविकारा देहादेरेव नात्मन इति निश्चयात् जना उच्यन्ते । देहात्मभावनावैधुर्यं हि मुख्याधिकारित्वम् । एवमुत्तमाधिकारिण सन्यासिनो ये जना परमात्मान मा प्रत्यगभेदेन चिन्तयन्तो ध्यायन्त सन्त पर्युपासते, परिच्छेदत्रयातीत मा सर्वत्र पश्यन्तीत्यर्थ । एव चिन्तयता किं करोपीति तत्राह—वहामीति । किं वहसि?—योगक्षममिति । तेषा स्वान्तर्बाह्ये नियमभितो मद्ध्यानयुक्ताना मद्भावारुढानाम् । अप्राप्तवस्तुप्रापण योग, प्राप्तवस्तु रक्षण क्षेम, तदुभय वहामि प्रापयामीत्यर्थ । 'प्रियो हि ज्ञानिनो ऽत्यर्थमह स च मम प्रिय । उदारा सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इत्युक्तत्वादार्तादित्रयाणा योगक्षेम किं त्व न वहसि? तत्रोच्यते । सर्वेषा योगक्षेमवाहको मदन्य को ऽस्ति? किं त्वार्तादयस्त्रय स्वाभिन्नमपि मा स्वभिन्न भावयित्वा योगक्षेममीहन्ते । तत परताननुगृह्णामि । मदनन्य भावमारूढाना ज्ञानिना मद्व्यतिरेकेण योगक्षेमतत्प्रापकेच्छाऽभावात् ते स्वा र्थमार्थं न किंचिदपीहन्ते । तैरप्रार्थितमपि योगक्षेम वहामीत्यर्थ ॥ २२ ॥

त्वद्व्यतिरेकेण देवताऽन्तरस्य मुख्यत्वेनेन्द्रादिदेवतायाजिना त्वद्रूपत्वात् त्वत्प्राप्ति विना कथ ते गतागतलक्षणससारचक्रे भ्रमन्तीति तत्राह—

**ये ऽप्यन्यदेवताभक्ता यजन्ते श्रद्धया ऽन्विताः ।**
**ते ऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

येऽपीति। हे कौन्तेय! ये मदन्यबुद्ध्येन्द्रादिदेवताभक्ता अपि श्रद्धया ऽऽस्तिक्यबुद्ध्या ऽन्विताः सन्त इन्द्रादिदेवता एव यजन्ते, त इतरदेवतायाजिनो ऽपि मामेव यजन्तीति सत्यम्। किं त्वविधिपूर्वकं यजन्ति। त्रिविधपरिच्छेदशून्यो विष्णुरहमस्मीति धीः विधिर्ज्ञानं तद्विपरीतमविधिमदज्ञानम्, तत्पूर्वकं यतो यजन्त्यत ते गतागतलक्षणं संसारं लभन्ते। न मां प्रत्यगभिन्नब्रह्मरूपम्, मत्प्राप्तेर्मज्ज्ञानगम्यत्वादित्यर्थः ॥ २३ ॥

पूर्वश्लोके यो ऽर्थो ऽभिहितस्तमेव पुनर्विवृणोति—

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

अहमिति। हि यस्मात् श्रौतस्मार्तविहितानां सर्वेषां यज्ञानां तत्तद्देवतारूपेणाहमेव भोक्ता तत्तद्देवताऽन्तर्यामिरूपेण प्रभवामीति प्रसिद्धया प्रभुः स्वामी। चकारद्वयतो भगवदतिरिक्तभोक्तृप्रभुभावो द्योत्यते। 'अधियज्ञो ऽहमेवात्र' इत्युक्तत्वात्। मत्स्वामिको हि यज्ञः भिन्नदेवतायाजिनां यजनस्याविधिपूर्वकत्वं कुत इति तत्राह—न त्विति। तुशब्दो ऽविधिपूर्वकत्वजनद्योतकः। यतो भिन्नदेवतायाजिनस्तयोर्भोक्तृप्रभ्वोर्भावस्तत्त्वं तेन तत्त्वेन यज्ञभोक्तृत्वेन सर्वप्रभुत्वेन च सर्वप्रत्यगभिन्नब्रह्मरूपं मां यथावन्नाभिजानन्ति। मदितरदेवतानिष्ठभोक्तृत्वादेर्मदज्ञानप्रभवत्वात्। अत तस्माद्धेतोरितरदेवतायाजिनो मद्रूपज्ञानात् च्यवन्ति। मय्यनर्पितकर्मफलत्वात् कर्मफलादपि च्यवन्ति, तद्भोगक्षये पुनरावर्तन्त इत्यर्थः ॥ २४ ॥

त्वद्भिन्नदेवतायाजिनां त्वद्भावैकल्येन त्वत्तः कर्मफलादपि च्युतिदर्शनादन्यदेवतायजनमकिंचित्करमित्याशङ्क्य मद्रूपावस्थानलक्षणमोक्षाभावे ऽप्यनित्यकर्मफलस्यावश्यभावान्नाकिंचित्करत्वमित्याह—

यान्ति देवव्रता देवान्
पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या
यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥

यान्तीति । इन्द्रादिदेवेषु हविर्भागप्रदानादि व्रत नियमो येषा ते देव व्रता देवानन्तवतो यान्ति । पितृदेवतोद्देशेनाष्टकाऽन्वष्टकाऽऽदिपण्वतिश्रा द्धादि व्रत येषा ते पितृव्रता अन्तवतो ऽग्निष्वात्तादिपितॄन्यान्ति । विना यकमातृकाऽऽदिभूतगणोद्देशेन यजन कुर्वन्तीति भूतेज्या विनायकादिभूतानि यान्ति । देवपितृभूतादिषु मामन्तर्यामित्वेन ये यजन्ति मद्याजिन तेऽपि मा क्रमाद्यान्ति । यद्वा सर्वप्रत्ययभेदेन य मा यजन्ति ते मद्याजिन मामेव जीवन्मुक्तपटलगम्य यान्ति । सद्योमुक्ता भवन्तीत्यर्थ ॥ २५ ॥

बहुलतरायासलभ्यदेवादिप्राप्तिफलमन्तवन्मत्प्राप्तिफलमनन्तमपि कर्तु मतिसुकरमित्युपदिशति—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥

पत्रमिति । यो मद्भक्त भक्त्या परमप्रेमलक्षणया पत्र तुलस्यादि, पुष्प कमलादि, फल कदल्यादि, तोय गङ्गोदकादि, तेषु यद्यत्सुलभ तत्तन्मे मह्य प्रयच्छति समर्पयति । प्रत्यगभिन्नपरमात्मा वासुदेवो ऽहमिति निष्कामभक्त्या प्रकर्षेण यतो नियत आत्मा ऽन्त करण यस्य तस्य प्रयतात्मनो मद्भक्तस्य परमप्रेमलक्षणभक्त्युपहृत मदर्थ गृहीत्वा समर्पित पत्रपुष्पफलादिकमश्नामि स्वीकरोमीत्यर्थ ॥ २६ ॥

भक्तेभ्य स्वरूप दास्यसि नाभक्तेभ्य , तस्मात् तवापि रागद्वेषतो वैषम्यमस्तीति तत्राह—

**समो ऽहं सर्वभूतेषु न मे द्वेष्यो ऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥**

सम इति । वासुदेव परमेश्वरो ऽह सर्वेषु ब्रह्मादिस्तम्बान्तभूतेषु स्वाचोपाधिवैचित्र्यतो विषमेष्वपि सर्वदा सम तत्तत्प्रत्यक्स्वरूपस्यैकत्वेन समत्वात् । सर्वसमे ऽपि त्वयि द्वेष्य कश्चिदस्तीति तत्राह—नेति । मे मम 'वासुदेवस्य द्वेष्यो न कश्चिदस्ति । द्वेष्याभावे ऽपि प्रिय कश्चित्स्यादिति तत्राह —नेति । मदतिरिक्तद्वेष्यप्रियाभावात् । तर्हि त्वद्भजनमकिंचित्करम् । भक्ताभक्तसमत्वात् तद्दोषपरिहाराय यदि भक्ताननुगृह्णाम्यभक्तान्निगृह्णामीति वदसि तदा तव रागद्वेषादिमत्त्वमनिवार्यं स्यादिति तत्राह—ये भजन्तीति । ये मद्भावारूढा मामनन्यभक्त्या भजन्ति । तुशब्दो नैरन्तर्यद्योतक । ते मयि वर्तन्ते तेष्वहमपि वर्ते । यथा स्वभावतो ऽग्नि शीतनिवारको ऽपि स्वसमीपमागतानामेव शीतनिवारको न दूरस्थानाम् । यथा कल्पवृक्षो वाञ्छितार्थप्रदो ऽपि स्वसेवकानामेव तथाविधो न सर्वेषाम् । तथैव भक्तपक्षपातिनो मम नास्ति वैषम्यम् । मद्भक्के प्रभाव ईदृश । भक्तेषु पक्षपातित्वात् मद्भजनमकिंचित्करमन्वयव्यतिरेकाभ्या निग्रहानुग्रहयो मद्भक्तिनिष्ठत्वान्न मे समत्वहानिरित्यर्थ ॥ २९ ॥

ननु त्वद्भक्ति सदाचारानेव पुनाति न दुराचारानित्याशङ्क्यानन्यभक्ति दुराचारानपि सदाचारान्कृत्वा स्वपदे नियोजयतीत्याह—

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥**

अपीति । श्रुतिस्मृत्यनुगृहीतस्वाश्रमाचारसपन्न सदाचार , तद्विपरीतो दुराचार , ततो ऽप्युत्कृष्ट सुदुराचार कुत्सिताचाराग्रगण्यो ऽपि ब्रह्माहमहमेव ब्रह्मेति प्रत्यगनन्यत्वेन सर्वेश्वर मा भजतीत्यनन्यभाक् चेद्यो ऽयमेव भूत सम्यक् समीचीन व्यवसित निश्चित यस्य स सम्यग्व्यवसितो भवति । स साधु सदाचार एव मन्तव्य । हिशब्दस्तस्य साधुजनैरपि श्लाघनीयता द्योतक । मयि सम्यग्व्यवसितत्वात् । न चानन्यभाक्त्वमन्तरेण सुदुराचारता ऽनिवृत्ते सुदुराचारस्यानन्यभाक्त्वानुपपत्ते तयोरन्योऽन्याश्रयता किं न भवेदिति वाच्यम् । सुदुराचारस्थूलसूक्ष्मबीजाशाना भागवतसङ्गसकलनिष्कलभक्तिनाश्यत्वादनन्तकोटिजन्मसुकृतलब्धभागवतससर्गमात्रत सुदुराचारस्थूलाशो निवर्तते । भागवतसङ्गजनितसुदुराचारस्थूलाशनिवृत्तिजनितसकलब्रह्मशरणलक्षणभक्तित सूक्ष्मभागो निवर्तते । ततो निष्कलब्रह्माहमस्मीति प्रत्यगभिन्नब्रह्मज्ञानलक्षणानन्यभक्तित सुदुराचारबीजभागो ऽपि विलीयते । यत एवमतो ऽनन्यभाक्त्वत सुदुराचारनिवृत्ते कृतकृत्यतामाप्तेश्च न तयोरन्योन्याश्रयादिदोषावकाश इत्यर्थ ॥ ३० ॥

कथ पुनस्त्वदनन्यभाक्त्वतो दुराचारनिवृत्तिरिति तत्राह—

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥**

क्षिप्रमिति । मदनन्यभावाभिसमीहते सुदुराचारतूलाद्रौ सति तदानीमनन्यभाङ् मुनि क्षिप्रमव्यवधानेन प्रत्यक्परचिद्वैक्यधारणाद्धर्मे पूर्णाहभाव आत्मा ऽन्त करण यस्य सो ऽय ब्रह्मात्मनिष्ठो भवति । तत किमित्यत आह—निगच्छतीति । धर्मात्मतापदारोहसमकालमेव शश्वच्छाश्वतीमविद्याद्वयतत्कार्यसुदुराचारघातिनीं मन्निष्ठा शान्ति नितरा गच्छति ।

एवं वेदान्तवेद्यचरणेन विस्पष्टार्थाभिधायिना भगवता यदुक्तं तत्सत्यमेव । एतमर्थमेते सभासदः कुतर्ककर्कशधिषणा न मन्येरन्निति शङ्काव्याकुलितमर्जुनमालक्ष्य हे कौन्तेयेति संबोधयन् प्रोत्साहयति—प्रतिजानीहीति । एवं विवदमानानां सभाङ्गत्वात् वीणावेणुकाहलमड्डुमृदङ्गभेरीवाद्यादिपुरःसरं स्ववाहुं ऊर्ध्वमुत्क्षिप्य निःशङ्कं त्वं प्रतिजानीहि प्रतिज्ञां कुरु । किमिति? मे मम वासुदेवस्यानन्यभावमारूढो भक्तो मद्भजनात् प्रागाचरितदुराचारदोषतो न प्रणश्यति । मद्भजनस्य सदाचारत्वेन दुराचारघातित्वात् स विदेहकैवल्यभागिति घोषय । ततः सभासदस्त्वत्प्रसादलब्धविवेकाः सन्तः कृतार्थतापदमनुवीरन्नित्यर्थः ॥ ३१ ॥

'न मे भक्तः प्रणश्यति' इति यदुक्तं तत्सत्यमस्तु, तथाऽपि त्वद्भक्तिः सत्कुलप्रसूतानेव कृतार्थान्कुर्यान्नेतरानिति तत्राह—

> **मां हि पार्थ व्यपाश्रित्य**
> **येऽपि स्युः पापयोनयः ।**
> **स्त्रियो वैश्यास्तथा शूद्रा-**
> **स्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

मा हीति । हे पार्थ! पापमेव योनिः स्वोत्पत्तौ कारणं येषां ते पापयोनयः निकृष्टजन्मभाज इत्यर्थः । के ते पापयोनय इति तत्राह — स्त्रिय इति । कृषिवाणिज्यादिकर्मकर्तारो वैश्या वेदाध्ययनाधिकाराहेतूपनयनादिसंस्काररहिता स्त्रियः तथाविधा शूद्रा मद्भजनयुक्ताश्चेत् तेऽपीति अपिशब्दस्वारस्यात् । ततो निकृष्टजन्मानोऽपि महाभागवतसंसर्गलब्धभक्त्या सकलं निष्कलं वा ब्रह्मरूपं मां व्यपाश्रित्य ब्रह्मैवाहमहमेव ब्रह्मेत्यन-

न्यभक्तिः इत्या परां परमपुरुषार्थरूपां गतिं मुक्तिं यान्ति । भगवद्भक्तेः जातिकुलवैशिष्ट्यनियमाभावद्योतको हिशब्दः ॥ ३२ ॥

यत्र पापयोनयोऽपि मामुपाश्रित्य परां गतिं यान्ति, अत्र सत्कुलप्रसूता सदाचारसम्पन्ना परां गतिं यान्तीति किं वक्तव्यमित्याह—

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

किमिति । सदाचारसम्पन्नत्वेन पुण्याः पुण्यकर्माणः क्षमादिप्रधाना ब्राह्मणाः तथा राजानश्च ते ऋषयश्चेति राजर्षयश्च मद्भक्ताः परमां गतिं यान्तीति किं पुनर्वक्तव्यमवशिष्यते । मनुष्येतरपश्वादिदेहयोगतो मद्भजनाधिकारायोगात्त्वं मद्भजनयोग्यं मनुष्यदेहं प्राप्तोऽसि । अत इदानीं कार्यान्तरं हित्वा मद्भजनमेव कार्यमित्याभिप्रायेणाह—भजस्वेति । कं भजेयमिति तत्राह—मामिति । प्रत्यगभिन्नमित्यर्थः । किं कृत्वेति तत्राह—प्राप्येति । दुर्लभं मानुषं लोकं भजनयोग्यं प्रतिपद्येत्यर्थः । दुर्लभमनुष्यलोकस्य प्राप्तत्वात् कालान्तरे भजनीयमिति तत्राह—अनित्यमिति । क्षणभङ्गुरत्वात् सुखाभावमप्यसुखमिमं लोकं प्राप्य त्वया ऽहं भजनीय इति भावः ॥ ३३ ॥

भजनप्रकारं दर्शयन्नुपसंहरति—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥ इति ॥**

इति श्रीमद्भगवद्गीतासूपनि० राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥

मन्मना भवेति । हे पार्थ! प्रत्यगभिन्ने मयि वासुदेवे मनो यस्य स त्वं मन्मना भव । मदन्यत्र मनो मा कुर्वित्यर्थः । तथा वासुदेवो ऽहमहमेव वासुदेव इति भक्तिः भजनं यस्य स त्वं मद्भक्तो भव । मदितरदेवताभक्तिं कदा ऽपि मा कुर्वित्यर्थः । प्रत्यगभेदेन मद्यजनं मदनुसंधानं करोषीति मद्याजी भव । मद्यजनाधिकाराभावे ऽपि तादृशाधिकारतासिद्धये मां सदा नमस्कुरु । दासो ऽहं सो ऽहमिति वेत्यर्थः । 'नमस्त्वैश्यं प्रवदेत्' इति श्रुतेः । एवं कृते किं स्यादिति तत्राह—मामेवैष्यसीति । वासुदेवो ऽहमेव परमयनं प्राप्यं यस्य सः त्वं मत्परायणः सन् मय्येव चित्तं युक्त्वा निधाय सर्वप्रत्यगभिन्नं परमात्मानमखण्डैकरसं मामेवैष्यसि । तदा नित्यशुद्धबुद्धपरमानन्दस्वरूपो भवसि । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ ३४ ॥

यद्राजविद्यासंवेद्यसत्ताचित्सौख्यवैभवम् ।
अनन्यद्दृग्मुनिप्राप्यं तत्कैवल्यं वृणोतु माम् ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां नवमो ऽध्यायः ॥

## दशमो ऽध्यायः

पुरोक्ता अपि सक्षेपात्सक्षमादौ विभूतय ।
सर्वत्र स्वावगतये वितन्यन्ते पुनश्च ता ॥

सप्तमाद्यध्यायत्रयेण मुमुक्षुकोटिभजनीय तत्त्व निरूपितम् 'रसो ऽहमप्सु' इत्यादिना । 'अह क्रतुरहम्' इत्यादिना च सक्षेपतो विभूतयो ऽपि निरूपिता । तथा ऽपि स्वतत्त्वस्य दुर्विज्ञेयत्वेन विभूतीनामनन्तत्वेन च यावद्विभूतीना वक्तुमशक्यत्वे ऽपि प्राधान्येन येषु येषु भावेषु चिन्त्यो ऽह स्या ते ते भावा वक्तव्या इति सर्वत्र स्वावगतये भूय एव विभूती प्रपञ्चयिष्यन् स्वानन्यभक्ते स्वपदप्राप्तिहेतुता विशदयन् श्रीभगवानुवाच—

श्रीभगवानुवाच—

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्ते ऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

भूय इति । हे महाबाहो ! मद्वचने प्रीयमाणाय तुभ्य मत्तत्त्वज्ञानमुत्पादयितव्यमिति हितकाम्यया पुरैवोक्तमपि तदर्थस्य दुर्विज्ञेयत्वेन त्वया ऽनवधृतत्वात् भूय एव पुनरपि यदत्य वचो वक्ष्यामि तन्मे परम वच शृणु । मद्वचसो ब्रह्मात्मैकत्वबोधकत्वेन परमत्वमुचितमित्यर्थ ॥ १ ॥

परमवचसस्त्वदन्येनापि वक्तुं शक्यत्वेन त्वद्वचने को विशेष इति तत्राह—

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥ २॥**

नेति। हि यस्मात् सर्वश सर्वप्रकारेणेन्द्रादिदेवाना भृग्वादिमहर्षीणा चादिरभिन्ननिमित्तोपादानकारणमहमस्मि, तस्मात्सुरगणा महर्षयश्च प्रत्यगभिन्नब्रह्मरूपिणो मे मम प्रभवं भक्तपूगस्वपदप्राप्त्युपायभूत न विदु। तेषा मद्भावविकलत्वात् मद्भावारूढेनोपदिष्टं ज्ञानं मद्भावार्हम्, मद्भावारूढस्य मत्स्वरूपत्वात्; मदनन्याचार्योपदिष्ट ज्ञानं गमनागमनाभावलक्षणकैवल्याय भवेत्। 'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यादिश्रुते। अतोऽहमेव तुभ्यमभिधास्यामीत्यर्थ॥ २॥

मत्स्वरूपं मदन्ये न जानन्तीत्युक्तम्। त्वत्स्वरूपं कीदृश तज्ज्ञानफलं चेत्यत आह—

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥ ३॥**

य इति। यस्माद्देवाना महर्षीणा चाहमादि, तस्माल्लोकाना महान्तमीश्वर सर्वनियन्तारमज षड्भावविकारास्पृष्टमनादिं च स्वभिन्नकार्यकारणाभावविभव वासुदेव मा यो वेत्ति, सो ऽयं मद्भक्तो मर्त्येष्वसमूढो निरावृत सन्मतिपूर्वामतिपूर्वकृतपुण्यपापैर्न लिप्यते. प्रकर्षेण मुच्यत इत्यर्थ॥ ३॥

बन्धमोक्षादिव्यवहारसिद्धय मुमुक्षुकोटिस्वपदप्राप्त्युपायभूत सोपाधिक भावमाचष्टे—बुद्धिरिति त्रिभि ।

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवो ऽभावो भयं चाभयमेव च ॥ ४ ॥**

बुद्धिरिति । बुद्धि सदसद्विवेककुशला सदसतो सूक्ष्मसूक्ष्मतरसूक्ष्म तमग्राहकत्वात्, अत एवैव बुद्धिविशिष्ट बुद्धिमन्तमाहु । ज्ञान श्रुत्याचार्य प्रसादजनितशास्त्रार्थगोचरम् । तस्मिन्नतद्भाव समोह, तद्विपरीतो ऽसमोह । क्षमा परकृतमानावमानसहिष्णुता । यथा दृष्ट यथा श्रुत यथा ऽनुभूत तथा तथा शसन सत्यम् । दमो बाह्येन्द्रियनिग्रह । शमो ऽन्तरिन्द्रियनिग्रह । स्वानुकूलविषयलाभज सुखम् । तद्विपरीत दु खम् । यस्यकस्यचिद्वस्तुन उद्भवो हि भव । तद्विपरीतस्त्वभाव । त्रासो भयम् । तद्विपर्ययो ऽभयमेव च । एतत्सर्व मत्त एव भवतीत्युत्तरेणान्वय ॥ ४ ॥

अहिंसाऽऽदयो ऽपि मत्त एव भवन्तीत्याह—

**अहिंसा समता तुष्टिस्तपो दानं यशो ऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

अहिंसेति । अहिंसा जन्तुसामान्यापीडा । समता शत्रुमित्रादिषु विषमबुद्धिविकलता । तुष्टिर्विषयालमति । इन्द्रियद्वयसयमन तप । दान सर्वस्वत्याग । यश कीर्ति इष्टापूर्तादिनिमित्ता । तद्विपरीतमयश । एते बुद्ध्यादयो भावा स्वैनैव भवन्ति, न त्वयेत्यत आह—भवन्तीति । भूताना पृथग्विधा बुद्ध्यादयो भावा स्वस्वकर्मानुसारेण मत्त ग्वेश्वरात् भवन्ति न स्वत, कारण विना कार्यानुत्पत्ते ॥ ५ ॥

सामान्यभावास्त्वचो भवन्तु महर्षय स्वैनैवेति तत्राह—

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

महर्षय इति । महान्तश्च ते ऋषयश्चेति महर्षय प्रसिद्धा सप्त, तेभ्य पूर्वे सनकादयो ऽन्ये चत्वार, तथा स्वायम्भुवादयश्च मनव चत्वार, मदीयो वैष्णवो भावो यथा ते मद्भावा चतुराननात्मना मानसा जाता, मनस सकल्पमात्रतो जाता उत्पादिता इत्यर्थ । येषामन्वादीना पुत्रपौत्रप्रशिष्यादिरूपा इमा प्रजा ब्राह्मणाद्या इहास्मिन् लोके अद्यापि दृश्यन्ते, ते सर्वे तत्तदात्मना मयैव जाता इत्यर्थ ॥ ६ ॥

सोपाधिक भावमुक्त्वा तज्ज्ञानफल प्रकटयति—

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सो ऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

एतामिति । एता यथोक्तलक्षणामन्वादिरूपा मद्विभूति मत्सर्वात्मकता योगमघटितघटनाचातुर्यलक्षण पारमैश्वर्य च भक्तपूगस्वपदप्राप्त्युपाय भूतमेतत्सर्वं मायामात्रम्, परमार्थत स्वभिन्नविभूतियोगयोरभावादिति तत्त्वतो यो वेत्ति जानाति, सो ऽप्यविकम्पेनाप्रचलितेन ब्रह्मात्मैक्यज्ञानयोगेन युज्यते, सकलज्ञानस्य निष्कलज्ञानहेतुत्वात् । अत्रास्मिन्नर्थे सशयो नास्तीत्यर्थ ॥७॥

पूर्वोक्तसकलनिष्ठातो निष्कलनिष्ठा भवतीत्याह—अहमिति चतुर्भि ।

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

अहमिति ।*प्रकर्षेण भवत्यस्मादिति प्रभव । सर्वस्य जगत परम कारणमहमेव । सर्वकारणता तवास्तु तत्प्रवृत्तिहेतुता कस्य' युत सर्व प्रवर्तत इत्यत आह—मत्त इति । मत्त सर्वान्तर्यामिरूपात्सर्वेश्वरादेव बुद्धिर्ज्ञानमसंमोह इत्यादि सर्वं प्रवर्तते । एवं जानत फलमाह—भजन्त इति । इत्येवप्रकारेणावगतपरमार्थतत्त्वा बुधा सर्वेन मद्भावसमन्विता सर्वप्रकृतित्वसर्वेश्वरत्वसर्वज्ञत्वसर्वात्मत्वादिविशेषणविशिष्ट मा प्रत्यगभेदेन मत्वा भजन्ते । मन्निष्ठा भवन्तीत्यर्थ ॥ ८ ॥

स्वन्निष्ठायामुपाय क इत्यपेक्षाया प्रत्यगभिन्नब्रह्मणो ऽन्यत्र चित्त-प्रचारविकलत्वं मद्भजनपरमसाधनमित्यादिशति—

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

मच्चित्ता इति । मयि वासुदेवे चित्त येषा ते मच्चित्ता । चक्षुरादिप्राणाना स्वचित्तपरिवन्धित्वात् स्वचित्तत्वं युत इति तत्राह—मद्गतेति । स्वस्वविषयविमुखीकरणतो मद्गता मय्युपसहृता प्राणा चक्षुरादयो येषा ते मद्गतप्राणा । तेषा मच्चित्तत्वमुपपद्यत इत्यर्थ । स्वचित्तत्वमेव त्वदुपासनान्यदिति तत्राह—बोधयन्त इति । ब्रह्मचारिणो मद्भावारूढगुरुमुखा-दत्याश्चर्यं मद्वैभव श्रुत्वा परस्परमन्योन्य बोधयन्तो भवन्ति । तदपि मदुपासनमित्यर्थ । उपासनान्तरमाह—कथयन्तश्चेति । मच्चित्तादिविशेषणविशिष्टा गुरव स्वशिष्येभ्य प्रत्यगभिन्न मां कथयन्त उपदिशन्तीत्यर्थ । तदपि मदुपासनमेव । तेषां स्वभावारूढत्वेन बाह्यविषयविमुखत्वात्तुष्टि कथमिति तत्राह—तुष्यन्तीति । ब्रह्मात्मानन्दतुष्टा भवन्ति । ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भावात्त बाह्यतुष्टिरपेक्षितेत्यर्थ । तेषां मनोरथाभावेन कथ

रति स्यादिति तत्राह—रमन्त इति चेति। कामिनीगणसंगता कामुका इव ब्रह्मात्मन्येव रमन्ति रमन्ते, 'आत्मक्रीड आत्मरति क्रियावान्' इति श्रुते ॥ ९ ॥

एव भजता किं ददासीत्यपेक्षायामविकम्पयोगात्मकोपायबुद्धियोग ददामीत्याह—

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥**

तेषामिति। ये मच्चित्तत्वादिविशेषणविशिष्टा सन्तो मामुपासते तेषा किंचिदपि फलान्तरमनपेक्ष्य सतत यावज्जीव मय्येव युक्ताना मीति पूर्वक मा परमेश्वर मत्स्यमभेदेन भजता मद्भक्ताना येन अविकम्पयोगेन स्वात्मानमात्मत्वेनोपयान्ति, ब्रह्मात्मविषयकाखण्डाकारवृत्ति बुद्धि, सैव योग, त बुद्धियोगमविकम्पयोग ददामि प्रयच्छामीत्यर्थ ॥ १० ॥

तेषा स्वाज्ञानसभवेन त्वद्दत्तबुद्धियोगस्याकिंचित्करत्व स्यादित्य पेक्षाया स्वज्ञान दत्त्वा स्वाज्ञानमुन्मूलयामीत्याह—

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

तेषामिति। तेषामेव मद्भावारूढाना विदेहकैवल्य ददामीत्यनु कम्पार्थं तेषामात्मा ऽन्त करण तद्भाव आशय श्रुत्याचार्यप्रसादलब्धा खण्डाकारचित्तवृत्तिरूपे, तस्मिन्नात्मभावे तिष्ठामीत्यात्मभावस्थो वासुदेवो ऽह मदाराधनलक्षणनिष्कामकर्मानुष्ठानजनितविशुद्धान्त करणाधारेण व्याविद्ध

संकल्पकामरागद्वेषप्रभेवब्रह्मचर्यशमदमादिविवेकवर्तिना मद्भावनाऽभिनिवेश-स्नेहेन नित्यैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेन स्वाज्ञानाज्जात मज्ञानजं मिथ्याप्रत्ययलक्षणमहामोहाभिधं तमो नाशयामि । मद्बुद्धियोग-स्यातयोगग्रासकस्त्वात् ॥ ११ ॥

निरस्ताशेषविशेषं भागवतं निरुपाधिकं सोपाधिकं च भावं तज्ज्ञानफलं च श्रुत्वा निरुपाधिकभावस्य भगवत्प्रसादत. स्वबुद्धिगोचरत्वे ऽपि सर्वप्राणिबुद्ध्यगोचरत्वात् सर्वप्राणिसाधारणं सोपाधिकं भागवतं भावं मन्दानुकम्पया भगवन्मुखतः स्फुटयितुं परं ब्रह्मेत्यादिविशेषणै स्तुवन्नर्जुन उवाच—परमिति सप्तभिः ।

अर्जुन उवाच—

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

परमिति । स्वाविद्यातत्कार्यातिरत्वेन बृंहणात् परं ब्रह्म भवानेव नान्य इत्यर्थः । परब्रह्मत्वं मे कथमिति तत्राह—परं धामेति । परमुत्कृष्ट धाम ज्योतिर्मुख्यप्राप्यत्वात । किमर्थं मुक्ता मा प्रपद्यन्त इति तत्राह—पवित्रं परमिति । सर्वस्मात्परतो विभावाव परमं स्वाज्ञानापवित्रस्य स्वज्ञान-शुद्धोदकक्षालनात्पवित्रमपि भवानेवेत्यर्थ । कथं मामेवं ज्ञातवानसीत्यपेक्षायाम् ऋषिगणवाक्यादित्याह— पुरुषमिति । पुरि शयनात्पुरुष तम् । पुरीततो ऽशाश्वतत्वात् तथात्वं कुतो न स्यादिति तत्राह—शाश्वतमिति । शश्वद्भव शाश्वतः तं पुरीतति संबन्धाभावात । तथा चेत् केन रूपेण तत्र वर्तं इति तत्राह—दिव्यमिति । दिवि स्वे महिम्नि स्वेन रूपेण भवसीति दिव्य

तं सर्वप्रपञ्चातीतत्वात् । सर्वस्यादिः क इत्यपेक्षायामाह—आदिदेवमिति । सर्वकारणत्वादादिश्चासौ स्वेनैव देदीप्यमानत्वाद्देवश्चेत्यादिदेवः तमादिदेवम् । जन्माद्यभावादजम् । सर्वव्यापकत्वाद्विभुं भवन्तं ज्ञातवानित्यर्थः ॥ १२ ॥

के मामेवं तुभ्यं वदन्तीति तत्राह—

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**

आहुरिति । यस्मात्पुरुषमित्याद्युक्तविशेषणविशिष्टं त्वां सर्वे वसिष्ठादय ऋषय आहुः; तथा देवश्चासौ ऋषिश्चेति देवर्षिः नारदः, असितो देवलस्य पिता, तथा देवलो व्यासश्च तदन्ये चाप्याहुः; स्वयं चापि मे मह्यं ब्रवीषि; तस्मात्परं ब्रह्मेत्यादि मदुक्तं युक्तमित्यर्थः । ऋषयः सर्व इति गृहीतानां नारदादीनां पृथग्ग्रहणं विशिष्टत्वादुपपद्यत इत्यर्थः ॥ १३ ॥

ऋषिभिस्त्वया चोक्तत्वात् त्वद्विभूतावसंभावना निवृत्तेत्याह—

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि मे भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥**

सर्वमिति । हे केशव! पुरुषं शाश्वतमित्यादिमहर्षिपूगवाक्यतः परं ब्रह्मेत्यादि मदुक्तमृतं सत्यं मन्ये; 'न मे विदुः सुरगणाः प्रभवं न महर्षयः' इति यन्मां प्रति कृपया त्वं वदसि तत्सर्वमप्यृतं मन्य इत्याह—न हीति । हे भगवन्! देवा ब्रह्मादयो ऽपि ते तव व्यक्तिमस्मदनुग्रहार्थमियमभिव्यक्तिरिति न विदुः । तथा दानवा अपि अस्मद्वैराग्योत्पादनेन सन्मार्गे नियोजयितुमिति न विदुरेव । हिशब्दो ऽवधारणार्थः ॥ १४ ॥

यतस्त्वद्रूपं देवादीनामपि दुर्विज्ञेयमतः त्वमेव जानासीत्याह—

**स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

स्वयमिति । पुरुषाणां विराडादीनामुत्तमत्वात् पुरुषोत्तमः, सर्वभूतैरहमहमितयात्मत्वेन भाविवत्वात् भूतभावनः, सर्वभूतनियन्तृत्वात् भूतेशः, ब्रह्मादीनामप्युपास्यत्वात् देवदेवः, जगतां पालकत्वात् जगत्पतिः, इत्यादिविशेषणैः स्वात्मानं भगवन्तं संबोध्य स्वयं त्वमेव सर्वप्रत्यगात्मना ऽभिन्नं परमात्मानं सावकं सकलं निष्कलं वा गुरूपदेशमन्तरेण वेत्थ जानासि, त्वस्यैव गुरूणामपि गुरुत्वात् ॥ १५ ॥

यस्मात्तव सकलं निष्कलं वा भावमसदाद्यगोचरं ब्रह्मादिभिरपि जिज्ञासितं च तस्मान्मह्यं त्वयैव वक्तव्यमित्याह—

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

वक्तुमिति । याभिर्विभूतिभिरिमान् लोकान् व्याप्य पूरयित्वा तिष्ठसि, तासामप्राकृतत्वात् आत्मनो विभूतयः यास्ताः समग्रमशेषं वक्तुमर्हसि ॥ १६ ॥

किमर्थं मद्विभूतीः श्रोतुमिच्छसि ? ध्यानार्थमित्याह—

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

कथमिति । योगो नाम षड्गुणैश्वर्यसंपत्तिः, तदस्यास्तीति हे योगिन्! बहिर्मुखो ऽहं कथं केन प्रकारेण त्वद्विभूतीः परिचिन्तयन्सन् अथ त्वां निरुपाधिकस्वरूपं विद्यां जानीयाम्? प्रश्नान्तरं पृच्छति— केष्विति। हे भगवन्! केषु केषु च भावेषु पदार्थेषु चिन्त्यो ऽसि? चेतनाचेतनभेदेनोपाधीनां बहुलत्वाद् बहुवचनम् ॥ १७ ॥

स्वकृतप्रश्नार्थमुपसंहरति—

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मे ऽमृतम् ॥ १८॥**

विस्तरेणेति । हे जनार्दन! हि यस्मात् सप्तमनवमाध्याययोरुक्तमपि त्वन्मुखारविन्दनिःसृतममृतोपमं वचः शृण्वतो मम तृप्तिः अलंबुद्धिः नास्ति । तस्मादात्मनः तव योगं सर्वज्ञत्वादिरूपमैश्वर्यं विभूतिं वैभवं च भूयः पुनरपि कथय ॥ १८ ॥

अर्जुनेनैवं प्रार्थितो भगवान् तदनुरोधेन प्रतिवचनमुवाच—

श्रीभगवानुवाच—

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**

हन्तेति । हि यस्मात् विस्तरस्य परमात्मनो मे मम विभूतीनामन्तो ऽवसानं नास्ति, तस्मात् ब्रह्मात्मव्यतिरिक्तत्वेन दिव्या या याः स्वात्मविभूतयः सन्ति तास्ता विभूतीः प्राधान्यतो हन्तेदानीं ते तुभ्यमहं कथयिष्यामि ॥ १९ ॥

रामवासुदेवानां स्वस्वरूपत्वे ऽपि तत्तदवतारप्रभावातिशयख्यापनार्थं विभूतित्वेन परिगणनमित्यर्थः । ज्योतिषां प्रकाशयितॄणां विपुलप्रकाशो ऽंशुमान् मद्विभूतित्वेनोपास्य इत्याह—रविरिति । मरुतां वायूनां मरीचिर्नाम मरुत् मद्बुद्ध्योपास्य इत्याचष्टे—मरीचिरिति । नक्षत्राणां शश्यहमिति निर्दिशति—शशीति ॥ २१ ॥

सामवासवमनोबुद्ध्यो मद्विभूतित्वेनोपास्या इत्याह—

**वेदानां सामवेदो ऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

वेदानामिति । वैदिकैर्मन्त्रब्राह्मणरूपेण वेदनीयानामृगादीनां वेदानां सामवेदो मद्विभूतिरित्याह—सामवेदो ऽस्मीति । 'सामवेदो ब्राह्मणानां प्रसूतिः' 'सामानि यो वेद स वेद सर्वम्' इत्यादिश्रुतेः । रुद्रादित्यरूपेण दीप्यमानानामिन्द्रो ऽस्मीत्याह—वासव इति । 'इन्द्रो वै देवानामधिपतिर्विभूः' इति श्रुतेः । विषयोपलब्धिद्वाराणामेकादशानामिन्द्रियाणां मनो मद्विभूतिरिति निगमयति—मनश्चास्मीति । मनोऽधीनत्वादिन्द्रियप्रवृत्तेः । स्वाविद्यातो भवन्तीति भूतानि तेषां प्रत्यग्भासमाना बुद्धिर्मद्विभूतिरिति व्यनक्ति—चेतनेति । मनआदिसर्वेन्द्रियाणां चेतयति प्रकाशयतीति चेतना बुद्धिरहमस्मि । भूतानां चेतनेत्यादिषु संबन्धषष्ठी ॥ २२ ॥

शंकरवित्तेशपावकमेरवो मद्विभूतित्वेनोपास्या इत्याह—

**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

रुद्राणामिति । स्वस्वगणनामाध्यात्मिकादिरुजं द्रावयन्तीति रुद्राः । तेषामेकादशानां रुद्राणां मध्ये शंकरो नाम रुद्रो ऽस्मीत्याह—शंकरश्चास्मीति । सर्वेषां स्वरूपसुखं करोतीति शंकरः । यक्षरक्षसां कौर्यसामान्यात्तेषां कुबेरो ऽस्मीत्याह—वित्तेश इति । अष्टानां वसूनामग्निरहमस्मीत्याह—पावकश्चास्मीति । शिखराणि कूटशृङ्गाणि एषां सन्तीति शिखरिणः तेषामधिपो ऽस्मीत्याह—मेरुरिति । श्लोकत्रयमाधारत्वात् ॥ २३ ॥

बृहस्पतिस्कन्दसागरा अपि मद्विभूतित्वेनोपास्या इत्याह—

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

पुरोधसामिति । पुरोधसां मध्ये बृहस्पतेर्मुख्यत्वात् तं मा मद्विभूतित्वेन वा विद्धीत्याह—बृहस्पतिमिति । प्रज्ञाबाहुल्यात् । सेनानीनां देवसेनापतिरहमित्याह—स्कन्द इति । अकुण्ठितपराक्रमत्वात् । सरसां देवखातानां समुद्रो ऽस्मीत्याह—सागर इति ॥ २४ ॥

भृग्वेकाक्षरजपयज्ञहिमाद्रयो ऽपि मद्विभूतित्वेन सेव्या इत्याचष्टे—

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञो ऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

महर्षीणामिति । महान्तश्च ते मन्त्रद्रष्टार. ऋषयश्चेति महर्षयः । तेषां मध्ये भृगुरहमस्मीत्याह—भृगुरिति । गिरां पदात्मिकानां वाचां मध्ये प्रणवो ऽस्मीत्याह—एकमक्षरमिति । ओंकाराख्यस्यैकाक्षरस्य ब्रह्मप्रतीकत्वेन तदभिधानत्वेन प्रधानत्वात् । वाक्यनिर्वर्त्यानां ज्योतिष्टोमादियज्ञानां

मनोनिर्वर्त्ययज्ञो ऽस्मीत्याह—जपयज्ञो ऽस्मीति । तस्याहिंसात्मकत्वेन सर्वयज्ञेभ्यः श्रेष्ठत्वात् । स्थिरासनानां हिमवानस्मीत्याह—हिमालय इति ॥ २५ ॥

अश्वत्थनारदचित्ररथकपिला मद्विभूतित्वेनोपासनीया इत्याह—

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

अश्वत्थ, इति । सर्ववृक्षाणां वनस्पतीनां मध्ये वृक्षराजो ऽस्मीत्याह—अश्वत्थ इति । त्रिमूर्तिप्रतीकत्वात् । ये देवा मन्त्रदर्शनत ऋषित्वं प्राप्ता तेषा देवर्षीणां नारदो ऽस्मीत्याह—नारद इति । भागवतप्रधानत्वात् । गन्धर्वाणां मध्ये तत्प्रवरो ऽस्मीत्याह—चित्ररथ इति । गायकोत्तमत्वात् । जातमात्रेणावगतपरमार्थतत्त्वानां राजा ऽस्मीत्याह—कपिलो मुनिरिति ॥ २६ ॥

उच्चैःश्रवऐरावतनराधिपा मद्विभूतित्वेन सेव्या इत्याह—

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

उच्चैःश्रवसमिति । अश्वानां मध्ये क्षीराब्धावमृतार्थं मथिते सति तस्मादुत्पन्नम् उच्चैःश्रवोनामकमश्वं मां मद्विभूतिं विद्धीत्याह—उच्चैःश्रवसमिति । गजेन्द्राणामिरावत्या अपत्यमहमस्मीत्याह—ऐरावतमिति । मद्विभूतिं विद्धीत्यर्थः । नराणामधिपतिं मां विद्धीत्याह—नराधिपमिति ॥ २७ ॥

वज्रकामधुक्कंदर्पवासुकयो मद्विभूतय इत्यादिशति—

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।**
**प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः॥ २८॥**

आयुधानामिति। आयुधानामायोधनकरणानां मध्ये दधीचिमुन्यस्थिसंभवः पविरहमस्मीत्याह—वज्रमिति। क्षीरमात्रं दोग्धॄणां मध्ये वसिष्ठादेः वाञ्छितार्थप्रदा धेनुरहमस्मीत्याह—कामधुगिति। प्रकर्षेण जनयतीति व्युत्पत्त्या प्रजनो जनयिता ऽहमस्मीत्याह—कंदर्प इति। सर्पाणां सर्पराजो ऽस्मीत्याह—वासुकिरिति॥ २८॥

अनन्तवरुणार्यमयमा अपि मद्विभूतय इत्याह—

**अनन्तश्चास्मि नागानां वरुणो यादसामहम्।**
**पितॄणामर्यमा चास्मि यमः संयमतामहम्॥ २९॥**

अनन्त इति। नागभेदानां नागविशेषो ऽस्मीत्याह—अनन्तश्चास्मीति। धरणीधरत्वात्। यादसां जलाभिमानिदेवतानां तत्पतिरहमस्मीत्याह—वरुण इति। पितॄणामर्यमेत्याह—अर्यमा चास्मीति। पितृराजत्वात्। संयमनं निग्रहं कुर्वतां वैवस्वतो ऽस्मीत्याह—यम इति। दण्डशासनत्वात्॥ २९॥

प्रह्लादकालमृगेन्द्रवैनतेया मद्विभूतित्वेन समाराध्या इत्याह—

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।**
**मृगाणां च मृगेन्द्रो ऽहं वैनतेयश्च पक्षिणाम्॥ ३०॥**

प्रह्लाद इति। दितिपुत्रा दैत्याः तेषां मध्ये कायाधवो ऽस्मीत्याह—प्रह्लादश्चेति। परमभागवतत्वात्, 'प्रह्लादो ह वै कायाधवः' इति श्रुतेः। गणयतां कालो ऽहमित्याह—कलयतामिति। कलनायाः कालपरिसमाप्तत्वात्। मृगाणां मृगराडहमित्याह—मृगेन्द्र इति। विपुलपराक्रमत्वात्। पक्षिणां पक्षिराजो विनताया अपत्यमहमस्मीत्याह—वैनतेय इति। मनोजवत्वात् ॥ ३० ॥

पवनराममकरजाह्नव्यो मद्विभूतित्वेन चिन्त्या इत्याह—

**पवनः पवतामस्मि रामः शस्त्रभृतामहम्।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥**

पवन इति। पवता पावयितॄणां वायुरहमस्मीत्याह—पवन इति। वायुस्पर्शस्य परिशुद्धिहेतुत्वात्। शस्त्रभृतां दाशरथिरहमस्मीत्याह—राम इति। सत्यप्रतिज्ञत्वाल्लिायादप्रतिद्वंद्वपौरुषत्वाच्च। जलचराणां झषाणामधिपो ऽस्मीत्याह—मकरश्चेति। जलचरसत्त्वानामधिकसत्त्वात्। स्रोतसां नदीनां गङ्गा ऽस्मीत्याह—जाह्नवीति। सरित्प्रवरत्वात् ॥ ३१ ॥

सृष्टिस्थितिलयाध्यात्मविद्यावादा मद्विभूतित्वेन चिन्त्या इत्याह—

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥**

सर्गाणामिति। हे अर्जुन! सृज्यन्त इति सर्गा आकाशादिकार्याणि, तेषामादि संभूतिः मध्यं स्थितिरन्तः लयश्च अहमेवेत्याह—सर्गाणामिति। न चाहमादिश्च मध्यं चेत्यादावुक्तत्वात्सर्गाणामादिरित्यादि

पुनरुक्तिः स्यादिति वाच्यम्, अत्र कार्यविवक्षयोक्तत्वात् । चतुःषष्टि-कलाविद्यानामनात्मविषयाणामात्मविद्या ऽहमित्याचष्टे—अध्यात्मविद्येति । मोक्षार्थत्वात् । प्रकर्षेण वदतां वादिनां संबन्धिन्यो वादजल्पवितण्डा इति तिस्रः कथाः, तासां गुरुशिष्यसंवादो ऽहमित्याह—वाद इति । परमार्थनिर्णयहेतुत्वात् । यत्र प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते परपक्षो दूष्यते सेह जल्पो नाम कथेत्युच्यते । स्वपक्षमेको यत्र स्थापयति अन्यः परपक्षं दूषयति न तु स्वपक्षं स्थापयति सा कथा वितण्डेत्युच्यते । विजिगीष्वोर्वादिनोः जल्पवितण्डाकथे निष्फले भवतः । वादस्तु शिष्याचार्ययोः प्रमाणतत्त्वनिर्णयहेतुः । अतो मद्विभूतित्वं तस्योपपद्यत इत्यर्थः ॥ ३२ ॥

अकारद्वंद्वकालधातारो मद्विभूतित्वेन ज्ञेया इति स्फुटयति—

**अक्षराणामकारो ऽस्मि द्वंद्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाता ऽहं विश्वतोमुखः ॥ ३३ ॥**

अक्षराणामिति । अक्षराणां वर्णानामाद्यो वर्णो ऽहमस्मीत्याह—अकार इति । सर्ववर्णव्यापकत्वात् । 'अकारो वै सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इत्यादिश्रुतेः । सामासिकस्य च समाससमूहस्य मध्ये रामश्च कृष्णश्च रामकृष्णौ इति समासो ऽहमस्मीत्याह—द्वंद्व इति । उभयप्राधान्येन श्रेष्ठत्वात् । प्रवाहरूपः कालो ऽस्मीत्याह—अक्षय इति । न च कालः कलयतामित्युक्तत्वात् पुनरुक्तः कालः इत्युक्त्या पुनर्वचो न मन्तव्यम्, तयोरर्थभेदसंभवात् । पुरोक्तकालशब्दः संवत्सरादात्मकायुष्यपरः, 'शतायुः पुरुषः शतेन्द्रियः' इति श्रुतेः । तादृशायुषि क्षीणे सति कालः क्षीयते । अत्र तु प्रवाहात्मकः काल इति विशेषः । सेवाफलदातॄणां मध्ये कर्माध्यक्षो ऽहमित्याह—धाता

ऽहमिति । विश्वतोमुखः सर्वकर्मफलदाता परमेश्वरः, 'कर्माध्यक्षः सर्वभूताधिवासः' इति श्रुतेः ॥ ३३ ॥

मृत्यूद्भवकीर्त्यादयो मद्विभूतित्वेन भाव्या इत्याह—

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥**

मृत्युरिति । मृत्युर्द्विविधः धनहरः प्राणहरश्चेति । धनस्यापि बहिःप्राणत्वात् । न तथा ऽहम्, नित्यादिप्रलये स्वप्रकृतौ सर्वोपसंहारको मृत्युरहमिति व्यनक्ति—सर्वहर इति । भाविकल्याणानां मध्ये प्राणिनामुद्भवकल्याणो ऽहमेवेत्याह—उद्भवश्चेति । यासामाभाससंबन्धमात्रतो ऽपि लोकः स्वात्मानं कृतार्थं मन्यते ताः कीर्त्यादिस्त्रियो मद्विभूतित्वेन चिन्तनीया इति विशिनष्टि—कीर्तिरिति । नारीणां स्त्रीणां मध्ये कीर्त्याद्याः सप्त देवतारूपाः स्त्रियो ऽहम् । कीर्तिर्धार्मिको ऽयमिति ख्यातिः । श्रीर्लक्ष्मीः, शोभा कान्तिः, वाक् सर्वत्र विजृम्भिता वाणी, स्मृतिश्चिरानुभूतस्मरणशक्तिः, मेधा ग्रहणधारणशक्तिः, धृतिः धैर्यं धीरता, क्षमा मानावमानयोरविकृतचित्तता ॥ ३४ ॥

बृहत्सामगायत्रीमार्गशीर्षकुसुमाकरा मद्विभूतय इति वदति—

**बृहत्साम तथा साम्नां गायत्री च्छन्दसामहम् ।**
**मासानां मार्गशीर्षो ऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

बृहदिति । वेदानां सामवेदो ऽस्मीत्युक्तत्वात् बृहत्सामेति पृथग्ग्रहणं किमर्थमित्याशङ्क्यावान्तरविशेषख्यापनार्थमित्याह—बृहदिति । 'त्वामिद्धि

हवामहे' इत्यादिनेन्द्रस्य सर्वेश्वरत्वेन स्तूयमानत्वात्। छन्दोविशिष्टाना-मृगादिमन्त्राणां मध्ये गायत्रीमन्त्रो ऽहमित्याह—गायत्रीति। ब्राह्मण्य-हेतुत्वात्। मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासो ऽहमित्याह—मासानामिति। पक्वसस्याढ्यत्वात्। षण्णामृतूनां मध्ये वसन्तो ऽस्मीत्याह—कुसुमाकर इति। रमणीयत्वात्॥ ३५॥

द्यूततेजोजयव्यवसायसत्त्वानि मद्विभूतित्वेन मन्तव्यानीत्याह—

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।**
**जयो ऽस्मि व्यवसायो ऽस्मि सत्त्वं सत्त्ववतामहम्॥ ३६॥**

द्यूतमिति। छलयतां मिथोवञ्चनापराणां संबन्धि द्यूतमहमस्मी-त्याह—द्यूतमिति। सर्वस्वापहारहेतुत्वात्। तेजस्विनामाज्ञाधुरंधराणाम-मतिहता ऽऽज्ञा ऽहमित्याह—तेज इति। जयशालिनां संबन्धी जयो ऽहमित्याह—जयो ऽस्मीति। व्यवसायिनामुद्यमो ऽस्मीत्याह—व्यवसाय इति। फलपर्यवसायित्वात्। सत्त्ववतां धर्मज्ञानवैराग्यादिसत्त्वकार्यमहमि-त्याह—सत्त्वमिति॥ ३६॥

वासुदेवधनंजयव्यासकवयो मद्विभूतय इति ज्ञेया इत्याह—

**वृष्णीनां वासुदेवो ऽस्मि पाण्डवानां धनंजयः।**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः॥ ३७॥**

वृष्णीनामिति। वृष्णीनां मध्ये वसुदेवस्यापत्यमहमस्मीत्याह—वासुदेव इति। परमार्थतत्त्वोपदेष्टृत्वात्। पाण्डवानां त्वमेवाहमित्याह—धनंजय इति। मुनीनां वेदार्थमननशीलानां व्यासो ऽप्यहमित्याह—

व्यास इति । कवीनां क्रान्तदर्शिनां शुको ऽस्मीत्याह—उशना कविरिति । कविशब्दो ऽत्र यौगिको न रूढः ॥ ३७ ॥

दण्डनीतिमौनज्ञानानि मदैश्वर्यत्वेनोपास्यानीत्याह—

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥**

दण्ड इति । दमयतां दुर्मार्गान् सन्मार्गे प्रवर्तयितॄणां संबन्धी दण्डो ऽस्मीत्याह—दण्ड इति । उत्पथप्रवृत्तितो निवृत्तिहेतुत्वात् । जिगीषतां जेतुमिच्छतां संबन्धिनी नीतिरस्मीत्याह—नीतिरिति । जयोपायप्रकाशकत्वात् । गुह्यानां वाङ्नियमनमहमस्मीत्याह—मौनमिति । तदतिरिक्तगोप्याभावात् । ज्ञानवतां तुर्याश्रमप्रवृत्तिहेतुवेदान्तश्रवणादिजनितविज्ञानानां चरमसाक्षात्कारहेतुः सम्यग्ज्ञानं तत्प्रतिफलितप्रत्यक्चैतन्यं वा ऽहमस्मीत्याह—ज्ञानमिति ॥ ३८ ॥

सर्वभूतकारणं न मत्तो ऽन्यदित्याचष्टे—

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

यच्चेति । हे अर्जुन ! यदपि सर्वभूतानां बीजं प्ररोहकारणं तदहमस्मीत्याह—यच्चेति । तत्र हेतुमाह—न तदिति । मया परमेश्वरेण विना चराचरात्मकं भूतजातं यत्स्यादिति मन्यसे तत्सर्वं नास्तीति निश्चितोऽर्थः ॥ ३९ ॥

स्वविभूतीनां परिमितत्वशङ्कां वारयति—

**नान्तो ऽस्ति मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

नान्त इति । हे परंतप ! ममेश्वरस्य दिव्यानां विभूतीनामप्राकृतानाम् अन्तः इयत्तेति परिमितिः परिच्छेदो नास्ति, अनन्तत्वेन साकल्यतो वक्तुमशक्यत्वात् । तर्हि स्वविभूतेः विस्तरः कथं प्रपञ्चित इति तत्राह—एष इति । विभूतेरुद्देशतः एष विस्तरस्तु संक्षिप्य मया प्रोक्तः ॥ ४० ॥

अनुक्ता अपि विभूतीः साकल्येन कथयति—यद्यदिति द्वाभ्याम् ।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोऽंशसंभवम् ॥ ४१ ॥**

यद्यदिति । विभूतिमदैश्वर्ययुक्तं यद्यत्सत्त्वं प्राणिजातमस्ति, श्रीमत्समृद्धिमत्, कान्तिमद्वा यद्यद्वस्तुजातमस्ति, ऊर्जितं बलवदुत्साहोपेतं वा यद्यज्जन्तुवृन्दमस्ति, तत्तद्वस्तुरूपं ममेश्वरस्य तेजोऽंशसंभवमित्यवगच्छ जानीहीत्यर्थः ॥ ४१ ॥

सर्वेषु परिच्छिन्नदृष्टिं विहाय मद्दृष्टिमेव कुर्वित्युपसंहरति—

**अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥ इति ॥**

इति श्रीमद्भगवद्गीतासु० विभूतियोगो नाम दशमो ऽध्यायः ॥

अथ वेति । हे अर्जुन ! अथ वेति पक्षान्तरोक्तिः । बहुनैतेन सावशेषेण ज्ञातेन किं प्रयोजनं स्यात् तव । तर्हि किं कर्तव्यमिति तत्राह—विष्टभ्येति । अविद्यापदात्मकं कृत्स्नं जगदेकांशेनावष्टभ्याहं त्रिपात्परमात्मा वासुदेवः स्थितो ऽस्मि । 'पादो ऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि' इति श्रुतेः । अविद्यापदस्य त्रिपाद्ब्रह्मातिरेकेणाभावात् सर्वं त्रिपाद् ब्रह्मैवास्मीति निश्चयवान् भवेति प्रकरणार्थः । इतिशब्दस्त्वध्यायपरिसमाप्त्यर्थः ॥ ४२ ॥

यदज्ञानादविद्यावज्जृम्भते रज्जुसर्पवत् ।
यज्ज्ञानाद्विलयं याति तत्कैवल्यं तनोतु मे ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां दशमो ऽध्यायः ॥

# एकादशो ऽध्यायः

एकांशेन स्थितो ऽस्मीति यदुक्तं तत्प्रसिद्धये ।
एकादशेन पार्थाय विश्वरूपमदर्शयत् ॥

पूर्वाध्यायान्ते 'विष्टभ्याहमिदं कृत्स्नम्' इत्यादिनोक्त भागवत सोपाधिकभावं श्रुत्वा ऽथ तत्साक्षात्कर्तुमिच्छन् भगवन्तं प्रत्यर्जुन उवाच— मदनुग्रहायेति चतुर्भि ।

अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहो ऽयं विगतो मम ॥ १ ॥**

मदिति । मदनुग्रहाय मय्यनुग्रहार्थं गुह्य गोप्यमपि परमार्थवस्तुप्रतिपादकत्वात् परमं परमात्माभिन्नप्रत्यगात्मानमधिकृत्येदमुपायोपेयभूत मवृत्तमित्यध्यात्मसंज्ञितमाद्यषट्कं यत्त्वयोक्तम् 'अशोच्यान्' इत्यादि वच तेन वचसा 'दृष्ट्वेम स्वजन कृष्ण' इत्यारभ्य 'ते ऽवस्थिता प्रमुखे धार्तराष्ट्रा' इत्यन्तेन यो मामावृतवान् सो ऽय मोहो मम विगत विनष्ट स्वात्मन षड्भावविकारवैकल्योक्ते ॥ १ ॥

सप्तमाध्यायादितत्पदार्थनिर्णय सकलनिष्कलगोचर वचो ऽपि श्रुतमित्याह—

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २॥**

भवाप्ययाविति। कमलस्य पत्रे इव प्रसन्ने अक्षिणी यस्य तव स त्वं हे कमलपत्राक्ष! 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' 'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' इत्यादिना ब्रह्मादिस्तम्बान्तभूतानां भव आविर्भावश्चाप्ययस्तिरोभावश्च, तावेव भवाप्ययौ विस्तरशो न संक्षेपतो मया श्रुतौ। कस्मात्सकाशात्? त्वत्तः सर्वेश्वरादेव। किं च महाऽऽत्मनस्तव भावो माहाऽऽत्म्यमपि चाव्ययमक्षयमकुण्ठितचारित्र्यं श्रुतम्। अपिचशब्दाभ्यां जगदाविर्भावतिरोभावकारणत्वे ऽपि तद्गतदोषास्पृष्टत्वं द्योत्यते। 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः'। 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना', 'न च मां तानि कर्माणि निबध्नन्ति धनंजय', 'समो ऽहं सर्वभूतेषु' इत्यादिना तव सोपाधिकं निरुपाधिकं च रूपं त्वत्तः पुनः पुनः श्रुतमित्यर्थः ॥ २ ॥

मदुक्ते ऽर्थे विश्वासाभावात् कुतस्तद्दिदृक्षेति तत्राह—

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३॥**

एवमिति। विराडादीनामीश्वराणामपीश्वरत्वात् हे परमेश्वर! त्वं यथा येन प्रकारेण 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' 'न मे विदुः सुरगणाः प्रभवं न महर्षयः' इत्यादैवमात्मानं सकलं निष्कलं वा ऽऽत्थ कथयसि मद्गतमोहनिकृन्तनपूर्वकं त्वत्प्रसादलब्धविवेकेन त्वदुक्तं सर्वं यथार्थं

मन्ये । हे पुरुषोत्तम! चतुर्भुजादिरूपवैलक्षण्यतः पारमेश्वरमकुण्ठितक्रिया-ज्ञानेच्छाशक्तिसंपन्नं ते तव सोपाधिकं रूपं द्रष्टुमिच्छामि ॥ ३ ॥

तावकमैश्वरं रूपं मया द्रष्टुं शक्यं चेद्दर्शयेत्याह—

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

मन्यस इति । स्वाविद्यापदतत्कार्याविर्भावतिरोभावहेतुत्वात् हे प्रभो! तावकं वैराजं यद्विश्वरूपं तत् मया अर्जुनेन द्रष्टुं शक्यमिति मन्यसे यदि, योगिन एव योगाः, तेषामधीश्वरत्वात् हे योगेश्वर! तदा त्वं मे स्वात्मानमव्ययं वैराजं भावं दर्शय । यतो ऽहं दिदृक्षुः, अतस्त्वया दर्शयितव्यमिति भावः ॥ ४ ॥

परमदयालुरर्जुनेनैवं प्रार्थितं स्वरूपं दिदर्शयिषुः श्रीभगवानुवाच—पश्येत्यादिभिश्चतुर्भिः ।

श्रीभगवानुवाच—

**पश्य मे पार्थ रूपाणि शतशो ऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

पश्येति । हे पार्थ! मे मम परमेश्वरस्य शतशो ऽथ सहस्रशः अनेकशो रूपाणि पश्य । स्वाविद्यापदव्यापकरूपस्यैकत्वे ऽपि स्वाधिष्ठेय-भिदाऽनुयोगवद्रागाद्रूपाणीति बहुवचनम्। तानि किमेकविधानि? तत्राह—नानेति । नानाविधानि रूपाणि उपाधिवैचित्र्यादनेकप्रकाराणीत्यर्थः । उपाधियोगतः किं तानि प्राकृतानीति तत्राह—दिव्यानीति । स्वाधिष्ठे-

योपाधियोगस्य मिथ्यात्वादप्राकृतानीत्यर्थः । स्वद्रूपाणामप्राकृतत्वे नानावर्णाकृतित्वं कुत इति तत्राह—नानेति । स्वज्ञदृष्ट्या निरुपाधिकरूपस्य नानावर्णाद्यभावे ऽपि स्वाज्ञदृष्ट्या सोपाधिकरूपस्य विराड्भावेन विश्वरूपत्वात् नीलपीतादिनानावर्णाः, तथा नानाविधचेतनाचेतनात्मका आकृतयो येषां रूपाणां तानि नानावर्णाकृतीनि चेति नानावर्णाकृतित्वमुपपद्यत इत्यर्थः ॥ ५ ॥

तत्र यान्यप्राकृतानि रूपाणि मे सन्ति तान्येकदेशेनानुक्रामति—पश्येत्यादिना ।

**पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**

पश्येति । हे भारत! ममेश्वरस्य तनौ द्वादशादित्यान् अष्ट वसून् एकादश रुद्रान् द्वावश्विनौ सप्त मरुतः पश्य । नानाविधानि रूपाणि पश्येति यदुक्तं तदेव विशदयति—बहूनीति । मनुष्यलोके त्वया अन्येन वा केनचिदप्यदृष्टपूर्वाणि बहूनि रूपाण्यवलोकयेत्यर्थः । नानावर्णाकृतित्वं व्यक्तीकरोति—आश्चर्याणीति । पश्यद्भिस्मयास्पदत्वेनाश्चर्याण्यद्भुततमानि मदीयरूपाणि पश्येत्यर्थः ॥ ६ ॥

न केवलमादित्यवस्वाद्येव मद्रूपत्वेन पश्य, किं तु समस्तजगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह—

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

इहेति । हे गुडाकेश! मम देहे इहैकस्मिन्नेव प्रदेशे तिष्ठतीत्येकस्थं चराचरेण सहितत्वात्सचराचरं कृत्स्नमिदं जगदद्यैवेदानीमेव पश्य 'यद्वा जयेम यदि वा नो जयेयुः' इत्यादि यच्चान्यद् द्रष्टुमिच्छसि तदपि पश्येत्यर्थः ॥ ७ ॥

'मन्यसे यदि तच्छक्यम्' इति यदुक्तं तत्र मद्रूपस्य प्राकृतचक्षुषा द्रष्टुमशक्यत्वात् तद्दर्शनक्षमं दिव्यं चक्षुस्ते ददामीत्याह—

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

न त्विति । अनेन प्राकृतेनैव चक्षुषा विश्वरूपधरं मां द्रष्टुं न तु शक्यसे । तर्हि कथं त्वां द्रष्टुं शक्ष्यामीति तत्राह—पश्येति । येन दिव्यचक्षुषा मां द्रष्टुं प्रभवसि, तादृशं मद्दर्शनक्षमं दिव्यं ज्ञानात्मकं चक्षुः ते तुभ्यमहं ददामि । तेन दिव्येन चक्षुषा मे ममैश्वरं योगं युक्तिमघटितघटनाचातुर्यं पश्य ॥ ८ ॥

इमं वृत्तान्तं धृतराष्ट्राय संजय उवाच—एवमिति षड्भिः ।

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

एवमिति । हे राजन् धृतराष्ट्र! 'पश्य मे पार्थ रूपाणि' इत्याद्येवमुक्तप्रकारेणोक्त्वा ततस्तदनन्तरं महांश्चासौ योगस्याघटितघटनासामर्थ्यस्येश्वरत्वादीश्वरश्चेति महायोगेश्वरो हरिः नारायणः पार्थाय परमं सर्वोत्कृष्टमैश्वरं विश्वरूपं दर्शयामास दर्शितवानित्यर्थः ॥ ९ ॥

तदेव रूपं विशदयति—

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**

अनेकेति । अनेकानि वक्त्राणि नयनानि च यस्मिन् विश्वरूपे दृश्यन्ते तदनेकवक्त्रनयनम् । अनेकानि पश्यदाश्चर्यकरत्वात् अद्भुतानि दर्शनानि यस्मिन् तदनेकाद्भुतदर्शनम् । तथा ऽनेकानि दिव्यानि अप्राकृतान्याभरणानि यस्मिन् भान्ति तदनेकदिव्याभरणम् । तथा दिव्यान्यदृष्टपूर्वाण्युद्यतायुधानि शङ्खचक्रगदाशार्ङ्गशूलासिपरशुपरिघादीनि यस्मिन् जाग्रति तद्दिव्यानेकोद्यतायुधं पार्थाय भगवान् दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥

प्रकारान्तरेण पारमेश्वरं रूपं व्यनक्ति—

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

दिव्येति । दिव्यानि माल्यानि तुलसीपुष्पाद्यचितानि अम्बराणि वासांसि च येन ध्रियन्ते तं दिव्यमाल्याम्बरधरम् । दिव्यो गन्धः, सो ऽनुलेपनं यस्य तं दिव्यगन्धानुलेपनम् । सर्वेषामाश्चर्याणामास्पदत्वात् सर्वाश्चर्यमयं देवं स्वप्रकाशतो देदीप्यमानम् । अनन्तमपरिच्छिन्नम् । विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मभूतत्वात् । एवंरूपं भगवन्तमर्जुनो ददर्शेत्यर्थः ॥ ११ ॥

भगवतो विश्वरूपत्वेन विश्वस्य जडत्वेन चाभारूपत्वाद्यदि तस्य भारूपत्वमुच्येत तदा तस्योपमा कीदृशीत्यत आह—

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महाऽऽत्मनः ॥१२॥**

दिवीति । तृतीयस्यां दिव्यन्तरिक्षे सूर्याणां सहस्रं तस्य युगपदेकस्मिन् काले समुत्थितस्य युगपदेककालावच्छेदेनोत्थिता भाः कान्तिर्यदि सदृशी स्यात् । कस्येत्यत आह—तस्येति । महान् त्रिविधपरिच्छेदशून्यश्चासावात्मा चेति महाऽऽत्मा, तस्य महाऽऽत्मनो विश्वरूपस्य भासः सदृशी स्यात् भवेत् । यदिशब्दो विश्वरूपस्य भासो वैशिष्ट्यद्योतकः । स्याच्छब्दो निःसंशयार्थः । युगपदुदितसूर्यसहस्रप्रभापुञ्जापेक्षया भगवत्प्रभैवातिरिच्यत इति भावः ॥ १२ ॥

न केवलमनन्तकोटिसूर्यभारूपं दृष्टवान्, किं तु तदेकदेशे विश्वकलनामनुभूतवानित्याह—

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

तत्रेति । पाण्डवो ऽर्जुनस्तदा विश्वरूपदर्शनसमये देवदेवस्य विश्वरूपस्य भगवतः शरीरे तत्र शरीरैकदेशे तिष्ठतीत्येकस्थमनेकधा देवर्षिमनुष्यादिभेदतः प्रविभक्तं चेतनाचेतनात्मकं कृत्स्नं जगदपश्यत् सम्यगनुभूतवानित्यर्थः ॥ १३ ॥

तदपरोक्षानन्तरं किं कृतवानित्यपेक्षायामाह—

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

तत इति । धनंजयः ततो विश्वरूपदर्शनानन्तरं विस्मयेनाश्चर्येण-विष्टो व्याप्तो भूत्वा हृष्टानि पुलकितानि रोमाणि यस्य सो ऽयं हृष्टरोमा सन्, देवं देदीप्यमानं विष्णुं प्रणम्य भक्तिश्रद्धातिशयेन कृताञ्जलिः संपुटीकृतहस्तो भूत्वा ऽभाषत उक्तवान् ॥ १४ ॥

भगवदनुग्रहात्तद्विश्वरूपं यथा दृष्टं तथा स्वानुभवमाविष्कुर्वन् अर्जुन उवाच—पश्यामीति सप्तभिः ।

अर्जुन उवाच—

**पश्यामि देवांस्तव देव देहे**
**सर्वांस्तथा भूतविशेषसंघान् ।**
**ब्रह्माणमीशं कमलासनस्थ-**
**मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

पश्यामीति । हे देव ! तव विश्वरूपधरस्य देहे देवान् इन्द्रादीन् तथा भूतानामाकाशादीनां तद्विशेषाणां भौतिकानां चेतनाचेतनानां संघान्, तान् भूतविशेषसंघान् तथा सर्वान् वसिष्ठादिमहर्षीन् तथा दिव्यानुरगान् दिवि भवानादिशेषादीन् । देवशब्देन ब्रह्मणो ऽपि गृहीतत्वे ऽपि पृथग्ग्रहणं नेभ्यो वैशिष्ट्यद्योतनार्थम् । ब्रह्माणं चतुराननं देवानामीशं पृथ्वीकमल-मध्यस्थमेरुकर्णिकाऽऽसनस्थत्वात् कमलासनस्थत्वं नाभिकमलासनस्थमिति वा युगपत्पश्यामि ॥ १५ ॥

यदेकदेशे सर्वमिदं दृष्टं तं देवं वर्णयति—

**अनेकबाहूदरवक्त्रनेत्रं**
**पश्यामि त्वा सर्वतो ऽनन्तरूपम् ।**

नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

अनेकेति । हे विश्वरूप! अनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तमनेकबाहूदरवक्त्रनेत्रम् । सर्वतः सर्वत्रान्तो ऽवसानं न विद्यते इत्यनन्तानि रूपाणि यस्य तमनन्तरूपम् । त्वा त्वा पश्यामि । हे विश्वेश्वर! तव रूपस्यादिं मूलं मध्यमन्तमवसानं वा न पुनः पश्यामि । तवेश्वरस्योत्पत्तिस्थितिभङ्गवैकल्येन त्रिविधपरिच्छेदशून्यत्वात् ॥ १६ ॥

पुनः प्रकारान्तरेण प्रत्याययति—

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वा दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

किरीटिनमिति । शिरोभूषणत्वेन प्रसिद्धं किरीटमस्यास्तीति किरीटी, तं किरीटिनम् । शत्रुघातिनी गदा ऽस्य विद्यत इति गदी तं गदिनम् । नक्रे-शादिविक्रमघाति चक्रमस्यास्तीति चक्री, तं चक्रिणम् । तेजोराशिं तत्पुञ्जम् । सर्वतः समन्तात् सच्चिदानन्दरूपिणी दीप्तिर्यस्यास्ति सो ऽयं सर्वतो दीप्तिमान्, तं सर्वतो दीप्तिमन्तम् । तथा दुर्निरीक्ष्यं त्वत्प्रसादं विना द्रष्टुम-शक्यत्वात् । समन्तात्समन्ततो दीप्तानलार्कयो द्युतिरिव द्युतिर्यस्य तव स त्वं दीप्तानलार्कद्युति, तम् । प्रत्यक्षादिप्रमाणैः प्रमातुमशक्यत्वादप्रमेयं त्वा त्वा पश्यामि उपलभ इत्यर्थः ॥ १७ ॥

सकले भगवद्रूपे प्रश्ने सत्यप्रकृतमक्षरमित्यादिवचनमित्याशङ्क्य तद्धी-योगैश्वर्यदर्शनस्य निष्फलत्वपर्यवसायित्वात् नाप्रकृतदोषावकाश इत्याह—

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

त्वमिति । कालत्रये ऽपि न क्षरतीत्यक्षरम् । सर्वस्य क्षरत्वेन विभानात् अक्षरत्वं कुत इति तत्राह—परममिति । स्वाधिष्ठेयक्षरजातात् परत्वेन विभानादक्षरत्वमुपपद्यते । परमाक्षरस्य स्येतरवस्तुशून्यत्वेन वेदितव्यता कुत इति तत्राह—वेदितव्यमिति । मुमुक्षुकोटिप्रत्यगभेदेन वेदनीयत्वात् तादृशं परमाक्षरं मुमुक्षुकोटिवेदनीयं त्वमेवासि । परमाक्षरस्य विश्वाश्रयताऽनुपपत्तिमाशङ्कय स्वज्ञदृष्ट्या तदभावे ऽपि स्वाज्ञदृष्ट्या तत्संभवात् । विश्वाश्रयो ऽपि त्वमेवेत्याह—निधानमिति । सर्वस्यास्य विश्वस्य परं प्रकृष्टं निधीयते ऽस्मिन् सर्वमिति निधानमधिष्ठानं त्वमेवासीत्यर्थः । नश्वरविश्वाधिष्ठानत्वे तथात्वं स्यादिति तत्राह—अव्यय इति । व्यावृत्तानुवृत्तयोः योगाभावेन स्वतः परतो वा न व्येतीत्यव्ययः त्वमसि । यत एवमतः शश्वद्भवः शाश्वतो नित्यो निष्ठाद्वयात्मको धर्मः, तस्य गोप्ता पालयिता ऽपि त्वमसीत्यर्थः । धर्मस्येदानींतनत्वेन तद्गोप्तृत्वे तथात्वं स्यादिति तत्राह—सनातन इति । धर्मस्यापि सनातनप्रभवत्वेन सनातनत्वात् सनातनश्चिरंतनः पुरुषस्त्वमेवासीति मे मम मतो निश्चय इत्यर्थः ॥१८॥

भगवन्तं निष्कलत्वेन स्तुत्वा पुनः सकलत्वेन विशिनष्टि—

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम्।

**पश्यामि त्वा दीप्तहुताशवक्त्रं**
**स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

अनादीति । आदिमध्यान्ताः संभवस्थितिप्रलया यस्य न विद्यन्ते तमनादिमध्यान्तम् । न विद्यते अन्तः परिमितिः यस्यानवच्छिन्नो वीर्यस्य पराक्रमस्याघटितघटनाचातुर्यस्य वा तमनन्तवीर्यम् । अनन्ता बाहवो यस्य तमनन्तबाहुम् । शशिसूर्यौ नेत्रे यस्य तं चन्द्रादित्यनयनम् । दीप्तश्चासौ हुताशश्च, स एव वक्त्रं यस्य तं दीप्तहुताशवक्त्रम् । स्वस्यापरिमिततेजसा परिदृश्यमानमिदं विश्वं तपन्तं संतापयन्तं त्वा त्वां पश्यामि ॥ १९ ॥

प्रकृतभगवद्रूपस्यापरिच्छिन्नतां प्रपञ्चयति—

**द्यावापृथिव्योरिदमन्तरं हि**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं**
**लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

द्यावापृथिव्योरिति । हे महात्मन् अपरिच्छिन्नस्वरूप । द्यावापृथिव्योः द्युभूलोकयोः इदमन्तरमन्तरिक्षलोक एकेन त्वया विराड्रूपेण व्याप्तम् । सर्वा दिशो विदिशश्च व्याप्ताः । लोकानां त्रयं तवेदमत्यद्भुतमुग्रं रूपं दृष्ट्वा प्रकर्षेण व्यथितं विशेषतो भीतं चलितं वा पश्यामीति पूर्वेणान्वयः ॥ २० ॥

'यद्वा जयेम' इत्यादिस्वसंशयमुन्मूलयन्तं भगवन्तं प्रत्याह—

**अमी हि त्वा सुरसंघा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति ।**

**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥**

अमी इति । उभयोर्वाहिन्यो स्थिता युध्यमाना अमी भूभारापनयनायावतीर्णा सुराणा सघा वस्वादयो मनुष्याकृति स्वीकृत्य भीता सन्त त्वा त्वा विशन्ति । यद्वा असुरसघा भूभारभूता दुर्योधनादय त्वा विशन्तो दृश्यन्ते । तत्र केचित् भीता दूरादेव स्थित्वा प्राञ्जल्य सन्त त्वा गृणन्ति रक्ष रक्षेत्युच्चैर्घोषयन्ति । केचिद्युद्धे प्रत्युपस्थिते पलायि तुमशक्ता सन्त उत्पातादिनिमित्तान्युपलभ्य वेपमाना भूत्वा पश्यन्ति । केचित् महर्षीणा सिद्धाना च सघा स्वस्त्यस्तु जगत इत्युक्त्वा पुष्कलाभि रभिदावाक्यगोचराभि स्तुतिभि स्तुवन्ति ॥ २१ ॥

रुद्रादयो ऽपि त्वद्रूप विस्मिता पश्यन्तीत्याह—

**रुद्रादित्या वसवो ये च साध्या**
**विश्वे ऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसंघा**
**वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

रुद्रेति । एकादश रुद्रा द्वादशादित्या अष्टौ वसवश्च साध्या नाम देवा य च विश्वेदेवा अश्विनौ च मरुत सप्त ऊष्माण पिबन्तीति ऊष्मपा पितर, 'ऊष्मभागा हि पितर' इति श्रुते । गन्धर्वा हाहाहूहूप्रभृतय यक्षा कुबेरप्रभृतय, असुरा विरोचनप्रभृतय, भूभारभूता दुर्योधनादयश्च सिद्धा कपिलादयश्च तेषा सघा सर्वे एव विस्मिता सन्त त्वा वीक्षन्ते पश्यन्ति ॥ २२ ॥

भगवद्रूपदर्शनतो लोकत्रयं व्यथितमित्युपसंहरति—

**रूपं महत्ते बहुवक्त्रनेत्रं**
**महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं**
**दृष्ट्वा लोकाः प्रव्यथितास्तथा ऽहम् ॥ २३ ॥**

रूपमिति । हे महाबाहो ! ते तव बहूनि वक्त्राणि नेत्राणि च यस्मिन् तत् बहुवक्त्रनेत्रम् । बहवो बाहव ऊरव पादाश्च यस्मिन् तत् बहुबाहूरुपादम् । बहून्युदराणि यस्मिन् तत् बहूदरम् । बह्वीभि दंष्ट्राभि कराल विकृत महदतिप्रमाण रूप दृष्ट्वा यथा लोका प्रव्यथिता तथा ऽहमपीत्यर्थ ॥२३॥

स्वभीतो हेत्वन्तरमाह—

**नभःस्पृशं दीप्तमनेकवर्णं**
**व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा**
**धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥**

नभ इति । हे विष्णो ! नभो द्युलोक स्पृशतीति नभःस्पृशम् । दीप्त प्रज्वलितम् । अनेकवर्णा भयकरा नानारूपा यस्मिन् तमनेकवर्णम् । व्यात्तानि विवृतान्याननानि यस्मिन् त व्यात्ताननम् । दीप्तानि प्रज्वलितानि विशालानि च नेत्राणि यस्मिन् त दीप्तविशालनेत्रम् । एवरूप त्वा दृष्ट्वा भीत्या प्रव्यथितो ऽन्तरात्मा मनो यस्य सो ऽह प्रव्यथितान्तरात्मा धृतिं धैर्य शम तुष्टिं च न विन्दामि नोपलभ इत्यर्थ ॥ २४ ॥

दृश्यमाने ऽपि भगवद्रूपे धृतिसुखाभावे हेत्वन्तरमाह—

**दंष्ट्राकरालानि च ते मुखानि**
**दृष्ट्वैव कालानलसंनिभानि ।**
**दिशो न जाने न लभे च शर्म**
**प्रसीद देवेश जगन्निवास ॥ २५ ॥**

दष्ट्रेति । हे देवेश ! ते तव दंष्ट्राभि करालानि विकृतानि प्रलयकाले लोकदाहकत्वेन प्रसिद्ध कालानलो ऽग्नि , तत्सदृशानि मुखानि दृष्ट्वैव पूर्वापरादिदिशो विदिशश्च न जाने । किं च मन प्रसाद लक्षण शर्म सुख न लभे । यत एवमतो जगन्निवास ! प्रसीद प्रसन्नो भव ॥ २५ ॥

अस्माक जय परेषा पराजयश्च विस्पष्टमवलोकित इत्याह—अमी इति पञ्चभि ।

**अमी च त्वा धृतराष्ट्रस्य पुत्त्राः**
**सर्वे सहैवावनिपालसंघैः ।**
**भीष्मो द्रोणः सूतपुत्त्रस्तथा ऽसौ**
**सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

अमी इति । अवनिं पालयन्तीत्यवनिपाला जयद्रथादय , तेषा सघै सहामी च धृतराष्ट्रस्य पुत्त्रा दुर्योधनादय सर्वे तथा भीष्मो द्रोणश्च सूतपुत्त्र कर्णश्च शिखण्डिधृष्टद्युम्नप्रभृतिभि अस्मदीयैं सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वय ॥ २६ ॥

भगवद्रूपस्य भयङ्करत्वे हेत्वन्तरमाह—

**वक्त्राणि ते त्वरमाणा विशन्ति**
**दंष्ट्राकरालानि भयानकानि।**
**केचिद्विलग्ना दशनान्तरेषु**
**संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**

वक्त्राणीति। ये पूर्वोक्ता धार्तराष्ट्रादयः ते सर्वे दंष्ट्राकरालानि विकृतानि भयानकानि भयंकराणि ते तव वक्त्राणि त्वरमाणाः सन्तो विशन्ति। तव वक्त्राणि प्रविष्टानां मध्ये केचिद्दशनान्तरेषु विलग्नाः सन्तः चूर्णितैरुत्तमाङ्गैः शिरोभिः संदृश्यन्ते। दन्तपङ्क्तिसंलग्नमांसखण्डवत् समुपलभ्यन्त इत्यर्थः ॥ २७ ॥

भगवद्वक्त्रप्रवेशमेव दृष्टान्तेन स्पष्टयति—

**यथा नदीनां बहवो ऽम्बुवेगाः**
**समुद्रमेवाभिमुखा द्रवन्ति।**
**तथा तवामी नरलोकवीरा**
**विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥**

यथेति। यथा अनेकमार्गप्रवृत्तानां गङ्गाऽऽदिनदीनां बहवो ऽम्बुवेगाः प्रवाहाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति प्रविशन्ति, तथा ऽमी नरलोकवीरा भीष्मादयः अभितो विज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

नदीदृष्टान्तेनाबुद्धिपूर्वकप्रवेशमुक्त्वा पतङ्गदृष्टान्तेन बुद्धिपूर्वक-प्रवेशमाचष्टे—

**यथा प्रदीप्तं ज्वलनं पतङ्गा**
**विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोका-**
**स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

यथेति । पतङ्गाः शलभाः समृद्धः उद्धतो वेगो गतिः येषां ते समृद्धवेगाः सन्तः स्वनाशाय प्रदीप्तं ज्वलनमग्निं बुद्धिपूर्वकं यथा विशन्ति, तथैव बुद्धिपूर्वकं स्वनाशाय लोकाः प्राणिनः समृद्धवेगाः सन्तः तवापि वक्त्राणि विशन्ति । अपिशब्दस्वारस्यात्कार्यभूतानि स्वकारणा वशेषाणि भवन्तीति द्योत्यते ॥ २९ ॥

ततः किमित्यत आह—

**लेलिह्यसे ग्रसमानः समन्ता-**
**ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं**
**भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥**

लेलिह्यस इति । हे विष्णो व्यापनशील ! समन्तात् ज्वलद्भि-र्वदनैः अग्रेण कार्यकरणसंघातेन सह विशिष्टाः समग्राः, तान् लोकान् भीष्मादीन् ग्रसमानो ऽन्तःप्रवेशयन्सन् त्वं लेलिह्यसे आस्वादयसे । तव भासो दीप्तयः उग्राः क्रूराः सत्यः तेजोभिः विस्फुरणैः समग्रं सकार्यं जगदापूर्य प्रतपन्ति सतापं कुर्वन्तीत्यर्थः ॥ ३० ॥

भगवद्रूपस्यार्जुनेन ज्ञातपूर्वत्वात् तस्य तज्जिज्ञासा कथमुदितेत्याशङ्क्य भगवदाथाऽऽत्म्यापरिज्ञानात् जिज्ञासोचितेत्याह—

आख्याहि मे को भवानुग्ररूपो
नमो ऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

आख्याहीति । उग्ररूपः क्रूरकलेवरो भवान् कः ! त्वद्रूपस्यैवमदृष्टपूर्वत्वात् मे मह्यं भवत्स्वरूपमाख्याहि कृपयोपदिश । स्वरूपोपदेशात् पुरा तत्प्रतिपित्सुना प्रह्वीभावः कर्तव्य इति सूचयति—नमो ऽस्त्विति । देवानां ब्रह्मादीनामपि प्रवरत्वात् हे देववर ! ते तुभ्यं नमो ऽस्तु । प्रसीद प्रसन्नो भवेत्यर्थः । जानन्नपि किं मां ज्ञातुमिच्छसीति तत्राह—न हीति । हि यस्मात्तवेश्वरस्य प्रवृत्तिं यदर्थं प्रवृत्तो ऽसीति न प्रजानामि तस्मादादौ भवमाद्यं भवन्तमहं विशेषेण यथावज्ज्ञातुमिच्छामि । केवलकृपया तावकं भावं प्रकटयेत्यर्थ. ॥ ३१ ॥

एवमर्जुनेन प्रार्थितः स्वाभिप्रायं श्रीभगवानुवाच—कालो ऽस्मीति त्रिभिः ।

श्रीभगवानुवाच—

कालो ऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋते ऽपि त्वा न भविष्यन्ति सर्वे
ये ऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

काल इति। लोकाना क्षय करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धि गत काल अकुण्ठितक्रियाशक्त्युपहित परमेश्वरो ऽस्मि। यदर्थं प्रवृत्तो ऽसीति तत्राह—समाहर्तुमिति। इहास्मिन् लोके लोकान् समाहर्तुं सहार कर्तुं प्रवृत्त उद्युक्तो ऽस्मि। लोकसहारार्थं त्वयि प्रवृत्ते ऽपि मत्प्रवृत्ति विना भीष्मादीना सहर्तुमशक्यत्वात् त्व प्रवृत्तिनिर्वर्थवतीत्या शङ्क्याह—ऋते ऽपीति। प्रत्यनीकेषु प्रतिपक्षेषु ये ऽवस्थिता भीष्म द्रोणादय, ते सर्वे त्वामृते विना ऽपि न भविष्यन्ति न जीविष्यन्ति, मत्प्रातिकूल्यात् तवौदासीन्यमकिंचित्करमित्यर्थ ॥ ३२ ॥

भीष्मादयो मयैव हता अपि निमित्तमात्र त्व भवेत्याह—

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व**
**जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम्।**
**मयैवैते निहताः पूर्वमेव**
**निमित्तमात्रं भव सव्यसाचिन्॥ ३३॥**

तस्मादिति। यस्मान्मत्प्रातिकूल्येन त्वत्प्रवृत्ति विना ऽपि भीष्मादयो मृतप्राया भवन्ति, तस्मात् युद्धाय त्वमुत्तिष्ठ युद्धोन्मुखीभवेत्यर्थ। तेषा त्वयैव निर्जितत्वात् तद्धनने को मे लाभ स्यादिति तत्राह—यश इति। भीष्मादीना देवैरपि दुर्जयत्वात् तादृशा अपि ते अर्जुनेन निर्जिता इति यशो लभस्व। चिरकालानुष्ठितपुण्यैर्हि यश प्राप्यते। राज्यलाभ विना कवलयशोलाभन किं मे स्यादिति तत्राह—भुङ्क्ष्वेति। शत्रून् दुर्योधनप्रभृतीन् जित्वा निष्कण्टक यथा भवति तथा समृद्ध राज्य भुङ्क्ष्व। भीष्मादिष्वतिरथेषु सत्सु कुतो मे जयाशा स्यादिति तत्राह—निहता इति। एते तव शत्रवो भीष्मादयस्त्वदीययुद्धप्रवृत्ते पुरैव मयैव कालात्मना

प्राणैर्वियोजिता इत्यर्थ । त्वयैव निहता मया हन्तु नोचिता इति तत्राह— निमित्तेति । दक्षिणपाणिनेव सव्येनापि पाणिना बाणक्षेपणनिपुणत्वात् हे सव्यसाचिन्। मयैव ते निहता अपि तद्धनने निमित्तमात्र भव ॥३३॥

'यद्वा जयेम यदि वा नो जयेयु ' इत्यादिशङ्का शातयति—

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथा ऽन्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

द्रोणमिति । येषु योधेषु तत्त्वाशङ्का जाता जेष्यामो न वेति तामाशङ्कामुन्मूलयति भगवान्। तत्र द्रोणो हि ते धनुर्वेदाचार्यो दिव्यास्त्रसपन्न । स्वच्छन्दमृत्यु भीष्मो ऽपि तथा परशुरामेण द्वद्वयुद्ध प्राप्तो ऽपि न च तेन पराजितो भवति । यत्पित्रा 'यो भूमौ मत्पुत्रशिर पातयिष्यति तच्छिर पततु' इति तप कृत सो ऽय जयद्रथो ऽपि तादृश । शक्रदत्तामोघशक्तिसपन्न सूर्यपुत्र कर्णो ऽपि तादृश । तथा ऽन्ये योध वीरा युद्धोत्सुका । ते सर्वे कालात्मना मया हता । यत एवमत तान् जहि । मा व्यथिष्ठा तेभ्यो भय मा कार्षी । नि शङ्क युध्यस्व । रणे सपत्नान् दुर्योधनप्रभृतीन् जेतासि ॥ ३४ ॥

कृष्णार्जुनवृत्तान्त धृतराष्ट्र प्रति सजय उवाच—

सजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी।

**नमस्कृत्वा भूय एवाह कृष्णं**
**सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥**

एतदिति । केशवस्येतत्पूर्वश्लोकत्रयात्मकं वचनं श्रुत्वा वेपमानः किरीटी कृताञ्जलिः सन् श्रीकृष्णं नमस्कृत्वा हर्षशोकोत्थितेनाश्रुपूर्णलोचनाञ्चितेनास्पष्टशब्दोच्चारणलक्षणेन गद्गदेन सह वर्तत इति सगद्गदं यथा भवति तथा भीतभीतः पुनः पुनर्भयाविष्टचेताः सन् भूयो ऽपि प्रणम्य वक्ष्यमाणं वचनमाह । निमित्तीकृत्यार्जुनं भगवता द्रोणादिषु चतुर्ष्वपराजितेषु पराजितेषु सत्सु दुर्योधनस्यापि नाशमाशङ्क्य धृतराष्ट्रः तयोः संधिं करिष्यतीति संजयाभिप्रायः । भगवतः सत्यसंकल्पत्वेन तदन्यथा कर्तुमशक्यत्वात् धृतराष्ट्रः तद्वचः कथं श्रद्दध्यादिति भाव. ॥ ३५ ॥

भगवन्तं प्रत्यर्जुनः किं तद्गद्गदवचनमुक्तवानित्यपेक्षायाम् अर्जुन उवाचेत्यर्जुनवाक्यमनुकामति—स्थाने इत्येकादशभिः ।

अर्जुन उवाच—

**स्थाने हृषीकेश तव प्रकीर्त्या**
**जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति**
**सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥**

स्थान इति । स्थान इत्यव्ययम् । युक्तमित्यर्थः । किं तद्युक्तम् ? हे हृषीकेश ! तव प्रकीर्त्या भक्तवत्सलो भगवानिति त्वन्माहात्म्यसंकीर्तनेन न केवलमहमेव हृष्यामि, किं तु जगत्सर्वं प्रहृष्यतीति यत्तत् स्थाने युक्तम् ।

किं च सर्वेश्वरः सर्वात्मा सर्वभूतसुहृदित्यहमिव जगदप्यनुरज्यत इति यत्तदपि स्थाने युक्तम्। जगत्प्रहृष्यत्यनुरज्यत इत्युक्त्या रक्षसां जगदन्तःपातित्वेन भगवति हर्षानुरागौ स्यातामित्यत आह—द्रवन्तीति। रक्षांसि भीतानि सन्ति दिशो यथेच्छं पलायन्ते। अस्मद्दौरात्म्योत्पाटनेनास्मान् कृतार्थीकर्तुं भगवदाविर्भाव इत्यज्ञानात् तत्पलायनं यत्तदपि युक्तमेव। योगव्रततपोदानमन्त्रतन्त्रादिसिद्धानां संघाः विशुद्धचित्तत्वात् नमस्यन्तीति यत्तदपि युक्तमेव, न चित्रमित्यर्थः ॥ ३६ ॥

उक्ते ऽर्थे हेत्वन्तरमाह—

**कस्माच्च ते न नमेरन्महाऽऽत्मन्**
**गरीयसे ब्रह्मणो ऽप्यादिकर्त्रे।**
**अनन्त देवेश जगन्निवास**
**त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

कस्माच्चेति। महानक्षुद्र आत्मा ऽन्तःकरणमस्येति हे महाऽऽत्मन्! यस्यान्त इयत्त्वेति परिच्छेदो न विद्यते स त्वमनन्त, त्रिविधपरिच्छेदशून्यत्वात् हे अनन्त! ब्रह्मादिसकलदेवानामपि नियन्तृत्वात् हे देवदेव! जगतामन्तर्यामित्वेन तदधिष्ठानत्वेन वा स्थितत्वात् हे जगन्निवास! तव महाऽऽत्मत्वमपरिच्छिन्नत्वं सर्वनियन्तृत्वं सर्वाश्रयत्वं च सर्वनमस्कारादियोग्यत्वे कारणम्। यत सर्वस्माद्गरीयसे गुरुतराय विराड्भावमापन्नस्य ब्रह्मण चतुराननस्याप्यादिकर्त्रे मूलकारणभूताय च तुभ्यं कस्माद्धेतो ते सर्वे प्राणिनो न नमेरन् नमस्कारं न कुर्युः? अतस्त्वमेव हर्षादीनां नमस्कारस्य चास्पदमित्यर्थः। सर्वास्पदत्वे ऽपि कालत्रये स्वरूपान्न क्षरतीति

व्युत्पत्त्या यद्वेदान्ते श्रूयते तदक्षरं ब्रह्म त्वमेव । 'एतद्ध्येवाक्षरं ब्रह्म' इति श्रुतेः । 'यदक्षरं वेदविदो वदन्ति' तर्हि किं सदसदात्मकम्? नेत्याह— तत्परमिति । चक्षुरादिविषयो घटादिकं सत्, तद्विपरीतमसत्, परमाक्षरातिरेकेण सदसतोरभावात् सदसच्च तदेवेत्युपपद्यते । परमार्थतस्तु सदसतोः परत्वेन विभानात् सदसत्परं तदेव त्वमित्यर्थः । 'अन्यदेव तद्विदितादथो अविदितादधि' इति श्रुतेः ॥ ३७ ॥

महाऽऽत्मत्वादिभिर्नवभिर्हेतुभिः सर्वनमस्कार्यतामुक्त्वा संप्रति जगत्स्रष्ट्रादिकर्तृत्वेनापि तदेव द्रढयति—

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

त्वमिति । ब्रह्मादिदेवानामप्यादित्वात् आदिदेवस्त्वमेव; जीवरूपेण पुरीतति शयनात् तन्नियामकरूपेण तत्साक्षिरूपेण वा पुरुषोऽपि त्वमेव । जीवेशादिविभागात् पुराऽपि नवत्वेन प्रसिद्धत्वात् पुराणश्चिरंतनोऽपि त्वमेव । अवान्तरप्रलयादावस्य चेतनाचेतनात्मकविश्वस्य परं प्रकृष्टं निधानं लयकारणमपि त्वमेव । त्वमेदेन स्वाभेदेन वा भासमानस्य वेद्यजातस्य वेत्ताऽपि त्वमेव । सर्वज्ञत्वात् प्रत्यगभेदेन वेदनार्हतया वेदान्तगोचरो वेद्यं वस्त्वपि त्वमेवासि । मुमुक्षुप्राप्यत्वेन प्रसिद्धं परं प्रकृष्टं वैष्णवं धाम त्वमेवासि । हे अनन्तरूप! त्वयैकेन समस्तं विश्वं ततमात्मत्वेन कवलितमित्यर्थः ॥ ३८ ॥

पूर्वोक्तैः सप्तभिर्हेतुभिः सार्वात्म्यं प्रतिपाद्य तत्रैव हेत्वन्तरमाह—

**वायुर्यमो ऽग्निर्वरुणः शशाङ्कः**
**प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्ते ऽस्तु सहस्रकृत्वः**
**पुनश्च भूयो ऽपि नमो नमस्ते ॥ ३९ ॥**

वायुरिति । वायुः सर्वप्राणिजीवनभूतत्वात्त्वमसि । यमः स्वावाप्तिप्रतिबन्धिपापशोधकत्वात् त्वमेवासि । त्वमग्निः पुरुषार्थप्रापकत्वात् । त्वं वरुणो जगज्जीवनहेतुत्वात् । त्वं शशाङ्कः प्राणिसंतापहारित्वात् । त्वं प्रजापतिः काश्यपादिरूपेण जगत्स्रष्टृत्वात् । प्रपितामहो ऽपि त्वमेव पितामहश्चतुराननः, तस्यापि जनकत्वात् । एवं सर्वात्मकत्वेन भगवन्तमपरोक्षीकृत्य स्वानन्दपरवशः सन् नमस्करोति—नम इति । सहस्रकृत्वः ते तुभ्यं नमो नमो ऽस्तु । पुनश्च भूयो ऽपि नमो नमस्त इति श्रद्धाभक्त्यतिशयख्यापनार्थम् ॥ ३९ ॥

प्रकारान्तरेण भगवद्भावमनुभूय स्वाभिमुखीकरणाय प्रह्वीभावं करोति—

**नमः पुरस्तादथ पृष्ठतस्ते**
**नमो ऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं**
**सर्वं समाप्नोषि ततो ऽसि सर्वः ॥ ४० ॥**

नम इति । पुरस्तात्पूर्वस्या दिशि ते तुभ्यं नमो ऽस्तु । अथ पृष्ठतो ऽपि हे सर्व सर्वात्मन् ! सर्वत एव सकलदिक्षु विद्यमानाय ते तुभ्यं

नमो ऽस्तु । अनन्त वीर्यममितो विक्रमश्च यस्य स त्वमनन्तवीर्यामित विक्रमो ऽसि । वीर्यविक्रमशब्दयोरेकार्थत्वेन न पुनरुक्ति शङ्कनीया, अर्थभेद-सम्भवात् । यथा कश्चिल्लोके वीर्यवान् शक्तिमानपि स्वरिपुविषये न पराक्रमते मन्दपराक्रमत्वात् । कश्चित्पराक्रमवानपि स्वरिपुहननशक्यभावान्निर्वीर्यो भवति । यत एवमेकरूपेण सर्वं समस्त जगत्समाप्नोषि ततस्त्वमेव सर्वो ऽसि । त्वदतिरिक्त भूत भवद्भविष्यद्वा वस्तुजात न किंचिदस्तीत्यभिप्राय ॥ ४० ॥

भगवन्माहाऽऽत्म्यापरिज्ञानजनित स्वापराध क्षमापयति—सखेति द्वाभ्याम् ।

**सखेति मत्वा प्रसभं यदुक्तं**
**हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं**
**मया प्रमादात्प्रणयेन वा ऽपि ॥ ४१ ॥**

सखेति । सखा समानवयस्क त्वमसीति मत्वा प्रसभ हठात् तवेद विश्वरूप महिमानमकुण्ठितक्रियाज्ञानेच्छाशक्तिवैभव चाजानता ऽज्ञानिना मूढेन मया प्रमादात् विक्षिप्तचेतोनिमित्तात् प्रणयेन स्नेहपरवशतो विस्रम्भेणापि वा हे कृष्ण हे यादव हे सखेति यदुक्त तत्क्षामय इत्युत्तरेणा न्वय ॥ ४१ ॥

विहारादो यन्मयोक्त तदपि सोढव्यमित्याह—

**यच्चावहासार्थमसत्कृतो ऽसि**
**विहारशय्याऽऽसनभोजनेषु ।**
**एको ऽथ वा ऽप्यच्युत तत्समक्षं**
**तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

यच्चेति । भिदालेशमप्यसहन्सचासामान्यस्वरूपतो जात्यपि न च्यवत इति हे अच्युत! मातृवत्योरिव क्रीडा केलिः विहारः एकस्मिन् तल्पे शय्या द्वयोरेकासनं सहभोजनं तेषु विहारशय्याऽऽसनभोजनेषु अपहासः परिहासः तदर्थं तत्प्रयोजनाय मया असत्कृतो ऽवमानितो ऽसीति यद्रहस्येकः एकाकी सन् असत्कृतो ऽसीति च यत् । अथ वा, तत्समक्षं तेषा परिहासकारिणां सखीनां समक्षं पुरतस्त्वमसकृदसत्कृतो ऽसीति यच्चास्ति, तज्जापराधजालं सोढव्यमिति प्रत्यक्षादिप्रमाणशतैरप्यचिन्त्यविभवत्वादप्रमेयं त्वामहं क्षामये, क्षमानिधित्वात् भगवतो मत्कृतापराधपरंपरा सोढव्येति विज्ञापनं करोमीत्यर्थः ॥ ४२ ॥

मदपराधः सोढव्य इत्युक्त्वा ऽथ मदपराधो न गणनीयः, गणितो ऽपि सोढव्य एवेत्याह—

पिता ऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समो ऽस्त्यभ्यधिकः कुतो ऽन्यो
लोकत्रये ऽप्यप्रतिमप्रभाव ॥ ४३ ॥

पितेति । यत्प्रभावस्य प्रतिमोपमा न विद्यत इति हे अप्रतिमप्रभाव ! चेतनाचेतनात्मकलोकस्य पिता जनयिता ऽसि । न केवलं त्वमस्य जगतः पिता, किं तु सर्वैरपि पूजनीयचरणत्वात् पूज्यो गुरु गरीयान् गुरोरपि गुरुत्वात् गुरुतर । कथमेवमवगम्यत इति तत्राह—न त्वदिति । लोकत्रयशब्द स्वाविद्याविजृम्भितानन्तकोटिब्रह्माण्डानामुपलक्षक । तत्रापि त्वत्तुल्यो ऽन्यो नास्ति । न चेश्वरद्वयं श्रुति सोढुं पारयति । यत एवं

स्वत्समस्य मृग्यत्वात् त्वत्तो ऽभ्यधिकः कुतो मे लभ्यते? अतस्ते गुरुतरत्वं युक्तमित्यर्थः ॥ ४३ ॥

यतः पित्रादिः पुत्रादिकृतमपराधं सहते प्राकृतो ऽपि, अतस्त्वम-प्राकृतपितृत्वादनन्तापराधिनमपि मामनुगृह्णीष्वेत्याह—

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

तस्मादिति । यस्मादेवंप्रभावो ऽसि, तस्मादीशमीड्यं त्वां प्रणम्य प्रकर्षेण दण्डवत् कायं प्रणिधाय यथा पुनः पुत्रस्यापराधं पिता सख्यु-रपराधं सखा प्रियाया अपराधं प्रियः क्षमते, तथा त्वमपि मदपराधसहनं हे देव! सोढुमर्हसीति त्वामहं प्रसादये, प्रसीदेत्यर्थः ॥ ४४ ॥

एवं भगवन्तं प्रसाद्य विश्वरूपोपसंहारं कुर्विति प्रार्थयते—

अदृष्टपूर्वं हृषितो ऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

अदृष्टेति । हे देवेश! कदाचिदपि मया मदन्यैर्वा दृष्टपूर्वं न भवतीत्यदृष्टपूर्वं तवेदं विश्वरूपं दृष्ट्वा हृषितः तुष्टो ऽस्मि । तवैतद्विकृत-

रूपदर्शनजन्यभयेन च मे मम मनः प्रव्यथितं विक्षिप्तम् । मद्विक्षेप-प्रशान्तये हे जगन्निवास! तदेव तावकं पूर्वरूपं मे दर्शय । इतः त्वद्वि-श्वरूपं द्रष्टुं न शक्नोमि, क्षिप्रं प्रसीद ॥ ४५ ॥

किं तन्मे रूपमित्यपेक्षायामाह —

**किरीटिनं गदिनं चक्रहस्त-**
**मिच्छामि त्वा द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन**
**सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

किरीटिनमिति । हे सहस्रबाहो! विश्वरूपधरत्वात् हे विश्वमूर्ते! किरीटिनं गदिनं चक्रं हस्ते यस्य तं त्वा त्वामहं द्रष्टुमिच्छामि । यथा पुरा यत्ते रूपं मया दृष्टं तथा तेनैव रूपेण चतुर्भुजेन वसुदेवपुत्ररूपेण भव आविर्भव । मत्प्रत्ययहेतुं विश्वरूपमुपसंहृत्य मद्भागधेयभूतयदूत्तमरूपो भवेत्यर्थः । भवेति प्रार्थनातः पूर्वमेव भगवन्तं दृष्टवानित्यवगम्यते । विश्व-रूपदर्शने किरीटिनं गदिनं चक्रिणमित्युक्तिरनेककिरीटाद्यभिप्रायेण । यत एवमतो न पुनरुक्तिः ॥ ४६ ॥

अर्जुनप्रत्ययहेतुं विश्वरूपमुपसंहृत्य तद्दर्शनतो भीतमर्जुनं प्रियवचनै-राश्वासयन् श्रीभगवानुवाच—मयेति त्रिभिः ।

श्रीभगवानुवाच—

**मया प्रसन्नेन तवार्जुनेदं**
**रूपं परं दर्शितमात्मयोगात् ।**

**तेजोमयं विश्वमनन्तमाद्यं**
**यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥**

मयेति । हे अर्जुन ! त्वदनुग्रहार्थं प्रसन्नेन मया आत्मयोगादैश्वर्यसामर्थ्यात् त्वदन्येन न दृष्टपूर्वम्, तेज पुञ्जत्वात्तेजोमयम्, विश्वरूपत्वाद्विश्वम्, अव्ययत्वादनन्तम्, आदावेव सिद्धत्वादाद्यम्, अविद्यातत्कार्यात्पर यन्मे रूप तव दर्शित तन्मद्रूपदर्शनेन कृतार्थो भवसीत्यर्थ ॥ ४७ ॥

विश्वरूपसदर्शनेनार्जुनस्य कृतार्थता व्यक्तीकरोति—

**न वेदयज्ञाध्ययनैर्न दानै-**
**र्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके**
**द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

न वेदेति । कुरूणा प्रवरा पाण्डवा, तेषामर्जुनस्य वीर्योद्रेकात् हे कुरुप्रवीर ! नृणा मनुष्याणा लोके त्वदन्यन मदनुग्रहहीनेन द्रष्टुम् एवरूपो विश्वरूपधर परमेश्वरो ऽह न शक्य । मदन्येनापि साधनपौष्कल्यात् द्रष्टु शक्यो ऽसीति तत्राह—नेति । वेदाध्ययनातिरेकेण यज्ञाध्ययनाभावात् यज्ञाध्ययनशब्देन यज्ञविद्या कल्पसूत्रादयो लक्ष्यन्ते । वेदाना यज्ञविद्याना चाध्ययनै द्रष्टु न शक्य । न च सर्वस्वदानै । न चाग्निहोत्रादिक्रियाभि । नाप्युग्रै कृच्छ्रचान्द्रायणादितपोभि । अपि तु त्वमेव केवल मत्प्रसादेनेद दृष्ट्वा कृतार्थो भवसीत्यर्थ ॥ ४८ ॥

विश्वरूपदर्शनमेव स्तुत्वा यतो विश्वरूप दृष्ट्वा बिभ्यत तदुपसहृत्य त्वदीप्सित रूप दर्शयामीत्याह—

एवं भगवदाश्वस्तो निर्भयः सन् भगवन्तं प्रत्यर्जुन उवाच—

अर्जुन उवाच—

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥ ५१॥**

दृष्ट्वेति। हे जनार्दन! तवेदं मत्सखत्वेन प्रसिद्धं सौम्यं मानुषं रूपं दृष्ट्वा ऽहं सचेताः प्रसन्नचित्तो भूत्वेदानीं संवृत्तः संजातस्मृतिः सन् प्रकृतिं स्वस्थचित्ततां गतो ऽस्मि॥ ५१॥

सर्वजनोपासनार्हं स्वकं विश्वरूपं स्तुवन् श्रीभगवानुवाच—

श्रीभगवानुवाच—

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥ ५२॥**

सुदुर्दर्शमिति। यन्मम विश्वरूपं त्वं दृष्टवानसि तदिदं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शम्। द्रष्टुमशक्यमित्यर्थः। तत्र हेतुः, यतो देवा अप्यस्य विश्वरूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो भवन्ति। तथा ऽपि न पश्यन्तीत्यर्थः॥ ५२॥

देवानां त्वद्दर्शनोपायाभावात् कथं ते द्रक्ष्यन्तीत्यपेक्षायामुपायेषु सत्स्वपि यथा त्वया दृष्टः तथा तैर्द्रष्टुं न शक्यो ऽस्मीत्याह—

**नाहं वेदैर्न तपसा न दानेन न चेज्यया।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥ ५३॥**

नाहमिति । यथा येन प्रकारेणैवंविधं विश्वरूपधरं मां दृष्टवानसि, तथा केवलवेदपारायणैः सर्वस्वदानेनेज्यया यज्ञेन वा ऽपि द्रष्टुं न शक्यः ॥ ५३ ॥

तर्हि केनोपायेन द्रष्टुं शक्यो ऽसीति तत्राह—

**भक्त्या त्वनन्यया शक्य अहमेवंविधो ऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**

भक्त्येति । हे अर्जुन ! भक्तिर्भजनम्, तया ऽहमेवंविधो विश्वरूपधरः परमात्मा वासुदेवो निष्कामकर्मानुष्ठानजनितचित्तशुद्ध्युत्तरकालभाव्यवेदान्तविचाराज्ज्ञातुं तदर्थमनननिदिध्यासनतो द्रष्टुं साक्षात्कर्तुं तत्त्वेन तत्त्वतः प्रवेष्टुं च स्वाविद्याकलनामुन्मूल्य स्वविद्यासर्वोत्कृष्टफलं कैवल्यं प्रतिपत्तुं शक्यः । किं जीवपरयोर्भेदरूपया मत्तस्त्वमुत्कृष्टः सेव्यत्वात्त्वत्तो ऽहमपकृष्टः सेवकत्वादित्येवंभावापन्नया भक्त्या ज्ञातुं द्रष्टुं प्रवेष्टुं च शक्यो ऽसीति तत्राह—अनन्ययेति । वासुदेवो ऽहमहमेव वासुदेव इत्यपृथग्भूतया मद्विज्ञानकवलितसेव्यसेवकभावया ऽनन्यभक्त्या प्रतिपत्तुं योग्य इत्यर्थः । तुशब्दः सर्वकर्मसंन्यासलक्षणमन्निष्ठाद्योतकः । परः सेव्यसेवकभावः, तमनन्यभक्त्या तपतीति हे परंतपेति संबुद्धिरुचितेति भावः ॥ ५४ ॥

गीताशास्त्रार्थसर्वस्वं समुच्चित्य कथयति—

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥ इति ।**

इति श्रीमद्भगवद्गीतासु॰ विश्वरूपदर्शनयोगो नामैकादशो ऽध्यायः ।

मदिति । हे पाण्डव ! मदर्थमेव न स्वतत्फलभागार्थं कर्म करोतीति मत्कर्मकृत् । पराया गते स्त्वद्भिन्नत्वात् त्वदर्थं कर्मकृत तल्लाभ कथमिति तत्राह—मत्परम इति । अह प्रत्यगभिन्न परमात्मा वासुदेव परा गति यस्य सो ऽय मत्परम । मदितरपुरुषार्थाभावात् । त्वद्भक्तिविकलस्य त्वद्गतिता कुत इति तत्राह—मद्भक्त इति । वासुदेवादितरन्न किंचिदस्ति, सर्वमहमपि वासुदेव एवेति भजन भक्ति, तद्वतो मद्गतितोपपद्यत इत्यर्थ । स्वदेहतदन्ययोरात्मात्मीयत्वाभिमानवत कथं त्वद्भक्ततेति तत्राह—सङ्गवर्जित इति । स्वदेहदारपुत्रवित्तादीना स्वव्यतिरेकेणाभावात् मिथ्येति जानत तत्र कथं सङ्गो भवेत् ? त्वद्भक्तत्व संभवत्येवेत्यर्थ । स्वापकारिषु शत्रुभावप्रयुक्तो नि सङ्गता कथमाविर्भवतीति तत्राह—निर्वैर इति । वासुदेव सर्वमिति मनीषया सर्वभूतेषु स्वापकारिष्वपि निर्गतो वैरभावो यस्य स सर्वभूतेषु निर्वैर । य ईदृशभावारूढो योगी स मा विदेहकैवल्यरूपमेति तस्याहमेव परा गति । तदयमेव परमोपदेशो मया कृपयोपदिष्ट । इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ ५५ ॥

सर्वात्मभावनाजुष्टमुक्तप्रत्यगभेदत ।
चकास्ति यत्पर ब्रह्म तन्मे क्षिप्र प्रसीदतु ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायामेकादशो ऽध्याय ।

## द्वादशो ऽध्यायः

विष्णो साकल्यनैष्कल्यभक्त्योर्निःश्रेयसं प्रति ।
असाधारणता वक्तुमेष स्याद्द्वादशोऽयम् ॥

'अशोच्यान्' इत्यारभ्य दशमाध्यायपर्यन्तमेकादशाध्यायान्ते ऽपि 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' 'नित्यः सर्वगतः स्थाणुरचलो ऽयं सनातनः' 'अव्यक्तो ऽयमचिन्त्यो ऽयमविकार्यो ऽयमुच्यते' 'विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः' 'निर्ममो निरहङ्कारः' 'स शान्तिमधिगच्छति' 'यस्त्वात्मरतिरेव स्यात्' 'ज्ञात्वा मां शान्तिमृच्छति' 'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि' 'स योगी ब्रह्मनिर्वाणं ब्रह्मभूतो ऽधिगच्छति' '*यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति*' 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' 'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥' 'भक्त्या त्वनन्यया शक्य अहमेवंविधो ऽर्जुन' इत्यादिना निष्कलब्रह्मगोचरानन्यभक्तिनिष्ठात उत्तमाधिकारिणा कृतार्थता ऽभिहिता । विश्वरूपाध्याये तु सकलब्रह्मगोचरभक्तिनिष्ठया च तयोर्निष्कलसकलब्रह्मभक्तिनिष्ठयोर्मध्ये यद्भक्तिनिष्ठाऽऽरूढो योगी त्वामव्यवधानेनोपैतीति तद्विशेषं बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

एवमिति । मत्कर्मकृदित्यादिनैव ये सकलब्रह्मभक्ता सर्वकर्मार्पणादिना सतत नैरन्तर्येण युक्ता समाहितचित्ता सन्त सर्वज्ञ परमेश्वरम् अकुण्ठित-क्रियाज्ञानेच्छाशक्तिसपन्नत्वेन विश्वरूपधर त्वा पर्युपासते ध्यायन्ति, ये चापि सन्यस्तसर्वकर्माण त्वदनन्यभावलक्षणब्रह्मात्मनिष्ठाव्याविद्धसर्वोपाधित्वेन कालत्रय ऽपि न क्षरतीत्यक्षरमिन्द्रियद्वयागोचरत्वादव्यक्त नित्यशुद्धबुद्ध परमानन्दस्वरूपसत्तासामान्यब्रह्माहमस्मीति त्वा पर्युपासते तेषा सकल निष्कलब्रह्मभक्तिनिष्ठाना मध्ये के योगवित्तमा ब्रह्मात्मनिष्ठा ॥ १ ॥

ये निष्कलब्रह्मात्मभक्तिनिष्ठास्ते तिष्ठन्तु 'ज्ञानी त्वात्मेव मे मतम्' इत्युक्तमपि तान्प्रति यद्वक्तव्य तदुपरिष्टादुच्यते । सप्रति किमनयोर्निष्ठयो सुशका निष्ठा केति पृच्छ्यते, किमव्यवधानेन साक्षात्कैवल्यहेतु केति वेति विकल्प्य क्रमेणोत्तर श्रीभगवानुवाच—

श्रीभगवानुवाच—

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

मयीति । य मद्भक्ता विश्वरूपधरे सर्वज्ञत्वादिगुणविशिष्टे मयि मनो ऽन्त करणमावेश्य मदाराधनलक्षणनिष्कामकर्मानुष्ठाने नित्ययुक्ता भूत्वा परया प्रकृष्टया श्रद्धया भगवानेव स्वाविद्याविजृम्भितससारादुद्धरिष्य

तीत्यास्तिक्यबुद्ध्योपेताः सन्तः सोपाधिकं भगवन्तं मामुपासते । ते मे मम परमेश्वरस्य युक्ततमा इति मता अभिप्रेताः । सुप्तेरुत्थाय पुनः सुप्त्यन्तं यतस्ते मच्छरणा अभवन् ततो युक्ततमा इति वक्तुं युक्तमित्यर्थः ॥ १ ॥

किमितरे निष्कलब्रह्मनिष्ठा युक्ततमा न भवन्तीत्यपेक्षायां ब्रह्मैवाहमहमेव ब्रह्मेति मद्भावारूढानां मत्स्वरूपत्वेन मद्भावमारोढुमिच्छतां साधकानामिव युक्ततमत्वस्य वक्तुमरमणीयत्वात् स्वातन्त्र्येण ते मामेव प्राप्नुवन्तीत्याज्ञापयति—ये त्विति द्वाभ्याम् ।

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**
**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

ये त्विति । ये तु निष्कलभक्तिनिष्ठया मामुपासते ते मामेव प्राप्नुवन्तीति योजना । सकलब्रह्मनिष्ठेभ्यो निष्कलब्रह्मनिष्ठानां वैशिष्ट्यद्योतकः तुशब्दः । सकलभक्तिनिष्ठेभ्यो विशिष्टाश्चेत् ते कीदृशा इति तत्राह—समबुद्धय इति । सर्वत्र सर्वदेष्टानिष्टप्राप्तावपि हर्षविषादवैकल्येन समा बुद्धिः सर्वं ब्रह्मेति ज्ञानं येषां ते समबुद्धयः, साम्यब्रह्मनिष्ठाफलत्वविषमत्वात् । स्वाहितकारिष्वहितचिन्तकानां समबुद्धित्वं कुत इति तत्राह—सर्वेति । सर्वेषां ब्रह्मादिस्तम्बान्तभूतानां यदात्यन्तिकं हितं प्रत्यक्परचिदैक्यसुखं तदितरविषयविस्मरणपूर्वकं तत्रैव रतत्वात् सर्वभूतहिते रताः । तेषां समबुद्धित्वं निरङ्कुशमित्यर्थः । इन्द्रियग्रामस्य साम्यब्रह्मबुद्धिचालकत्वेन प्रसिद्धत्वात् तद्वत् प्रत्यक्परचिदैक्यसुखरतिः कथमुपपद्यत इति तत्राह—संनियम्येति । ब्रह्मातिरेकेणेन्द्रियग्रामं तद्व्यापारो वा कथं संभवेदिति

प्रयोगेण स्वान्तर्बहिर्विजृम्भितमिन्द्रियग्राम सनियम्य ब्रह्मात्मना ग्रसित्वा स्वस्वरूपेण वर्तमानाना ब्रह्मानन्दरतिरुपपद्यतेतरामित्यर्थ । त एवविशेषण विशिष्टा ब्रह्मात्मनिष्ठा किविशेषणविशिष्ट त्वामुपासत इति तत्राह—अक्षरमिति । सत्तासामान्यरूपत कदाचिदपि न क्षरति न च्यवत इत्यक्षरम् । अक्षरमिति शब्दतो निर्दिष्टस्य क्षरत्वप्रौव्यात् अक्षरत्व कुत इति तत्राह—अनिर्देश्यमिति । यदिन्द्रियगोचरत्वेन प्रसिद्ध विशेष सामान्यात्मक वस्तु तस्य निर्देष्टुशक्यत्वेन क्षरत्वमुपपद्यते । तद्विपरीतत्वेन सर्ववेदान्तप्रसिद्धमक्षर ब्रह्म स्वेतरत्वेन निर्देशासहत्वात् अनिर्देश्यमक्षरमुच्यते । अक्षरमिति व्यपदेशस्य तदवबोधोपायत्वादुदिते सति तद्बोधे स्वव्य तिरेकेण व्यपदेशादर्शनात् न दोषाय तद्भवतीत्यर्थ । स्वतो ऽनिर्देश्यमपि व्यक्तविश्वसमन्वयात् निर्देश्यतापदमर्हतीति तत्राह—अव्यक्तमिति । किं तद्ब्रह्मणो व्यक्तत्वम् उपाधितो गुणतो वा ? नाद्य, स्वभिन्नोपाध्यभावेन निरुपाधिकत्वात् । न द्वितीय, निर्गुणत्वात् । विश्वनिष्ठव्यक्ततायाः स्वाज्ञान कल्पितत्वेन मिथ्यात्वात् तथ्यातथ्ययोगवद्व्यक्ताव्यक्तसमन्वयस्य मृग्यत्वा दनिर्देश्य ब्रह्माव्यक्तमेवेत्यर्थ । तादृशमव्यक्त ब्रह्म कुत्रासनमर्हतीति तत्राह—सर्वत्रेति । सर्वत्र गच्छतीति सर्वत्रग निरपमविभुत्वात् । किं तद्वि भुत्वेन चिन्त्यमिति तत्राह—अचिन्त्यमिति । ब्रह्मातिरेकेण विभु ब्रह्मेति चिन्तकचित्ताभावात् । ननु अचिन्त्य चेत् ब्रह्म तस्य कूटस्थत्व कुत इति तत्राह—कूटस्थमिति । स्वाविद्यातत्कार्यजात कूट तदन्तर्यामित्वेन तदधिष्ठानत्वेन वा यच्चैतन्य वर्तते तत्कूटस्थमुच्यते, तदध्यक्षस्वरूपत्वात् 'यो अस्याध्यक्ष' इति श्रुते । कूटस्थ चलत्वेन तदध्यक्षस्यापि तथात्व किं न स्यादिति तत्राह—अचलमिति । यथा घटे चालिते ऽपि तत्सम्बन्धा स्पृष्टमाकाश न चलति, तथा स्वविकल्पितकूटसम्बन्धाभावादचलत्व सिद्ध

मित्यर्थः । तत्र हेतुमाह—ध्रुवमिति । स्वतः परतो वा यच्चलति तदध्रुवं चलितत्वात् । यत्तद्विपरीतं तद् ध्रुवम्, निश्चलत्वेन परमार्थसत्यत्वात् । प्रत्यगभेदेनैवंविशेषणविशिष्टं मा परि समन्तादुपासते । उपासनं नाम स्वोपास्यविषयैकतानत्वम् । एवं निष्कलभक्तिनिष्ठा भूत्वा ये मामुपासते तदुपासनासमकालमेव ते मा प्राप्नुवन्तीति वर्तमानप्रयोगस्तदुत्तरक्षणावाप्तिं न सहते । 'ज्ञानसमकालमेव मुक्तः' इति श्रुतेः ॥ ३, ४ ॥

सकलभक्तिनिष्ठाऽपेक्षया निष्कलभक्तिनिष्ठाया श्रेष्ठत्वात् सकलभक्तिनिष्ठैरपि निष्कलभक्तिनिष्ठैव भजनीयत्वाकाङ्क्षाया देहाभिमानिनो निष्कलनिष्ठाया दुष्करत्वात् तदितराया सुकरत्वादित्याह—

**क्लेशो ऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

क्लेश इति । हि यस्मात् अव्यक्ता निष्कलब्रह्मभक्तिनिष्ठाऽऽख्या गति देहवद्भि देहाभिमानिभिरवाप्यत इति यत्तद् दुःखं दुःखेनाप्यनवाप्यम्, दुःशकमित्यर्थः । यद्यपि मत्कर्मादिपरायणाना सकलब्रह्मशरणाना स्वेच्छाऽऽचारविहारेभ्य कामेभ्य स्वदेहाद्यभिमानपरित्यागनिमित्त क्लेशो ऽधिक, यदिन्द्रियबुद्ध्यागोचरस्तदव्यक्तम्, तस्मिन्नासक्त चेतो येषा निष्कलभक्तिनिष्ठानामव्यक्तासक्तचेतसा स्वेतरबुद्धिपरित्यागनिमित्त क्लेशो ऽधिकतर, तथा ऽपि परदृष्ट्यपेक्षया क्लेशस्याधिकतरत्वोक्ति न स्वदृष्ट्या, स्वानन्दकवलितसर्वक्लेशत्वादित्यर्थ ॥ ५ ॥

निष्कलभक्तिनिष्ठा ये 'ते प्राप्नुवन्ति मामेव' इत्यवधारणापूर्वकमव्यवधानेन स्वप्राप्तेरुक्तत्वात सकलब्रह्मभक्तिनिष्ठाना स्वप्राप्तिर्विलम्ब्य-

पेक्षाया तेषां ज्ञानाभावे ऽपि मच्छरणत्वात्तानहमुद्धरामीत्याह— ये त्विति द्वाभ्याम् ।

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**
**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

ये त्विति । हे पार्थ ! ये तु सकलशरणा पुरुषा । तुशब्दो भगवत्प्रसादलब्धसम्यग्ज्ञानद्वारा कैवल्यद्योतक । विश्वरूपधर परमेश्वरो ऽहं परो येषां ते मत्परा सन्त परमेश्वरे मयि श्रौतस्मार्तचोदितानि सर्वाणि कर्माणि संन्यस्य समर्प्य विश्वरूप परमेश्वर एवास्माभि भजनीयो नान्य इति भावो ऽनन्य , तेन समाधियोगेनैव मा विराड्रूप ध्यायन्त सन्त उपासते, तेषा मय्यावेशितचेतसा सकलब्रह्मभक्तिनिष्ठाना मृत्यु स्वाज्ञानं मरणाद्यनर्थनिदानत्वात्, तत्कार्यं ससार स एव समुद्र , तस्मान्मृत्युससारसागरात् मज्ज्ञानप्लवदानेनोद्धर्ता भवामि ॥ ६, ७ ॥

यतो मदुपासना विशिष्टफला अत तन्निष्ठाया प्रयतितव्यमित्याह—

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**

मयीति । विश्वरूपे मय्येव सकल्पविकल्पात्मक मन आधत्स्व । मयि निश्चयात्मिका बुद्धि निवेशय । त्वयि मनोबुद्धिस्थापनेन किं मे स्यादिति तत्राह—निवसिष्यसीति । एव मयि मनोबुद्धिनिवेशन कुर्वस्त्व

मत्प्रसादलब्धज्ञानो भूत्वा अतो देहपतनादूर्ध्वं मय्येव परमात्मनि निवसिष्यसि मद्रूपो भविष्यसि । नास्मिन्नर्थे संशयः कर्तव्यः ॥ ८ ॥

एवं कर्तुं न शक्नोपि यदि तदा अभ्यासयोगं वा कुर्वित्याह—

**अथ चित्तं समाधातुं न शक्नोपि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**

अथेति । हे धनंजय! पूर्वोक्तार्थद्योतको ऽथशब्दः । अथ यथोक्तं तथा मयि चित्तं समाधातुं स्थिरीकर्तुं न शक्नोपि यदि तदा ततः पश्चात् स्थूलप्रतिमाऽऽदौ पौनःपुन्येन मनः प्रत्याहृत्य स्थिरीकरणमभ्यासः, स एव योगः, तेनाभ्यासयोगेन विश्वरूपधरं मामाप्तुमिच्छ प्रार्थयेत्यर्थः ॥ ९ ॥

तत्राप्यशक्तश्चेत् मदर्थं कर्म कुर्वित्याह—

**अभ्यासे ऽप्यसमर्थो ऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

अभ्यासेति । अभ्यासयोगे ऽप्यसमर्थो यदि भवसि तदा मदाराधनलक्षणस्वाश्रमोचितश्रुतिस्मृतिविहितनित्यनैमित्तिकोपवासपूजानमस्कारनामसंकीर्तनादि कर्मैव परमं साधनं यस्य स त्वं मत्कर्मपरमो भव । त्वदर्थं कर्म कुर्वतः किं फलमिति तत्राह—अवाप्स्यसीति । मदर्थमेवैवंरूपं कर्म कुर्वंस्त्वं तदुदितचित्तशुद्धिमाप्यज्ञानद्वारा सिद्धिं मुक्तिमवाप्स्यसि ॥ १० ॥

मत्कर्मयोगमनुष्ठातुमप्यसमर्थस्योपायान्तरमादिशति—

**अथैतदप्यशक्तो ऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

अथेति । अथ मत्कर्मपरमत्व यदुक्त तदेतदपि कर्तुमशक्तो ऽसि, तदा श्रुतिस्मृत्यनुगृहीत स्वाश्रमोचित यत्कर्म तस्य मदर्थमनुष्ठान मद्योग, तमाश्रित सन् यतो नियत आत्मा ऽन्त करण तद्वान् भूत्वा ततस्तदनन्तर सर्वेषा कर्मणा फलत्याग कुरु ॥ ११ ॥

इदानीमर्जुनप्ररोचनाय तस्य कर्मफलत्याग स्तौति —

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

श्रेय इति । ज्ञानरहितात्केवलाभ्यासात् शास्त्रजन्य ज्ञान श्रेय । हिशब्दो वैशिष्ट्यद्योतक । केवलशास्त्रजन्यज्ञानात् ज्ञानविशिष्ट ध्यान विशिष्यते । ज्ञानवत्तद्ध्यानादपि कर्मफलत्यागो विशिष्यते । एव सर्वकर्म फलत्यागादनन्तरमेव ससारस्य शान्तिरुपशमो भवति । श्रेयो हि ज्ञान मित्याद्युत्तरोत्तरवैशिष्ट्योपदेशेन कर्मफलत्याग स्तूयते । 'अथ चित्त समाधातुम्' इत्यादिसाधनानुष्ठानाशक्तपुरुषानुद्देशत्वेन श्रुतत्वात् स्तुते प्ररोचनार्थत्वात् । वस्तुतस्तु 'यदा सर्वे प्रमुच्यन्ते कामा य ऽस्य हृदि श्रिता' इत्यादिश्रुत्यनुरोधेन सर्वकर्मफलसर्वकामप्रहाणत ससारशान्ति लक्षणामृतत्व सम्भवति । न हि त्यक्तसर्वकामाणा कर्मयोग उपपद्यते यतस्ते प्राप्नुवन्ति' मामेवेति निष्कलब्रह्मभक्तनिष्ठाना कैवल्यावाप्तौ स्वातन्त्र्यम् । तेषामद्व समुद्धर्तेत्यादिनेतरेषामीश्वरपरतन्त्रत्व दर्शितम् । अत तदर्जुन प्ररोचनार्थमिति सिद्धम् ॥ १२ ॥

सकलब्रह्मनिष्ठाना तत्प्राप्तौ साधनमुक्त्वा निष्कलब्रह्मनिष्ठाना सन्यासिना धर्मपूगमुपन्यस्यति—अद्वेष्टेत्यादिभिरष्टभि ।

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**
**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

अद्वेष्टेति । सर्वेषां भूतानामद्वेष्टा स्वात्मातिरेकेण भूतभीतिरजातशत्रुत्वात् । अद्वेष्टेत्यादिविशेषणविशिष्टो यः संन्यासी स मे प्रियभक्त इत्यन्वयः । स्वात्मापकारिणममित्रत्वेन पश्यतः सर्वभूताद्वेष्टृत्वं कुत इति तत्राह—मैत्र इति । स्वामित्रभूतानामपि स्वात्मत्वेन मित्रत्वात् सर्वभूतानां मैत्रः । मित्रतया वर्तनात् सर्वत्राद्वेष्टृत्वमुपपद्यते । करुणाविहीनस्य कुत्र वा मित्रतोपपन्नेति तत्राह—करुण एव चेति । सर्वभूतानां करुणया ऽवलोकनात् दुःखितेषु तद्दुःखसमार्जनोपायचिन्तनपरत्वाच्च सर्वभूतमित्रतोपपद्यत इत्यर्थः । इदं मे स्यादिति ममकाराविष्टस्य करुणा कुत इति तत्राह—निर्मम इति । देहधारणमात्रोपयोगिभक्तोपनीतभिक्षाऽऽदावपि ममेति ममकारविरहत्वात् निर्गतो ममकारो यस्मात् स निर्ममः । स्वदेहादन्यत्र ममकाराभावे ऽपि स्वदेहादावहंकारः स्यादिति तत्राह—निरहंकार इति । 'यथैव मृन्मयः कुम्भस्तद्वद्देहो ऽपि चिन्मयः' इति श्रुत्यनुरोधेन देहादावपि निर्गतो ऽहंकारो यस्मात् स निरहंकारः । सुखादिवैषम्यं पश्यतो निरहंकारता कथमिति तत्राह—समेति । द्वेषरागयोः प्रवर्तके दुःखसुखे यस्य समे स समदुःखसुखः । वैषम्यहेत्वज्ञानाभावात् क्षमाविरहस्य सम्भवः किमिति तत्राह—क्षमीति । स्वाज्ञजनैस्ताडितो ऽप्याक्रुष्टः सन्नविक्रिय एवावतिष्ठत इति क्षमावान् ।

'क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
ताडितः सन्निरुद्धो वा कृत्या वा परितापितः ॥'

विहितो मुक्तितो वा ऽऽर्ज्जैर्दुधैव प्रकम्पित ।
श्रेयस्काम कृच्छ्रगत आत्मना ऽऽत्मानमुद्धरेत् ॥'

इत्यादिश्रुते॰ । केनाप्यसतुष्टस्य क्षमित्व कथमिति तत्राह—सतुष्ट इति । अवर्जनीयशरीरस्थितिहेतोर्भैक्षादेर्लाभे ऽलाभे ऽप्यविकृतचित्तो भूत्वा बाह्यमनपेक्ष्य सतत स्वानन्देनैव सतुष्टत्वात् ।

'अप्राप्त हि परित्यज्य सप्राप्ते समता गत ।
अदृष्टखेदाखेदो य सतुष्ट इति कथ्यते ॥'

इति श्रुते । अयोगिन सतुष्टि कथमिति तत्राह—योगीति । प्रत्यक्परैक्यज्ञान योगस्तद्वान्योगी, तस्य परमानन्दपारावारमग्नचित्तत्वात् । अयतात्मनो योगित्व कुत इति तत्राह—यतात्मेति । स्वार्थतो यतो नियत आत्मा करणग्रामो येन स यतात्मा । निगृहीतेन्द्रियद्वयत्वाद्दृढनिश्चयवतो यतात्मता कथमिति तत्राह—दृढनिश्चय इति । ब्रह्मैवेद सर्वमह चेति दृढो निश्चयो यस्य स दृढनिश्चय । त्वय्यनर्पितमनोबुद्धे दृढनिश्चयता केति तत्राह—मयीति । प्रत्यगभिन्नत्रह्मस्वरूपे मय्यर्पिते दृढ निवेशिते मनोबुद्धी यस्य सन्या सिन॰ स मय्यर्पितमनोबुद्धि । एवविशषणविशिष्टो यो मद्भक्त स मे मम प्रिय मत्प्रिफलभक्तिनिष्ठाऽऽरूढत्वात् मत्सकलभक्तिनिष्ठेभ्यो विशिष्यते । "तेषा ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनो ऽत्यर्थमह स च मम प्रिय ॥ उदारा सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।' इत्युक्तत्वात् ॥ १३, १४ ॥

उत्राप्युद्वेगादिराहित्यमपि मत्प्रिफलभक्तिनिष्ठलक्षणमाह—

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

यस्मादिति । यस्मात् संन्यासिनो लोकः प्राणिपूगो नोद्विजते उद्वेगं क्षोभं न गच्छति, तथा यः संन्यासी लोकात् प्राणिमात्रादपि नोद्विजते न संतप्यते, यश्च परिव्राट् स्वेप्सितविषयाधिगमे रोमाञ्चादिलिङ्गो हर्षश्च तदलाभे परश्रेयस्यसहिष्णुता अमर्षश्च द्वैतदर्शनजं भयं त्रासश्च उद्वेगः सदा विक्षिप्तचित्तता च, तैः हर्षामर्षभयोद्वेगैः मुक्तो भवति, स च ब्रह्मात्मनिष्ठो मे प्रियः ॥ १५ ॥

निरपेक्षत्वादिकमपि ज्ञानिनो लक्षणमित्याह—

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

अनपेक्ष इति । अनपेक्षः देहेन्द्रियादिषु आत्मत्वात्मीयत्वाभिमानवैकल्येन कुत्राप्यपेक्षाऽभावात् निस्पृह इत्यर्थः । शुचिः मद्भावनोदकेन स्वान्तर्बहिर्विलसिताशुचेः क्षालितत्वात् । दक्षः प्रत्यक्परैक्यानुसंधानकवलितजामितात्वात् । उदासीनः मित्रामित्रेष्वपि समत्वेन पक्षपाताभावात् । गतव्यथः परैस्ताडने कृते ऽप्यविक्षिप्तचित्तत्वात । सर्वे चारभ्यन्त इत्यारम्भाश्चेहामुत्रविजृम्भितकामकार्यकर्माणि सर्वारम्भाः, तान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी । एवंविशेषणसंपन्नो यो मद्भक्तः स मे प्रियः ॥ १६ ॥

द्वेषहर्षादिराहित्यमपि ज्ञानिलक्षणमित्याह—

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

य इति । इष्टप्राप्तितो न हृष्यति अनिष्टप्राप्तितो न द्वेष्टि । प्रियवस्तुवियोगे न शोचति । न चाप्राप्तं वस्तु किंचिदपि काङ्क्षति ।

शुभ कर्म स्वर्गादिप्रापकत्वात्, अशुभ कर्म निरयप्रापकत्वात्, शुभाशुभे कर्मणी परित्यक्तु सन्यस्ति शीलमस्येति शुभाशुभपरित्यागी यो ऽयमुक्त लक्षणविशिष्टो भक्तिमान् स मे प्रिय ॥ १७ ॥

सर्वत्र समत्वमपि ज्ञानिलक्षणमित्याह—

**समः शत्रौ च मित्रे च तथा मानावमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**
**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

सम इति । शत्रुरापत्काले ऽपकारी तस्मिन् शत्रौ, मित्रमापत्काले प्राप्ते यथाबलमापन्मोचक तस्मिन्मित्रे च सम विषमबुद्धिविकलत्वात् । मान सभाया सम्मति, अवमान तत्रैवावमति, तयोर्मानावमानयो, तथा शीतोष्णसुखदु खेषु च सम । तत्र हेतु सर्वत्र सङ्गविवर्जित । निन्दा च स्तुतिश्च निन्दास्तुती, ते तुल्य यस्य स तुल्यनिन्दास्तुति । मौनमस्यास्तीति मौनी नियतवाग्व्यापारत्वात् । यन केनचित् शरीरस्थितिमात्रप्रयोजनेन सतुष्ट । तथा च स्मृति —

> 'यन केनचिदाच्छन्नो यन केनचिदाशित ।
> यत्र कचन शायी स्यात्त देवा ब्राह्मण विदु ॥'

इति । निकेत आश्रयो निवासो गृहादिर्यस्य सन्यासिनो नियतो न विद्यते सो ऽनिकेत । 'ग्राम एकरात्र नगरे पञ्चरात्र क्षेत्रे सप्तरात्र तदुपरि न वसेत्' इति श्रुते । ब्रह्मैवाहमहमेव ब्रह्मेति स्थिरा मतिर्यस्य स स्थिरमति

स्थितप्रज्ञ इत्यर्थः । यः स्वात्मातिरिक्तवस्तुनि जात्वपि न रमत इति नरो ज्ञानी । स हि मे प्रियो भक्तिमान् ॥ १९ ॥

निष्कलब्रह्मभक्तिनिष्ठानां सन्यासिनामद्वेष्टेत्यादिना धर्मवृन्दो यः प्रपञ्चितस्तमुपसंहरति—

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥ इति ।**

इति श्रीमद्भगवद्गीतासु० भक्तियोगो नाम द्वादशोऽध्यायः ॥

ये त्विति । ये तु सन्यासिनः स्वधर्मादनपेतं धर्म्यम्, धर्म्यं च तदमृतं चेत्यमृतत्वहेतुत्वात् धर्म्यामृतमिदमद्वेष्टेत्यादि यथोक्तम् । श्रद्दधाना श्रद्धावन्तो भूत्वा निष्कलब्रह्माहं वासुदेवः परमः पुरुषार्थो येषां ते मत्परमाः सन्तः पर्युपासते नित्यमनुतिष्ठन्ति, ते मे परमार्थज्ञानलक्षणां भक्तिमारूढा भक्ताः प्रिया नेतर इत्यर्थः । 'भक्तास्तेऽतीव मे प्रियाः' इत्यादिना 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति यदुक्तं तद्व्याख्यातम् । यतो मत्प्रापकधर्म्यामृतोपासनान्मद्भक्ता भूत्वा विदेहकैवल्यं यान्ति, अतः कैवल्यमिच्छुना मत्प्रापकधर्म्यामृतमनुष्ठेयम् । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ २० ॥

यन्निष्कलब्रह्मभक्तिनिष्ठा अव्यवधानतः ।
कैवल्यं यान्ति स हरिस्तन्निष्ठां मे प्रयच्छतु ॥
येन श्रीकृष्णदेवेन स्वगीतामध्यपट्कतः ।
निरूपितस्तत्पदार्थस्तत्साक्षात्कृतिरस्तु मे ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां द्वादशोऽध्यायः ॥

# त्रयोदशो ऽध्यायः

गीताऽऽद्यमध्यषट्कोक्ततत्त्वंपदकलक्ष्ययोः ।
मिथो भेदभ्रमं मार्ष्टुमन्त्यषट्कं निगद्यते ॥
मज्ज्ञानदानतः स्वीयानुद्धरामि भवार्णवात् ।
इत्युक्तं तज्ज्ञानमिह स्फुटीकर्तुमुपक्रमः ॥

अतीतानन्तराध्याये ये त्वनन्येन योगेन मामुपासते तेषां मृत्यु-संसारसागरादुद्धर्ता भवामीति यत्प्रतिज्ञातम्, न च ब्रह्मात्मैक्यज्ञानं विना स्वाज्ञानभवभावादुद्धरणं संभवतीति तत्प्रतिज्ञातार्थसिद्धये, केन पुनस्तत्त्व-ज्ञानेन निष्कलब्रह्मभक्तिनिष्ठाः संन्यासिनः 'अद्वेष्टा' इत्यादियथोक्त-धर्मपूगचारिणो भूत्वा भगवद्रूपा भवन्तीत्याकाङ्क्षापूरणार्थं वा त्रयोदशाध्या-योपक्रमः । सप्तमाध्याये परमात्मनः अपरा परेति च द्वे प्रकृती सूचिते याभ्यामिदं जगदाविर्भावतिरोभावहेतुतामापन्नमिव लक्ष्यते तत्प्रकृतिद्वयस्व-रूपकथनेन तत्कल्पनाऽऽस्पदब्रह्मात्मतत्त्वं प्रतिपिपादयिषुः श्रीभगवानु-वाच—

श्रीभगवानुवाच—

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

इदमिति । हे कौन्तेय! घटवत्परिदृश्यमानमिदं बाल्याद्यवस्थाभिराध्यात्मिकादिदुःखैश्च शीर्यत इति शरीरमिन्द्रियद्वयसंघातास्पदत्वेन भोगायतनत्वात् । क्षेसारं कर्षकं त्रायत इति क्षेत्रम् । तत्र यद्वद्बीजमुप्तं फलति तद्वद्यत्र कर्मफलं निष्पद्यते तदेतत्क्षेत्रमिति शब्देनाभिधीयते, संसारफलोद्भवभूमित्वात् । इत्थं दृश्यत्वेन क्षेत्रस्वरूपमभिधाय तद्विलक्षणत्वेन तद्द्रष्टारं विशिनष्टि—क्षेत्रज्ञ इति । उपदेशमन्तरेतत्क्षेत्रमहंममाभिमानास्पदत्वेन यो वेत्ति तमेवं संसारिणं तत्क्षेत्रक्षेत्रज्ञस्वरूपं विदन्तीति तद्विदः क्षेत्रज्ञ इति शब्देन प्राहुः कथयन्ति ॥ १ ॥

व्यष्टिक्षेत्रज्ञं संसारित्वेन निर्दिश्य समष्टिक्षेत्रज्ञमसंसारित्वेन परामृशन् क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानमेव कैवल्यसाधनमित्युपदिशति—

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

क्षेत्रज्ञमिति । यः पूर्वस्मिन् श्लोके क्षेत्रज्ञ इति संसारित्वेन प्रकटितः सर्वक्षेत्रेषु तं मां ब्रह्मादिस्तम्बान्तानेकक्षेत्रोपाधिविलक्षणत्वेन सर्वक्षेत्रज्ञमसंसारिणमपि विद्धि । घटादिप्रपञ्चानुस्यूतव्योमवत्सर्वक्षेत्रानुस्यूतत्वात् । तत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिसिद्धव्यष्टिसमष्ट्यनुगतचितोरेकत्वादिति भावः । चापिशब्दाभ्यां व्यष्टिसमष्टिचितोरेकत्वं द्योत्यते । क्षेत्रक्षेत्रज्ञविज्ञानमेव सम्यग्ज्ञानमिति स्तौति—यत्तदिति । क्षेत्रं स्वाविद्याद्वयतत्कार्यजातं दृश्यमनात्मा, तस्य याथाऽऽत्म्यं मायामात्रं मिथ्येति निश्चयः, क्षेत्रज्ञस्तु स्वातिरिक्तं क्षेत्रजातं नास्तीति यो जानाति स हि द्रष्टा प्रत्यगभिन्नपरमात्मा, तस्य याथाऽऽत्म्यं स्वेतरभिदाऽसहसत्तासामान्यरूपं स्वस्यैव क्षेत्रस्वरूपत्वेन तदन्तर्या-

मित्वेन तत्सत्तास्फूर्तिसुप्रदातृत्वेन तदध्यारोपापवादास्पदत्वेन तदुभयदोषास्पृष्टत्वेन च विद्यमानत्वाद्यस्मात् क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यव्यतिरेकेण सम्यग्ज्ञानगोचरो न किंचिद्वस्त्वस्ति । तस्माद्येन ज्ञानेन क्षेत्रक्षेत्रज्ञावनात्मत्वात्मत्वाभ्यां ज्ञायेते विपर्यीक्रियेते यत्क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानं तज्ज्ञानमेव सम्यग्ज्ञानमिति मे मम विष्णोर्मतमभिप्रायः ॥ २ ॥

श्लोकद्वयमेवं व्याख्याय प्रथमश्लोकपूर्वार्धोक्तक्षेत्रस्वरूपं प्रपञ्चयितुं प्रतिजानीते—

**तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

तदिति । यच्च क्षेत्रं स्वभावतो जडं यादृक् च जन्मादिकर्मवत् यद्विकारि चेन्द्रियादिकृतविकारसहितम् । यच्च स्थावरजङ्गमादिभेदभिन्नवत् चशब्दपञ्चकं त्वितरेतरसमुच्चयार्थम् । तदेतत्क्षेत्रं शरीरं यतो यस्मात् क्षेत्रज्ञेश्वरादाविर्भावं तिरोभावं च पुनः पुनरुपैति यः स्वरूपात्कदाचिदपि न व्यभिचरति स च क्षेत्रज्ञः परमात्मा यत्प्रभावो ये प्रभावा इन्द्रियद्वयोपाधिकृता द्रष्टृत्वादिशक्तयो यस्य स यत्प्रभावश्च तदेतद्यथाविशेषितं क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यं समासेन मदुक्तवाक्यतः शृणु । श्रुत्वा सम्यगवधारयेत्यर्थः ॥ ३ ॥

श्रोतृबुद्धिप्ररोचनाय यद्विवक्षितं क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यं तज्ज्ञानं स्तौति—

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

ऋषिभिरिति । भृग्वादिवसिष्ठान्तैः महर्षिभिः क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानं परमपुरुषार्थहेतुत्वेन गीतं निरूपितम् । छन्दांसि ऋगादीनि, तैः छन्दोभिः अशीत्युपरिशताधिकसहस्रशाखाभेदेन विविधैर्वेदान्तैः उपनिषद्भिः

'उपक्रमोपसंहारावभ्यासो ऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'

इति षड्विधलिङ्गतः क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यमेव गीतम् । किं च क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानगोचरो ब्रह्म 'यतो वा इमानि भूतानि जायन्ते' इत्यादितटस्थलक्षणवाक्यैरेभिः सूच्यते सूच्यत इति ब्रह्मसूत्राणि । तथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिस्वरूपलक्षणवाक्यैः पद्यते साक्षाज्ज्ञायत इति पदानि तैः ब्रह्मसूत्रपदैश्च बहुधा गीतम् । किं च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति' इत्यादिभिर्हेतुमद्भिः युक्तिमद्भिः श्रुतिवाक्यैर्विनिश्चितैः असंदिग्धतया प्रतिपादकैः विस्तरेणोक्तं संक्षेपतः तुभ्यं प्रतिपादयामीत्यर्थः । यद्वा 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यन्तानि तुर्यतुर्यप्रतिपत्त्यर्थं षोडशपादात्मकानि ब्रह्मसूत्राणि गृह्यन्ते । तदेतत् क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानगोचरस्तुर्यतुरीयं ब्रह्म पद्यते निश्चीयते एभिः पादैरिति पदानि, तैर्ब्रह्मसूत्रपदैः हेतवः तत्तदधिकरणविषयवाक्यपूगा हेतुमन्त्यधिकरणसूत्राणि, तैर्हेतुमद्भिः न्यायतो विनिश्चितैः ब्रह्मसूत्रपदैः विस्तृतार्थं संक्षिप्योच्यत इत्यर्थः ॥ ४ ॥

स्वोक्तक्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानं सर्ववेदान्तसिद्धान्तत्वेन स्तुत्वा ऽथ किं तत्क्षेत्रं को ऽयं क्षेत्रज्ञः किं तयोस्तादात्म्यं किं तत्साधनमिति जिज्ञासवे ऽर्जुनायादौ क्षेत्रस्वरूपं स्फुटयति—महाभूतानीति द्वाभ्याम् ।

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

महाभूतानीति । महान्ति च तानि भूतानि च महाभूतानि अपञ्ची कृतपञ्चमहाभूतानीत्यर्थ । सर्वविकारव्यापकत्वात् । अहकारो महाभूतकारणं भूतानामहंकारव्याप्तत्वात् । बुद्धिरध्यवसायलक्षणा । अहंकारकारणमव्यक्तमेव च बुद्धिकारणम् । अव्यक्तशब्देन मूलप्रकृतिरीश्वरशक्तिरुच्यते, 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इत्युक्तत्वात् । एवकार प्रकृत्यवधारणार्थ । एतावत्येव सप्तमाध्याये अष्टधा भिन्ना प्रकृतिरित्युक्ता । चशब्दो भेद-समुच्चयार्थ । श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च ज्ञानोत्पादकत्वात्, वागादीनि कर्मेन्द्रियाणि पञ्च कर्मनिर्वर्तकत्वात्, ज्ञानकर्मेन्द्रियाणि दश, एकं च, किं तत्? सकल्पात्मक मन, शब्दादिविषया पञ्च चेन्द्रियगोचरा । तानि खल्वेतानि चतुर्विंशतिस्तत्त्वान्युच्यन्ते ॥ ५ ॥

यान् काणादा आत्मगुणा इति वदन्ति ते ऽपि क्षेत्रधर्मा एवेत्याह—

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

इच्छेति । यादृश सुख पुरा ऽनुभूत पुनस्तादृश समादातुमिच्छा ऽन्त करणधर्म । तथा यादृशो ऽर्थ दु खहेतुत्वेनानुभूत पुनस्तमर्थं द्वेष्टीति सो ऽय द्वेष । तथा ऽनुकूलविषयज सुखम् । तथा प्रतिकूलविषयज दु खम् । तथा देहेन्द्रियाणा सहति सघात । तदभिव्यक्तान्त करणवृत्ति-श्चेतना, तप्ताय पिण्डवदात्मचैतन्याभासरसविद्धत्वात् । यया ध्रियन्ते देहेन्द्रियाणि सेय धृति । इच्छाऽऽदिग्रहण कामसकल्पादिवृत्तीनामुपलक्षणार्थम् ।

'काम सकल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'[1] इति श्रुते । इच्छाऽऽद्यन्त करणवृत्तिसहस्राणा दृश्यत्वेन ज्ञेयत्वादेव न ते क्षेत्रज्ञधर्मा, किं तु क्षेत्रधर्मा एवेत्युपसहरति—एतदिति । महाभूतादिधृत्यन्तविकारेण सह वर्तत इति सविकार समासेन तदेतत्क्षेत्र यत्सहितमिद शरीर तत्क्षेत्रमित्युदाहृत व्याख्यातमित्यर्थ ॥ ६ ॥

क्षेत्रस्येयत्ता प्रतिपाद्य तथाथाऽऽत्मज्ञानोदितवैराग्यस्य क्षेत्रज्ञया थाऽऽत्मज्ञानाधिकार स्यादिति तज्ज्ञानसाधनमादावुच्यते—

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**

अमानित्वमिति । परस्मादात्मोत्कृष्ट इति मानो ऽस्येति मानी, तथा न भवतीत्यमानी, तस्य भावो ऽमानित्वम् । स्वधर्मप्रकटीकरण दम्भित्वम्, तद्विपरीतमदम्भित्वमित्याह—अदम्भित्वमिति । प्राणिनामपीडनमहिंसनमित्याह—अहिंसेति । चित्तविकारहेतुपरकृतापराधस्याविकृतचित्तत्वेन सहन सहिष्णुत्वमित्याह—क्षान्तिरिति । मनोवाक्कायकर्मभि सदेकरूपत्वेना कौटिल्यमवक्रत्वमित्याह—आर्जवमिति । मोक्षसाधनब्रह्मात्मैक्यज्ञानोपदेष्टु शुश्रूषाप्रणिपातादिक गुरूपासनमित्याचष्टे—आचार्येति । मृज्जलाभ्या बाह्यमलक्षालन ब्रह्मभावनया ऽऽन्तरमलक्षालन च शौचमित्याह—शौचमिति ।

'शौच तु द्विविध प्रोक्त बाह्यमाभ्यन्तर तथा ।
मृज्जलाभ्या स्मृत बाह्य भावशुद्धिस्तथा ऽऽन्तरम् ॥'

[1] बृ १ ५ ३

इति स्मृते । सदा श्रेयोमार्गेऽव्यवसायित्व स्थिरतेत्याह—स्थैर्यमिति । आत्मशब्दवाच्यकार्यकरणसघातस्योपवासादिना श्रेयोमार्गेनियमन निग्रह इत्याह—आत्मविनिग्रह इति ॥ ७ ॥

न केवल ज्ञानस्यान्तरङ्गसाधनान्यमानित्वादीनि, किं तु तथाविधानि वैराग्यादीन्यपीति विशिनष्टि—

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

इन्द्रियेति । ज्ञानकर्मेन्द्रियाणामर्थेषु शब्दादिष्वदृष्टदृष्टनष्टविषयभोगेषु नश्वरत्वभावनयोत्था विरक्तता विरागत्वमित्याह—वैराग्यमिति । देहादावहंभावाभावो ऽनहंकार इत्याह—अनहंकार एव चेति । अवधारणचशब्दाभ्या अहंकारवस्तुत्रापि ममकारो न कर्तव्य इति द्योत्यते । जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येक दोषदर्शन कर्तव्यमित्याह—जन्मेति । जन्मनि गर्भवासयोनिद्वारतो निःसरणम् । मृत्यौ कार्यकरणसघातात्मककलेवरनिकृन्तनम् । जराया प्रज्ञाशक्तितेज कुण्ठनम् । व्याधावसहिष्णुत्वम् । दुःखेष्वाध्यात्मिकादिषु विक्षिप्तचित्तत्वम् । तेषु जन्मादिषु पञ्चसु दोषदर्शन दोषानुसधान सदा कर्तव्यमित्यर्थ ॥ ८ ॥

पुनर्ज्ञानस्यान्तरङ्गत्वेन हेत्वन्तरमाह—

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्य च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**

असक्तिरिति । पुत्रदारगृहादिषु आदिशब्देन दासीदासपरिजनेषु चात्मीयाभिमानाभावो ज्ञानसाधनमित्याह —असक्तिरिति । पुत्रभार्यादिषु सुखमसुखं वा गतेष्वहमपि सुखी दुःखी वेति तादात्म्याभावो ऽपि ज्ञानसाधनमित्याह—अनभिष्वङ्ग इति । इष्टं सुखमिदं दुःखम् । तदुपपत्तिषु हर्षविषादराहित्यं ज्ञानसाधनमित्याह—समचित्तत्वमिति ॥ ९ ॥

उक्तेभ्यो ज्ञानस्यान्तरङ्गसाधनमाह—

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

मयीति । वासुदेवो ऽहमहमेव वासुदेव इति ज्ञानमनन्ययोग, तेनानन्ययोगेन परमेश्वरे मयि अव्यभिचारितया भजनं ज्ञानान्तरङ्गसाधनमित्याह—भक्तिरिति । सुप्तेरुत्थाय पुनः सुप्त्यन्तं भगवदनुसंधानातिरिक्तव्यापारपराङ्मुखत्वमव्यभिचारित्वम् । स्वभावतः संस्कारतो वा अशुचिभिश्चोरव्याघ्रभयादिभिश्च रहितो ऽरण्यनदीपुलिनदेवालयादिर्विविक्तो देशः, तं सेवितुं शीलमस्येति विविक्तदेशसेवी, तद्भावो विविक्तदेशसेवित्वमपि ज्ञानसाधनमित्याह—विविक्तेति । विविक्तदेशे हि यतेश्चित्तं प्रसीदति । प्राकृतजनानां संसदि संसर्गाभावो ज्ञानसाधनमित्याह—अरतिरिति ॥ १० ॥

इतश्च साधनान्तरमाह—

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतो ऽन्यथा ॥ ११ ॥**

अध्यात्मेति । आत्मानमधिकृत्य वर्तमानं ज्ञानमध्यात्मज्ञानम्, तस्मिन् अध्यात्मज्ञाने नित्यत्वेन निष्ठावत्त्वं ज्ञानसाधनमित्यादिशति—अध्यात्मेति । तत्त्वपदलक्ष्यैकनिष्ठत्वमित्यर्थः, अमानित्वादिसाधनानां प्रत्यक्परैक्यज्ञाननिमित्तत्वात् । तद्धि तत्त्वज्ञानमुपायोपेययोरेकत्वात् । तस्य तत्त्वज्ञानस्यार्थो मोक्षः स्वाविद्यातत्कार्यनिवृत्तिलक्षणत्वात् । तस्य सर्वोत्कृष्टत्वदर्शनं ज्ञानमिति व्यपदिशति—तत्त्वेति । तत्त्वज्ञानार्थपर्यालोचनया हि तत्साधनानुष्ठानप्रवृत्तिः संभवति । अमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसङ्ख्याकं साधनं यदुक्तं तदेतज्ज्ञानार्थत्वात् ज्ञानमिति प्रोक्तमित्याचष्टे—एतदिति । यत् अत एतस्माद्यथोक्तज्ञानसाधनादन्यथा तद्विपर्ययं मानित्वदम्भित्वाद्यज्ञानमिति च प्रोक्तं वसिष्ठादिभिरित्यर्थः अनित्यसंसारहेतुत्वात्, तत्परिहर्तव्यम् ॥ ११ ॥

अमानित्वादीनां ज्ञानसाधनत्वेन ज्ञानत्वमभिधाय तेन यज्ज्ञातव्यं क्षेत्रज्ञयाथाऽऽत्म्यस्वरूपं तद्विशदयति—ज्ञेयमिति षड्भिः ।

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वा ऽमृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

ज्ञेयमिति । यज्ज्ञातव्यं प्रत्यगभिन्नब्रह्मस्वरूपं ज्ञात्वा जन्तुरमृतं मोक्षमश्नुते । यदमानित्वादिसाधनसिद्धज्ञानज्ञेयं तत्तुभ्यं प्रकर्षेण वक्ष्यामि । किं तदित्यत आह—अनादिमदिति । आदिः कारणमस्यास्तीति आदिमत्, आदिमन्न भवतीत्यनादिमत्, आदेरप्यादित्वात्, स्वाविद्याद्वयतत्कार्योत्परत्वेनोपबृंहणात् परं निरतिशयं ब्रह्म आदिः कारणं यस्य न विद्यत इति बहुव्रीहिणा ऽनादित्वे सिद्धे पुनर्मतुप् प्रयोगश्छान्दसः । यद्वा, स्वभिन्नकार्यकारणाभावादनादिवासुदेवाख्यमहः परं

तत्त्वं यस्य तन्मत्परमिति च पदद्वयं मम विष्णोः परमपदं प्रत्यक्पर-चिदेकरूपं ब्रह्मेत्यर्थः । किं तद्ब्रह्म सदसद्वा? नाद्य, बाह्येन्द्रियग्राह्यं विधिमुखत प्रमाणविषयो वा सच्छब्देनोच्यते, बाह्येन्द्रियाग्राह्यत्वादवैधेयस्वरूपत्वाच्च तद्ब्रह्म न सदुच्यते । तथा सत्यसत्त्वं निरङ्कुशमिति तत्र न द्वितीय इत्याह—नासदिति । अन्तरिन्द्रियग्राह्यं निषेधविषयो वा वस्तु सच्छब्देनोच्यते । सर्वेन्द्रियग्राह्यत्वेन 'अस्थूलमनणु[1]' इत्यादिनिषेधातीतविभवत्वात् केनाप्यविषयीकृतत्वाच्च सदसद्विलक्षणं ब्रह्मेत्यर्थः ॥ १२ ॥

'ज्ञेयं यत्तत्प्रवक्ष्यामि' इति प्रतिज्ञाय 'तन्न सन्नासत्' इति यदुक्तं तदसाधु, सत्त्वेनासत्त्वेन वा ज्ञातुमविषयस्य ज्ञेयत्वासंभवादित्याशङ्क्य 'अन्यदेव तद्विदितादथो अविदितादधि[2]' इति श्रुतेः विदिताविदितादन्यत्वेन ज्ञेयत्वप्रतिपादनपरत्वात् । जातिक्रियागुणसंबन्धशून्यस्य ज्ञेयत्वानुपपत्तिरिति चेन्न, तद्विलक्षणत्वेनैव ज्ञेयत्वात् । गौरश्व इति वा जातितो ज्ञेयत्वं नोपपद्यते, संभवप्रलयाभावात् । न च पाचकः पाठक इति वा क्रियातो ज्ञेयत्वम्, निष्क्रियत्वात् 'निष्कलं निष्क्रियं शान्तम्[3]' इति श्रुतेः । न हि शुक्लः कृष्ण इति वा गुणतो ज्ञेयत्वम्, निर्गुणत्वात् 'केवलो निर्गुणश्च[4]' इति श्रुतेः । नापि धनी गोमानिति वा संबन्धतो ज्ञेयत्वम्, अद्वैतत्वात् 'एकमेवाद्वितीयम्[5]' इति श्रुतेः । तद्विलक्षणत्वेन ज्ञेयत्वं सिद्धमित्यभिप्रेत्य सर्वप्रत्यगभेदेन ज्ञेयत्वं प्रत्यादिशति—

[1] बृ ३, ८, ८
[2] के, १, ४
[3] श्वे, ६, १९
[4] श्वे ६, ११
[5] छा, ६, २, १.

**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

सर्वत इति । यत्पाणिपादादिकरणसघाताद्य तद्धि क्षेत्रमुच्यते । क्षेत्र तत्कार्यसवन्धासर्वेऽपि तदुपाधिक इव यो ऽभिव्यक्ते स हि क्षेत्रज्ञ पर मात्मा तदारोपितक्षेत्रोपाधे मिथ्यात्वेन सदसद्विलक्षण क्षेत्रज्ञयाथाऽऽत्म्य ज्ञेयत्वेन व्यपदिश्यते, तस्यन्द्रियद्वयागोचरत्वेन निष्प्रपञ्चत्वात् । तदधि गमाय खलु 'अध्यारोपापवादाभ्या निष्प्रपञ्च प्रपञ्च्यते' इति सप्रदायविदा वचन प्रवृत्तम् । क्षेत्रजातस्य मिथ्यात्वे ऽपि क्षेत्रज्ञयाथाऽऽत्म्याधिगमोपायत्वात तदुपाधिकचैतन्याधिगमे निरुपाधिकचैतन्यावगमो भवेदिति सोपाधिक वैराज भावमाचष्टे—सर्वत इति । सर्वक्षेत्रानुस्यूतत्वेन सर्वत पाणय पादाश्चा स्यति यद्वैराज तत्त्व तत्सर्वत पाणिपादम् । तथा सर्वत अक्षीणि शिरासि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम् । सर्वत श्रुति श्रवणेन्द्रिय तदस्यति श्रुतिमत् । एव जीवलोके सर्वमावृत्य व्याप्य यत्तिष्ठति तदेतद्वैराज ब्रह्म सर्वोपेयमूतक्षेत्रज्ञयाथाऽऽत्म्योपायत्वात् ज्ञेयमित्युच्यते ॥ १३ ॥

क्षेत्रज्ञे सर्वक्षेत्राध्यारोपात तद्वत्ता स्यादित्यपेक्षायामाह—

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**

सर्वेति । सर्वाणि च बाह्यज्ञानकर्मेन्द्रियाण्यन्तरिन्द्रियाणि च सर्वेन्द्रियाणि तेषा गुणा शब्दादयो वचनादय सकल्पादयश्च तै श्रोत्रेत्यादिना ऽवभासत इति सर्वेन्द्रियगुणाभासम्, सर्वेन्द्रियव्यापृतवत् ज्ञेयत्वात् 'ध्यायतीव लेलायतीव' इति श्रुते । कथमेवमवगम्यत इति

तत्राह—सर्वेति । सर्वेन्द्रियविवर्जितं सर्वकरणैरव्यापृतमपि तत्तत्करणव्या-
पृत्यास्पदत्वात्, तथा च श्रुतिः—

'अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्य वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्'[1]

इति । सर्वेन्द्रियविवर्जितत्वेनापाणिपादत्वे ऽपि जवनादिक्रियावत्त्वदर्श-
नात् सक्रियं ब्रह्मेति चेन्न, 'अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् ।
अग्रीवः प्रत्यमुञ्चत् । तमजिह्वो असश्चत'[2] इत्यादिश्रुतिवदस्याः श्रुते
र्ज्ञेयस्याक्रियत्वबोधकत्वात् । तथा ऽपि ज्ञेयस्योपाधियोगेन तत्सक्ति
स्यादिति तत्राह—असक्तमिति । व्यावृत्तघटाद्यनुवृत्तव्योमवत् स्वव्यावृत्त-
क्षेत्रतत्कार्यसंश्लेषायोगात् । तथा सति सर्वास्पदत्वं कुत इति तत्राह—
सर्वभृदिति । यतो मृगतृष्णिकाऽऽदि निरास्पदत्वेन भात्यतः सर्वं बिभर्तीति
सर्वभृत् । सर्वत्र सद्रूद्ध्यनुगमात् सर्वास्पदं चेद्ब्रह्म सगुणं स्यादिति तत्राह—
निर्गुणमिति । स्वभिन्नसर्वाभावेन तदास्पदत्वस्य मृषात्वान्निरास्पदमपि
सन्निर्गुणं ब्रह्म स्वभावतः सत्त्वरजस्तमोगुणानां भावाभावोपलब्धृत्वात्
गुणभोक्तृ चेत्युपचर्यते । अतो न निर्गुणत्वव्याहतिः ॥ १४ ॥

इतो ऽपि सदसद्विलक्षणत्वेन ज्ञेयं ब्रह्मास्तीत्याह—

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥**

[1] श्वे, ३, १९.
[2] तै, आ, प्र, १

बहिरिति। स्वाविद्याकल्पितदेहमपेक्ष्य त्वगिन्द्रियार्थनाद बहिरुच्यते। लिङ्गदेहमपेक्ष्य प्रत्यगात्मपर्यन्तमन्तरच्यते। चेतनाचेतनाना भूताना बहिरन्तश्च कटकमकुटकुण्डलानुस्यूतसुवर्णवदवस्थितम्, तिष्ठत्येव बहिरन्तस्तदन्तराले नास्तीति चेदुच्यते, सैन्धवघनवत् सर्वत्रैकरसत्वात् बहिरन्तरिव तदन्तराले ऽप्यनुस्यूतमित्यर्थः। किं च तदेवाचरं स्थावरं चरमेव च जङ्गमं भूतजातं कार्यजातस्य कारणानतिरिक्तत्वात्। तथा चेत् सर्वैरिदमित्थमिति किं न ज्ञायते? उच्यते। यथा व्योमतत्त्वमविदुषा सर्वासङ्गत्वेन ज्ञेयमपि व्योमाविज्ञेयं भवति। तथा ऽविदुषा स्वेन रूपेण ज्ञेयमपि व्योम्नो ऽप्यन्तरतमत्वेन सुसूक्ष्मत्वात् तदविज्ञेयं भवति। विदुषा तु 'ब्रह्मैवेदं सर्वम्'[1] 'आत्मैवेदं सर्वम्'[2] इत्यादिप्रमाणदर्शित्वात्, नित्यविज्ञातं स्वरूपेण ज्ञातुं शक्यत्वात्, तत्पुनरविदुषा दूरस्थम्। आत्मभूतमप्यनन्तकोटियोजनान्तरितमिव स्थितत्वात्, तत्पुनर्विदुषा त्वन्तिके च, नित्यसन्निहितप्रत्यगभिन्नत्वात्;

> 'तदेजति तन्नैजति तद् दूरे तद्वन्तिके।
> तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः[3]॥'

इति श्रुतेः॥ १५॥

सर्वविलक्षणत्वेन ज्ञेयतासिद्ध्यै हेत्वन्तरमाह—

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च॥ १६॥**

[1] मु, २, २, ११
छा, ७, २५, २
[3] ई. ५

अविभक्तमिति । चेतनाचेतनात्मकेषु भूतेष्वविभक्तं कारणात्मनैकत्वात् कार्यात्मना विभक्तं प्रतिशरीरं भिन्नमिव स्थितम् । इवशब्दस्वारस्यादात्मभेदकल्पने घटादेरिवानात्मत्वं स्यात्, घटाद्यवच्छिन्नव्योमवदात्मैकत्वं द्योत्यते । यदेवंप्रकारेण स्थितं भाति तदेतज्ज्ञेयम् । स्थितिकाले भूतानि बिभर्तीति भूतभर्तृ च विष्णुरूपेण तत्पालकत्वात्, प्रलयकाले च सर्वं ग्रसति इति ग्रसिष्णु रुद्रात्मना ग्रसनशीलत्वात्, सृष्टिकाले कार्यात्मना प्रभवतीति प्रभविष्णु च चतुराननात्मना प्रभवनशीलत्वात् । न च कार्यकारणयोर्भेदात् नाद्वैतसिद्धिरिति वाच्यम् । कार्यमात्रस्य कारणविवर्तत्वात् यथा ऽनुवृत्तरज्जौ व्यावृत्तसर्पादिकमनुवृत्तरज्ज्वतिरेकेण निरूपयितुमशक्यम्, तथैवानुवृत्तब्रह्मातिरेकेण व्यावृत्तकार्यजातस्य निरूपयितुमशक्यत्वात् नाद्वैतत्वव्याहतिरित्यर्थः ॥ १६ ॥

इतश्च क्षेत्रज्ञस्य सर्वावभासकत्वेन तमसः परत्वेन ज्ञेयत्वं स्फुटयति—

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥**

ज्योतिषामिति । नक्षत्रचन्द्रार्काग्निज्योतिषामपि ज्योतिः सर्वप्रकाशकत्वात् 'येन सूर्यस्तपति तेजसेद्धः[1]' 'तस्य भासा सर्वमिदं विभाति[2]' इति श्रुतेः । ज्ञेयस्य ज्योतिषा ज्योतिष्ट्वे तत्कुत्रासनमर्हतीति तत्राह— तमसः परमिति । तमसः स्वाज्ञानतत्कार्यात्परत्वेन विभानात् तमसः परमुच्यते, 'आदित्यवर्णं तमसः परस्तात्' इति मन्त्रवर्णात् । विशुद्धसत्त्व-

[1] तै. स. ३. १२. ९७.
[2] कठ. ५. १५.

बुद्धिवृत्तावभिव्यक्तं ज्ञानममानित्वादिज्ञानसाधनैकलभ्यत्वात् ज्ञानगम्यं क्षेत्रज्ञयाथाऽऽत्म्यं ज्ञेयम्। तत्कुत्रोपलभ्यत इति तत्राह—हृदीति। सर्वस्य प्राणिजातस्य हृदि प्रत्यगभेदेन विशेषतस्तिष्ठतीति विष्ठितम्। सर्वेणापि तत्रैवोपलभ्यमानत्वादित्यर्थः॥ १७॥

क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यस्वरूपमुक्त्वा तज्ज्ञानफलमुपसंहरति—

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ १८॥**

इतीति। इत्येवमुक्तप्रकारेण महाभूतादि धृत्यन्तं क्षेत्रममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञानमनादिमदित्यादि तमसः परमित्यन्तं ज्ञेयं समासतो मयोक्तम्। एतावान् हि सर्ववेदान्तार्थो गीतार्थश्च। तत्र को ऽधिक्रियत इति तत्राह—मद्भक्त इति। ब्रह्मादिस्तम्बान्तदेहिके मयि समर्पितसर्वात्मभावो मद्भक्तः सन्नेतद्यथोक्तं क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यं विज्ञाय प्रत्यगभिन्नतया मद्रूपेणावस्थानं मद्भावो मोक्षः, तस्मै मद्भावायोपपद्यते मुक्तो भवतीत्यर्थः॥ १८॥

सप्तमाध्याये परमेश्वरसंबन्धिन्यपरा परेति क्षेत्रक्षेत्रज्ञस्वरूपिणी द्वे प्रकृती उपन्यस्ते, ताभ्यामेव हीश्वरस्येश्वरत्वम् 'एतद्योनीनि भूतानि' इति प्रकृतिद्वययोनित्वमुक्तम्। तत्प्रकृतिद्वयस्य स्वाज्ञानकालमारभ्य स्वज्ञानावधिस्थायित्वेनानादित्वमाचष्टे—प्रकृतिमिति पञ्चभिः—

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥ १९॥**

प्रकृतिमिति । क्षेत्रस्वरूपामपरप्रकृतिं परप्रकृतिरूपिणं पुरुषं क्षेत्राभिमानिनं जीवं चैवोभावपि प्रकृतिपुरुषावनादी इति विद्धि । तयोः स्वाज्ञानकालमारभ्य स्वज्ञानाविर्भावपर्यन्तस्थायित्वादनादित्वमापेक्षिकम् । तयो पारमार्थिकानादित्वे ज्ञानकोट्या ऽपि निवृत्त्यसंभवात् तावदेव हीश्वरस्येश्वरत्वं यावत्प्रकृतिद्वयमधिष्ठाय जगदाविर्भावतिरोभावहेतुत्वमनुभवति । तत परं तस्यैव कार्यकारणभावविकलब्रह्ममात्ररूपत्वात् । प्रकृतिपुरुषयोः पारमार्थिकानादित्वं केचिदामनन्ति, तत्कृतमेव जगत् नेश्वरस्य तद्धेतुत्वमिति च तदसत् । अनृतजडदु खात्मकजगद्वयतिरेकेण प्रकृतिद्वयस्य मृग्यत्वात् जडत्वकिंचिज्ज्ञत्वविशिष्टप्रकृतिद्वयस्य कार्यकारणताऽसंभवो कर्मकर्तृविरोधात् । तस्मात्प्रकृतिद्वयातिरिक्त परमात्मा प्रकृतिद्वयमवष्टभ्य जगदुत्पत्तिस्थितिलयहेतुरीश्वरो ऽस्तीति मन्तव्य । प्रकृतिद्वयपारमार्थिकानादित्वस्य पुरस्तादेव प्रतिहतत्वात् स्वाज्ञानस्य संसारदशामारभ्य स्वाज्ञानतत्कार्यनिवृत्तिपर्यन्तं बन्धमोक्षादिव्यवहारसिद्धचै प्रकृतिद्वयस्यानादित्वं भगवद्गुणस्पष्टाकाराभ्यमङ्गीकृतमित्यर्थ । क्षेत्रस्वरूपप्रकृते. विकारयोनित्वं दर्शयति—विकारामिति । निर्विकारेश्वरस्य विकारकारणशक्ति प्रकृति त्रिगुणात्मिका माया संभवो येषां बुद्धयादिदेहपर्यन्तविकाराणा सुखदु खमोहात्मकत्वेन परिणतगुणाना च तान्प्रकृतिसंभवानिति विकाराश्च गुणाश्चैव विद्धि जानीहि ॥ १९ ॥

ईश्वरस्य निर्विकारत्वनिर्गुणत्वव्यापनार्थमपरप्रकृते कर्तृत्वम्, परप्रकृत्यात्मपुरुषस्य भोक्तृत्वं चाह—

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

कार्येति । कार्यं शरीरं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनो बुद्धिरहंकारश्चेति त्रयोदश करणानीत्युच्यन्ते । तेषां कार्यकरणानां कर्तृत्वमुत्पादयितृत्वम्, तस्मिन् कार्यकरणकर्तृत्वे हेतुः करणं प्रकृतिरुच्यते । कार्यकारणकर्तृत्वे इति पाठान्तरम् । तत्र कार्यं विकारः कारणं विकारी, तयोः कार्यकारणयोः विकारविकारिणोः कर्तृत्वे कार्यकारणकर्तृत्वे इति । यद्वा— ज्ञानकर्मेन्द्रियाणि दश मनश्चैकं शब्दादिविषयाः पञ्च आहृत्य षोडश विकाराः कार्यशब्देनोच्यन्ते । महानहंकारो भूततन्मात्राणीति सप्त प्रकृतिविकृतयः कारणशब्देनोच्यन्ते । तेषामारम्भकत्वात्प्रकृतेरित्यर्थः । प्राणधारणनिमित्तत्वात् पुरुषो जीवः । क्षेत्रज्ञः भोग्यानां सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । न चाचेतनायाः प्रकृतेः कर्तृत्वं तद्विपरीतस्य पुरुषस्य भोक्तृत्वं नोपपद्यत इति वाच्यम् । तयोः मिथः संनिधानात्कर्तृत्वभोक्तृत्वसंभवात् चेतनसंनिधानादचेतनप्रकृतेः कर्तृत्वमचेतनसंनिधानात् पुरुषस्यापि भोक्तृत्वं चोपपद्यते । क्रियानिर्वाहकत्वं हि कर्तृत्वम् । भोक्तृत्वं तु सुखदुःखसंवेदनम् । तस्य प्रकृत्यवच्छिन्नचेतनधर्मत्वादित्यर्थः ॥ २० ॥

पुरुषस्य निर्विकारत्वेन सद्बोधानन्दरूपत्वात् तस्य सुखदुःखभोक्तृत्वं किंनिमित्तमिति तत्राह—

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

पुरुष इति । हि यस्मात्पुरुषः भोक्ता क्षेत्रज्ञः स्वाविद्यारूपां प्रकृतिमात्मत्वेन गृहीत्वा तस्यां तिष्ठतीति प्रकृतिस्थो भवति । तस्मात् स्वाविद्याप्रकृतितो जातान् प्रकृतिजान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् भुङ्क्ते । अहं सुखी दुःखी मूढः पण्डितो वेत्यात्मानं मन्यत इत्यर्थः ।

प्रकृतिजगुणभोक्ता पुरुषो भवतु, तस्य जन्मकारणं किमिति तत्राह—गुणसङ्ग इति। अस्य पुरुषस्य स्वप्रकृतिजसुखादिगुणसङ्गो देवमनुष्यपश्वादिसदसद्योनिजन्मसु कारणं निमित्तम्। यद्वा—प्रकृतिजगुणसङ्गः सदसद्योनिजन्मस्वस्य संसारस्य कारणमित्यर्थः। 'स यथाकामो भवति तत्क्रतुर्भवति'[1] इत्यादिश्रुतेः ॥ २१ ॥

'यज्ज्ञात्वा मोक्ष्यसे ऽशुभात्' इत्यादिना क्षेत्रज्ञयाथाऽऽत्म्यवेदनं ज्ञानं तद्वेद्यं क्षेत्रज्ञशब्दवाच्यं ज्ञेयमिति चोक्तम्। तादृक्क्षेत्रज्ञस्य स्वयाथाऽऽत्म्याज्ञानलक्षणप्रकृतितत्कार्यसङ्गात्, संसारित्वं पुनः स्वयाथाऽऽत्म्यज्ञानकल्पितप्रकृतितत्कार्यतत्सङ्गतः स्वस्वरूपत्वं प्रतिपादयति—

**उपद्रष्टा ऽनुमन्ता च भर्ता भोक्ता महेश्वरः।**
**परमात्मेति चाप्युक्तो देहे ऽस्मिन्पुरुषः परः ॥ २२ ॥**

उपद्रष्टेति। यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु कश्चिद्यज्ञविद्याकुशलः ऋत्विगादिव्यापारगुणदोषाणामीक्षिता तथा कार्यकरणसंघातेषु व्यापृतेष्वपि तद्विलक्षणत्वेन स्वयमव्यापृतः तत्सर्वद्रष्टोपद्रष्टेत्युच्यते। यद्वा अन्तःकरणवृत्तयः द्रष्टारः, तद्विलक्षणत्वेन तदन्तरतमः प्रत्यगुपद्रष्टेत्युच्यते। प्रतीचो ऽन्तरतमाभावात् उपद्रष्टृत्वमुचितमित्यर्थः। यद्वद्यज्ञव्यापृतमृत्विगादिकं स्वयमव्यापृतो ऽपि व्यापृतवन्न निवार्यते तद्वत्स्वव्यापारप्रवृत्तं करणग्रामं तद्व्यापारान्न निवारयतीति अनुमन्तेत्युच्यते। अलुप्तनित्यचैतन्यस्वरूपेण स्वारोपितात्प्रपञ्चभरणात् भर्तेत्युच्यते। स्वभास्यबुद्ध्यादिप्रत्ययप्रासकत्वात् भोक्तेत्युच्यते। सर्वात्मकत्वात् महांश्चासौ सर्वनियामकत्वादीश्वरश्चेति महेश्वरः, त्रिविधपरिच्छेदविकलविभवत्वात् स्वाविद्याकल्पितानामव्यक्तादि-

[1] बृ. ४. ४. ५

युद्धयन्ताना परत्वेनोपदृष्टृत्वादिलक्षण पर इत्युच्यते । य क्षराक्षराभ्या मुत्कृष्ट उत्तम पुरुष स परमात्मेति चाप्युक्त श्रुतिभिरित्यर्थ । घासा वस्मिन् देह एवोपलभ्यते, विदुषा प्रत्यगभेदेनेत्यर्थ ॥ २२ ॥

स्वोक्तरीत्या क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्य यो वेत्ति तमेव स्तौति—

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानो ऽपि न स भूयो ऽभिजायते ॥ २३ ॥**

य इति । एवमुक्तप्रकारेण प्रकृतिप्राकृतसम्बन्धरहितत्वेन सत्तास्फूर्ति सुखस्वरूपत सर्वत्र पूर्णात् पुरुष क्षेत्रज्ञमयमहमस्मीति गुणै सत्त्वादिभि सह वर्तमाना स्वाविद्यालक्षणा प्रकृतिं च स्वविद्यया अभावमापादिता यो वेत्ति स मुनि सर्वथा सर्वप्रकारेण वर्तमानो ऽपि परेच्छया वर्तमान देहे स्थिते मृते वा न भूय पुन देहान्तरायाभिजायते, देहारम्भकहेत्व ज्ञानाभावात् । अपिशब्दत सुवृत्तो न जायत इति किमु वक्तव्यमिति द्योत्यते ॥ २३ ॥

क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यज्ञानसाधनविकल्पानाचष्टे—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥ २४ ॥**

ध्यानेनेति । केचिदुत्तमाधिकारिण क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यविद आ त्मना प्रत्यगभिन्नब्रह्मभावापन्नमनसा प्रत्यगात्मनि परमात्मान पश्यन्ति । केनेति तत्राह—ध्यानेनेति । ध्यान नाम इन्द्रियद्वयार्थादिन्द्रियद्वय सनिरुध्य ब्रह्मैवाहमहमेव ब्रह्मेति तैलधारावत् दीर्घघण्टानिनादवच्चाविच्छिन्न

प्रत्ययप्रवाहः । तेनोपायेन पश्यन्तीत्यर्थः । 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः[1]' इत्यादिश्रुतेः । मध्यमाधिकारिणं निर्दिशति—अन्य इति । अन्ये शास्त्रार्थज्ञानिनः शास्त्रार्थपर्यालोचनया त्रिगुणात्मकं क्षेत्रं तद्विलक्षणत्वेन तद्भावाभावप्रकाशकः क्षेत्रज्ञ इत्यनुचिन्तनं सांख्ययोगः, तेन सांख्येन योगेनात्मना ऽऽत्मानं पश्यन्तीत्यनुषज्यते । मन्दाधिकारिणो दर्शयति—अपर इति । अपरे योगिनः परमेश्वरार्पणधिया ऽनुष्ठीयमानं कर्मैव योगः, तेन कर्मयोगेण चित्तशुद्धिगम्यज्ञानद्वारा आत्मन्यात्मना आत्मानं पश्यन्तीति पूर्ववदनुषज्यते ॥ २४ ॥

अधमतराधिकारिणां मोक्षमार्गप्रवृत्तिं प्रत्याययति—

**अन्ये त्वेवमजानन्तः श्रुत्वा ऽन्येभ्य उपासते ।**
**ते ऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

अन्ये त्विति । अन्ये तु अत्यन्तं मन्दाधिकारिणः एवमुक्तप्रकारेणोपद्रष्टृत्वादिविशेषणविशिष्टं प्रत्यगभिन्नं परमात्मानं ध्यानाद्युक्तसाधनत स्वातन्त्र्येणाजानन्तः सन्तः अन्येभ्य आचार्येभ्य इदमेव त्वयैवं चिन्तनीयमिति श्रुत्वा तद्वाक्यावष्टम्भेन तदेवोपासते स्वतो विवेकाभावे ऽपि परोपदेशज्ञाने श्रद्दधानाः तदेव चिन्तयन्तीत्यर्थ । तेषां स्वतो विवेकविकलत्वात् परोपदेशप्रवृत्तिः नार्थवतीति तत्राह—ते ऽपीति । ते स्वतो विवेकविकला अपि मोक्षमार्गप्रवृत्तौ श्रुतिः श्रवणं परमयनं साधनं येषां ते श्रुतिपरायणाः सन्त मृत्युं मृत्युयुक्तं संसारमतितरन्त्यतिक्रामन्त्येव । अपिशब्दात् प्रमाणज्ञानकुशला मृत्युमतिक्रामन्तीति किमु वक्तव्यमिति द्योत्यते ॥ २५ ॥

[1] छा. ७. ६.

'यज्ज्ञात्वा मोक्ष्यसे ऽशुभात्' इति क्षेत्रज्ञयाथाऽऽत्म्यज्ञानं मोक्षसाधनमित्युक्तम्; तन्निरर्थः संसारः कस्मात् संभूत इत्याकाङ्क्षायां क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्याज्ञानादित्याचष्टे—

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम्।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

यावदिति। हे भरतर्षभ! यावत्स्थावरजङ्गमं यत्किंचित्सत्त्वं प्राणिजातं संजायते उत्पद्यते तत्सर्वं तमःप्रकाशवत् विरुद्धस्वभावयोः क्षेत्रक्षेत्रज्ञयोरितरेतराध्यासरूपसंयोगसंबन्धात् क्षेत्रक्षेत्रज्ञसंयोगात् जातमिति विद्धि। क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यापरिज्ञानात् जन्मादिः संसारो ऽविरलतापदं भजतीति विजानीहीत्यर्थः ॥ २६ ॥

क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्याज्ञानप्रभवसंसारनिवर्तकं तथाथाऽऽत्म्यज्ञानमुक्तमपि तस्यातिसूक्ष्मत्वेन दुर्विज्ञेयत्वादधिकारिभेदानुग्रहार्थं पुनः शब्दान्तरेण स्फुटयति—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥**

सममिति। समं निर्विशेषं यथा भवति तथा ब्रह्मादिस्तम्बान्तभूतेषु तिष्ठन्तं नित्यादिप्रलये सर्वभूतेषु विनश्यत्स्वप्यविनश्यन्तं षड्भावविकारवद्भूतजातात् परत्वेन विभानात् परमः सर्वोत्कृष्टश्चासावीश्वरश्चेति परमेश्वरः, तं प्रत्यगभेदेन यो मुमुक्षुः पश्यति स हि ब्रह्मात्मानं पश्यति। न चैवं मुमुक्षुरेव पश्यति नेतर इति को ऽयं नियमः सर्वो ऽपि पश्य-

तीति वाच्यम् । मुमुक्षितरस्य विपरीतदृष्टित्वात् । यथा तिमिरदृष्टिः स्वदृष्टिदोषादनेकं चन्द्रं पश्यति तमपेक्ष्य य एकचन्द्रदर्शी स पश्यतीति विशिष्यते, तथैव स्वदृष्टिदोषादनेकात्मदर्शिभ्य एकमविभक्तं सर्वप्रत्यगभेदेन समं ब्रह्मास्मीति यः पश्यति स पश्यतीति विशिष्यते, इतरो लोकस्तावत् पश्यन्नपि न पश्यति, स्वाज्ञानावृतदृष्टित्वादित्यर्थः ॥ २७ ॥

सम्यग्ज्ञानसाधनश्रवणादौ पुरुषं प्रवर्तयितुं तत्फलं स्तौति—

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मना ऽऽत्मानं ततो याति परां गतिम् ॥२८॥**

सममिति । सर्वत्र चेतनाचेतनात्मके जगति सत्तास्फूर्तिसुखरूपेण समं विषमभाववैकल्येन समवस्थितमीश्वरं कूटस्थरूपं परमात्मानं प्रत्यग्भावापन्नेनात्मना ऽन्तःकरणेन पश्यन्न हिनस्ति । ततः स्वात्माहिंसनात् परां गतिं मुक्तिं याति । न च स्वात्मानं स्वयमज्ञो ऽपि न हिनस्तीति वाच्यम्, अज्ञस्यात्महननोपपत्तेः । हन्तेस्तिरस्करणार्थत्वात् स्वाविद्याद्वय-तत्कार्यविलक्षणं प्रत्यगभिन्नं परमात्मानं तिरस्कृत्य स्वाविद्यातत्कार्यदेहादिकमात्मत्वेन परिगृह्य स्वात्मतिरस्करणदोषेण संसारचक्रे परिभ्रमति सर्वो ऽज्ञो लोकः । हिशब्दो ज्ञजनवैलक्षण्यद्योतक. । हिशब्दद्योतित अज्ञजनविलक्षणो मुमुक्षुः ब्रह्मात्मातिरस्करणात ब्रह्मात्मभावलक्षणा परा गतिं यातीति भावः ॥ २८ ॥

आत्मनो देहं प्रति धर्माधर्मादिवैचित्र्यतो विषमत्वात् कथं समत्वमित्याशङ्क्य घटं प्रत्यनुस्यूताकाशवत् सर्वदेहानुस्यूतप्रतीचस्त्वेकत्वात् सर्वभूतसमत्वं निरङ्कुशमित्याह —

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २९ ॥**

प्रकृत्येति । त्रिगुणात्मिका प्रकृतिः भगवतो माया 'माया तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुतेः । तया कार्यकरणरूपेण परिणतया प्रकृत्यैव च सर्वशः सर्वप्रकारैः मनोवाक्कायारभ्याणि कर्माणि क्रियमाणानि नात्मनेति यः पश्यति स परमार्थदर्शी । यथा प्रकृतिं काम्यादिकर्महेतुत्वेन पश्यति तथा सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं स्वात्मानमकर्तारं पश्यति ब्रह्मात्मनो निर्गुणत्वेन प्रकृतिप्राकृतास्पृष्टत्वादकर्तृत्वाद्युपपद्यतेतरामित्यर्थ ॥ २९ ॥

पुनरपि सम्यग्दर्शनफलं विधाऽन्तरेण व्यनक्ति—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

यदेति । यदा यस्मिन् काले भूताना चेतनाचेतनाना पृथग्भावं नानात्वम्, 'ब्रह्मैवेदं सर्वम्'[1] 'आत्मैवेद सर्वम्'[2] इत्यादिश्रुत्याचार्योपदेशमनु सर्वकल्पनाऽऽस्पदे ब्रह्मात्मन्येकस्मिंस्तिष्ठतीत्येकस्थमनुपश्यति । ब्रह्मात्मसत्ताऽतिरिक्तसत्ताशून्यत्वात् नानात्वस्येत्यर्थ । तदा तस्मिन् काले तत प्रत्यगभिन्नपरमाद्वैतब्रह्मसम्यग्दर्शनादेव च त्रिविधपरिच्छेदशून्यत्वेन भूमात्मरूपत्वात् विस्तारं ब्रह्म सपद्यते ब्रह्मैव भवति । एवचशब्दाभ्यां सम्यग्ज्ञानेतरसाधनाना ब्रह्मभावहेतुत्वं द्योत्यते । 'तदेव विद्वानमृत इह-

[1] मु २, २, ११.
[2] छा, ७, २५, २

भवति' 'ज्ञानादेव तु कैवल्यम्' 'नान्यः पन्था विमुक्तये' इत्यादिश्रुतिस्मृतिभ्यः ॥ ३० ॥

यथा क्षीरस्य पवित्रत्वे ऽपि सुराभाण्डसम्पर्शादपवित्रता तथा ऽऽत्मनो ऽपि देहेन्द्रियादिसंस्पर्शादपवित्रतेति तत्राह—

**अनादित्वान्निर्गुणत्वात्परमात्मा ऽयमव्ययः ।**
**शरीरस्थो ऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

अनादित्वादिति । यद्व्यादिमत्तत्स्वेनात्मना व्येति सावयवत्वात् । यस्यादि कारणं नास्ति सो ऽनादिः, तद्भावो ऽनादित्वम्, तस्मादनादित्वात् सभूतिप्रयुक्तव्ययशून्य इत्यर्थः । सगुणं वस्तु गुणव्ययाद्व्येति । अयं तु निर्गुणत्वात् न व्येति । स्वतः परतो वा व्ययो ऽस्य न विद्यत इत्यव्ययः । अव्यक्ताद्विदेहान्तात्परत्वेन विभानात्परमात्मा सर्वगतत्वे ऽप्यात्मनः शरीरेषु पलभ्यिभवतीति शरीरस्थ इत्युच्यते, तथा ऽपि न करोति किंचिदपि कर्म, कर्माकरणादेव तत्फलेन न लिप्यते । यः करोति स हि कर्मफलेन लिप्यते । यतो ऽयमकर्ता अतो न लिप्यते । क्षीरसुराभाण्डयोर्मूर्तद्रव्यत्वेन सश्लेषात् क्षीरस्यापवित्रतोचिता । क्षेत्रक्षेत्रज्ञयोर्मूर्तामूर्तत्वेन घटाकाशयोरिव सश्लेषायोगान्नापवित्रताऽवकाश इति भावः । कः पुनरसौ शरीरस्थः कर्म करोति तेन लिप्यत इत्युच्यते । स तावच्छरीरी परस्माद्भिन्नो यदि स्यात्तदा 'क्षेत्रज्ञं चापि मां विद्धि' इति क्षेत्रज्ञब्रह्मत्वमनुपपन्नम् । यदि क्षेत्रज्ञादन्यः ससारी न स्यात् तदा करोति लिप्यते इत्याद्यनुपपन्नतरं भवेत् । तथा सति करोति लिप्यत इति व्यवहृतिः कथं प्रवर्तत इत्याशङ्कायां पूर्वमेव भगवतोक्तम् 'स्वभावस्तु प्रवर्तते' इति । अविद्यामात्रस्वभावः करोति लिप्यत इति व्यवह्रियते, न परमार्थतो ऽव्यवहार्ये

क्षेत्रज्ञे व्यवहार संभवति 'अमात्रश्चतुर्थो ऽव्यवहार्य प्रपञ्चोपशम शिवो ऽद्वैत'[1] इत्यादिश्रुते । यत एवमत परमात्मदर्शनेन तिरस्कृताविद्या-तत्कार्याणा परमहंसपरिव्राजकाना कर्माधिकारस्तत्र तत्र निराकृतः 'तस्य कार्यं न विद्यते' 'ज्ञाने परिसमाप्यते' इत्यादिनेत्यर्थ ॥ ३१ ॥

किमिवात्मा न करोति न लिप्यत इत्यपेक्षायामाकाशदृष्टान्तेनात्मनो निर्लेपत्व प्रकटयति—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथा ऽऽत्मा नोपलिप्यते ॥ ३२ ॥**

यथेति । यथा वाय्वाद्यपेक्षया सौक्ष्म्यात् स्वकार्यवाय्वाद्यनुस्यूतत्वात् भूताकाशं सर्वगतमपि पङ्कादिभिर्नोपलिप्यते असङ्गत्वात्, तथा ऽय ब्रह्मात्मा देहे देहोपलक्षिताविद्यापदे सर्वत्रावस्थितो ऽपि तद्गतानृतजडदु खैर्नोप लिप्यते । स्वसत्यास्फूर्तिसुखकल्पितानृतजडदु खत्वादित्यर्थ ॥ ३२ ॥

आकाशदृष्टान्तेनात्मनो निर्लेपत्वमुक्त्वा रविदृष्टान्तेन स्वभास्यधर्म-शून्यत्वमाह—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

यथेति । हे भारत! यथा रविरेको ऽपि सन्निम परिदृश्यमान कृत्स्न लोक प्रकाशयति तथा ऽय क्षेत्री प्रत्यगभिन्नपरमात्मैको ऽपि सन्

[1] मा, ११

महदादिधृत्यन्तमव्यक्तादिस्थावरान्तं च कृत्स्नमिदं क्षेत्रं प्रकाशयति रविवत् प्रकाश्यगतधर्मैर्न लिप्यत इत्यर्थः ॥ ३३ ॥

क्षेत्राध्यायार्थं तज्ज्ञानफलं चोपसंहरति—

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥ इति ।**

इति श्रीमद्भगवद्गीतासु० क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशो ऽध्यायः ।

क्षेत्रेति । ये मुमुक्षवः पुरुषाः श्रुत्याचार्यप्रसादलब्धक्षेत्रक्षेत्रज्ञयाथा-ऽऽत्म्यदर्शनं ज्ञानं तदेव चक्षुस्तेन ज्ञानचक्षुषा ऽनृतजडदुःखात्मकं क्षेत्रम्, तद्विपरीतत्वेन क्षेत्रज्ञः सच्चिदानन्दात्मक इति क्षेत्रक्षेत्रज्ञयोरेवमन्तरमित-रेतरवैलक्षण्यं स्वप्रकृतितो भवन्तीति चेतनाचेतनात्मकानि भूतानि प्रकृतिः स्वाविद्या, तेषां तस्याः भूतप्रकृतेः स्वविद्यातो मोक्षणं च विदुर्जानन्ति पश्यन्तीत्यर्थः । ते पुरुषाः स्वाविद्याद्वयतत्कार्यजातात् परत्वेन विभातं परं ब्रह्म प्रत्यगभेदेन यान्ति । विदेहमुक्ता भवन्तीत्यर्थः । इतिशब्दः अध्याय-परिसमाप्तिद्योतकः ॥ ३४ ॥

क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्यावबोधनयनास्त्यज ।
पश्यन्ति यत्पदं तन्मे प्रसीदतु निरन्तरम् ॥

इति श्रीमद्भगवद्गीताऽर्थप्रकाशिकायां त्रयोदशो ऽध्यायः ॥

# चतुर्दशोऽध्यायः

गुणत्रयात्मकं द्वैतमद्वैत निर्गुणात्मकम् ।
निर्गुणाद्वयबोधाय गुणाध्यायो निगद्यते ॥

'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥' इत्यादिना क्षेत्रक्षेत्रज्ञसयोगोऽखिलजगन्निमित्तकारणमिति, 'पुरुष प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥' इति श्लोकेन गुणसङ्ग ससारकारणमिति चोक्तं त्रयोदशाध्याय । तत्र किं निरीश्वरसाख्यानामिव क्षेत्रक्षेत्रज्ञसयोग, अथ सेश्वरसाख्यानामिव परमेश्वरतन्त्रता? गुणसङ्ग कीदृश ? के वा गुणा ? कथ बध्नन्ति? यदात्मक द्वैत वदन्ति तद्विपरीताद्वैतात्मावगतये गुणमोक्षण कथम्? गुणातीतस्य लक्षण कीदृशम्? इत्याकाङ्क्षापूरणार्थं चतुर्दशाध्याय श्रीभगवानुवाच--पर भूय इति द्वाभ्याम्--

श्रीभगवानुवाच--

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

परमिति । यद्वक्ष्यमाण ज्ञान ज्ञात्वा ऽपरोक्षीकृत्य ब्रह्मात्मैक्यमनन शीला मुनय सन्यासिन इत क्षेत्राभिमानात परा प्रकृष्टा सिद्धिं मुक्ति

गताः प्राप्ताः, तदिदं ज्ञानं पूर्वेष्वध्यायेषु असकृदुक्तमपि तस्य परमसूक्ष्मवस्तुगोचरत्वेन दुर्विज्ञेयत्वात् भूयः पुनरपि प्रकर्षेण वक्ष्यामि । तुभ्यमिति शेषः । श्रोतारमभिमुखीकर्तुं परोत्तमशब्दाभ्यां ज्ञानं स्तौति—परमित्यादि । परब्रह्मविषयकत्वात्परम् । सर्वेषां यज्ञतपोदानतत्फलज्ञेयविषयाणां ज्ञानानामिदमेव ज्ञानमुत्तमम्, सर्वोत्कृष्टकैवल्यफलत्वात् ॥ १ ॥

ज्ञानफलस्य कर्मफलवैलक्षण्यमुपलम्भयति—

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गे ऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

इदमिति । वक्ष्यमाणमिदं ज्ञानं तत्साधनश्रवणादिकमुपाश्रित्यानुष्ठाय मद्व्यतिरिक्तमणुमात्रमपि न विद्यत इति ममेश्वरस्य यो धर्मः, सत्तासामान्यस्वाभावो हि स धर्मः, तस्य भावः साधर्म्यं सत्तासामान्यस्वरूपावस्थानलक्षणं कैवल्यमागताः सन्तः ब्रह्मादीनां सर्गे नोपजायन्ते । चतुर्विधप्रलये ऽपि न व्यथन्ति च । संभूतिप्रलयहेतुस्वाज्ञानाभावादित्यर्थः ॥२॥

एवं ज्ञानप्रशंसया श्रोतारमभिमुखीकृत्य क्षेत्रक्षेत्रज्ञसंयोगो निखिलकारणमिति प्रकाशयति—

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

ममेति । हे भारत! ममेश्वरस्य सत्ताऽतिरिक्तसत्ताशून्यत्वात् मदीया वैष्णवी त्रिगुणात्मिका प्रकृतिर्माया योनिः सर्वभूतकारणत्वात् स्वकार्येभ्यो महत्त्वान्महत्, स्वविकाराणामुपबृंहणात् ब्रह्मेति प्रकृतिरेव विशेष्यते ।

तस्मिन् योनौ महति ब्रह्मणि चतुराननादिसर्वभूतजन्मकारणं गर्भं बीजं दधामि । निक्षिपामीत्यर्थः । क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिसंपन्नत्वात् ईश्वरो ऽहमविद्याकर्मोपाधिकं क्षेत्रज्ञं क्षेत्रेण संयोजयामीति भावः । ततस्तस्मात् गर्भनिधानात् चतुराननोत्पत्तिद्वारेण सर्वभूतानां संभव उत्पत्तिर्भवति ॥ ३ ॥

न केवलं सृष्टिकाल एव मदधिष्ठितप्रकृतिद्वयतो भूतोत्पत्तिः, किं तु सर्वदैवेत्याह—

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

सर्वेति । हे कौन्तेय ! देवमनुष्यपश्वादिषु सर्वयोनिषु देहविशेषा या मूर्तयः संभवन्ति तासां मूर्तीनां सर्वावस्थत्वेन महद् ब्रह्म प्रकृतिर्योनिः कारणं सर्वमूर्तगर्भधारणात् अहमीश्वरो बीजप्रदः पिता गर्भाधानकर्तृत्वात्, परमेश्वरादेव क्षेत्रक्षेत्रज्ञसयोगतः सर्वोत्पत्तिदर्शनात् । स एव स्वाविद्यया ससरतीत्यर्थादुक्त भवतीति भावः ॥ ४ ॥

एवमीश्वराधीनक्षेत्रक्षेत्रज्ञसयोगतो भूतोत्पत्तिं निरूप्येदानीं प्रकृतिगुणसयोगेन पुरुषस्य ससारित्वं साधयति—सत्त्वमित्यादिभिश्चतुर्दशभिः—

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

सत्त्वमिति । हे महाबाहो ! सत्त्वं रजस्तम इत्येतन्नामानो गुणा न द्रव्याश्रिता गुणगुणिनोरभेदस्य विवक्षितत्वात् । गुणा इव नित्यपरतन्त्रास्ते कुत उद्भूता इति तत्राह—प्रकृतीति । गुणानां साम्यावस्था प्रकृतिर्माया-

शक्तिः संभवो येषां ते प्रकृतिसंभवा गुणा देहे शरीरे देहिनं देहस्वामिनं क्षेत्रज्ञं स्वतः परतो वा न व्येतीत्यव्ययमपि तं निमित्तीकृत्याभिव्यक्ता भवन्तीति निबध्नन्तीत्युच्यते । निबध्नन्तीवेत्यर्थः । देहिनो निर्गुणत्वात् तं कथं स्वकार्यसुखदुःखमोहपाशैः स्प्रष्टुमपि पारयन्ति ॥ ५ ॥

गुणानां मध्ये सत्त्वलक्षणं तन्निबन्धनप्रकारं चाह—

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

तत्रेति । हे अनघ ! गुणानां मध्ये स्फटिकमणिवत् निर्मलत्वात् स्वेतरगुणप्रकाशकमनामयं निरुपद्रवं यथा भवति तथा देहे देहिनं बध्नाति । कथम् ? स्वकार्येण गुणेन सुख्यहमिति यः सङ्गस्तेन गुणसङ्गेन, सत्त्वपरिणामो ज्ञानमहं ज्ञानीति ज्ञानसङ्गेन च निबध्नातीत्यर्थः । क्षेत्रधर्मत्वेन विषयभूतयोः सुखज्ञानयोः विषयिणि क्षेत्रज्ञात्मनि संश्लेषमात्रमिदव सुखं ज्ञानं च मे संजातमिति या धीः सैषा क्षेत्रक्षेत्रज्ञाविवेककरी मृषैव । न हि विषयभूतक्षेत्रधर्मो विषयिणं क्षेत्रज्ञं स्प्रष्टुं पारयति । येनाहं सुखी दुःखीत्यभिमन्ये तत्सर्वं मृषेत्यर्थः ॥ ६ ॥

रजोलक्षणं किम् ? तत्कथं वा बध्नातीत्यत आह—

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

रज इति । हे कौन्तेय ! अप्राप्तार्थविषयको ऽभिलाषस्तृष्णा, प्राप्तार्थे ऽधिकप्रीतिः सङ्ग , तयोः समुद्भवो यस्मात्तत् तृष्णासङ्गसमुद्भवम्; रज्यते

ऽनेन पुरुष इति रज राग असावात्मा ऽभ्येति गैरिकादिधातुवद्रञ्ज नात्मकत्वात् रागात्मक विद्धि । तद्रजो देहिन देहस्वामिन कर्तृत्वादि धर्मवृणास्पृष्ट दृष्टादृष्टार्थकर्मसु सङ्ग आसक्तिस्तेन कर्मसङ्गेन कर्मेद करोमी त्यभिमानेन निवध्नाति प्रवर्तयतीत्यर्थ ॥ ७ ॥

किंलक्षण तम कथ पुरुष बध्नाति ? तत्राह—

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

तम इति । हे भारत ! तमस्तु तृतीयो गुण सर्वेषा देहिना मोहन मोहकरम् । अतस्मिंस्तद्भावकरमज्ञानात्ताज्जातमज्ञानज विद्धि । तच्चम देहिनम् अनवधान प्रमादश्च अनुद्यम आलस्य च बुद्धेस्तमसि लयो निद्रा च, ताभि प्रमादालस्यनिद्राभि निवध्नाति गाढमावृणोतीत्यर्थ ॥ ८ ॥

एवमुक्ताना गुणाना मध्ये कस्मिन्कार्ये कस्य गुणस्योद्रेक इत्या- शङ्क्य पुनर्गुणव्यापर सक्षेपत आचष्टे—

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

सत्त्वमिति । हे भारत ! सत्त्व सत्त्वगुण दु खमोहहेतौ सत्यपि पुरुष सुखे सञ्जयति सश्लेषयति । स्वात्मसुखमपि विषयसुखाभिमुख करोतीत्यर्थ । रजो रजोगुण पुरुष सुखमोहहेतौ सत्यपि ऐहिकामुष्मिकसाध्ये कर्मणि सञ्जयति । अकर्तात्मान कर्तृत्वे नियोजयतीत्यर्थ । तमस्तु सुखदु खहेतौ सत्यपि सत्सङ्गोत्थज्ञानमावृत्याच्छाद्य प्रमादे सञ्जयति उत । निरावृतज्ञान सपन्नमपि आवृणोति जामिताऽऽदावपि नियोजयतीत्यर्थ ॥ ९ ॥

सत्त्वादय इतरेतरतिरोधानक्रमेण वा युगपद्वोद्भव्यन्त इत्याशङ्क्य सत्त्वादीनामितरेतराभिभवार्थं क्रमपक्षावष्टम्भेनोत्तरमाह—

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

रज इति। हे भारत! सत्त्वं सत्त्वगुणः रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य प्राण्यदृष्टवशात् भवति। ततः स्वकार्यसुखादौ पुरुषं संयोजयति। सत्त्वं तमश्चेति गुणद्वयमभिभूय रजो ऽपि भवति। ततः स्वकार्यतृष्णाऽऽदौ सञ्जयति। सत्त्वं रजश्चेति गुणद्वयमभिभूय तमो ऽपि भवति उद्रिक्तं भवति। ततः स्वकार्यप्रमादालस्यादौ सञ्जयति ॥ १० ॥

इदानीं सत्त्वादीनां लिङ्गानि दर्शयति—सर्वद्वारेष्विति त्रिभिः।

**सर्वद्वारेषु देहे ऽस्मिन्प्रकाश उपजायते।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥**

सर्वद्वारेष्विति। आत्मनो भोगायतने ऽस्मिन्देहे श्रोत्रादिद्वाराण्युपलब्धिसाधनानि, तेषु सर्वद्वारेषु अन्तःकरणस्य व्याप्तिः प्रकाश उपजायते। यदैव प्रकाशो ज्ञानाख्य उपजायते तदा ऽनेन प्रकाशज्ञानलिङ्गेन सत्त्वमित्युतापि विवृद्धमुद्भूतमुद्रिक्तं विद्यात् ॥ ११ ॥

उद्रिक्तरजसो लिङ्गमाह—

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**

लोभ इति। हे भरतर्षभ! रजसि विवृद्ध उद्रिक्ते सति, परद्रव्यलिप्सा स्वद्रव्यादित्सा वा लोभ, मुधाचेष्टाप्रवर्तनं प्रवृत्ति, नित्यनैमित्तिककाम्यप्रतिपिद्धकर्मणामुपक्रम आरम्भ, अनिगृहीतेन्द्रियत्वम शम, सर्वसामान्यवस्तुविषयतृष्णा स्पृहा, एतानि लिङ्गानि जायन्ते प्रादुर्भवन्ति ॥ १२ ॥

उद्रिक्ततमोलिङ्ग स्फुटयति—

**अप्रकाशो ऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

अप्रकाश इति। हे कुरुनन्दन! अप्रकाश मतिभ्रश, अप्रवृत्तिश्च शुभाशुभप्रवृत्त्यभाव, प्रमाद कर्तव्यार्थाद् भ्रश, मोहो मिथ्याऽभिनिवेश एव च तमसि प्रवृद्धे सत्येतानि लिङ्गानि जायन्ते। एतैर्लिङ्गै तमसो वृद्धि जानीयादित्यर्थ ॥ १३ ॥

मरणकाले विवृद्धाना सत्त्वादीनामपि फलविशेष विवृणोति— यदेति द्वाभ्याम्—

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**

यदेति। यदा सत्त्वे प्रवृद्धे वृद्धि गन तु सति देहभृदात्मा जीव प्रलय मरण याति तदोत्तमान् हिरण्यगर्भादीन् विदन्ती त्युत्तमविद, तेषा य लोका अमला सुखभोगस्थानविशेषास्तान् लोकान् प्रतिपद्यते ॥ १४ ॥

रजस्तमसोरुद्रेके मरणं प्रपन्नस्य फलविशेषं विवृणोति—

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

रजसीति । रजसि प्रवृद्धे सति देही प्रलयं गत्वा कर्मतत्फलसङ्गिषु मनुष्येषु जायते । तमसि विवृद्धे सति तथा प्रलीनो मृतो जन्तुः पश्वादिमूढयोनिषु जायते ॥ १५ ॥

इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारतो विचित्रफलहेतुत्वं प्रकटयति—

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

कर्मण इति । सुष्ठु कृतस्य निष्कामबुद्ध्या ऽनुष्ठितस्य कर्मणः सात्त्विकं चित्तनैर्मल्यं फलमिति विशुद्धचित्ता आहुः । रजसो राजसस्य कर्मणः प्रवृत्तत्वात् तत्फलं दुःखमाहुः । तमसस्तामसस्य कर्मणः अज्ञानं मूढत्वं फलमाहुः ॥१६॥

सत्त्वादिकार्यं व्यनक्ति—

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतो ऽज्ञानमेव च ॥ १७ ॥**

सत्त्वादिति । सत्त्वात् सत्त्वगुणोद्रेकप्रभवात्कर्मणः आत्मानात्मविवेकज्ञानं जायते । तस्य निरतिशयसुखं फलं भवति । रजसो दुःखहेतुत्वात् तत्पूर्वकस्य कर्मणः दुःखमेव फलं भवति । तमसस्तमउद्रिक्तकर्मणः प्रमादमोहौ फलं भवतः अज्ञानमेव च ॥ १७ ॥

सत्त्वादिप्रवृत्तिप्रधानानां फलभेदं प्रत्याययति—

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ १८॥**

ऊर्ध्वमिति। सत्त्वस्थाः सत्त्वगुणप्रधानाः पुरुषा ऊर्ध्वमुच्चस्थानं गच्छन्ति, देवलोकादिषूत्पद्यन्ते। राजसा रजोगुणप्रधानाः पुरुषा मध्ये तिष्ठन्ति, मनुष्ययोनिषु जायन्ते। जघन्यश्चासौ गुणश्चेति जघन्यगुणस्तमोगुण., तस्य वृत्तिः निद्राऽऽलस्यादिः, तस्मिन् तिष्ठन्तीति जघन्यगुणवृत्तिस्थाः तमोगुणप्रधाना मूढा अधो गच्छन्ति, पश्वादियोनिषूत्पद्यन्ते॥१८॥

'कारणं गुणसङ्गो ऽस्य सदसद्योनिजन्मसु' इति पूर्वाध्याये संक्षेपतो यो ऽर्थो ऽभिहित', तमेतमर्थं 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इत्यारभ्य सत्त्वादिगुणस्वरूपं गुणानां बन्धकत्वं तत्तद्गुणप्रधानस्य गतिरपि च एतत्सर्वं क्रमेण व्याख्यातम्। एतावती द्वैतनिष्ठा संसारगतिः। यत एतत्सर्वं क्षेत्रक्षेत्रज्ञयाथाऽऽत्म्याज्ञानकल्पितमतः सर्वं मिथ्यैव। ततः परं यद्वक्तव्यमद्वैतनिर्गुणब्रह्मात्मसम्यग्ज्ञानं तदुच्यते—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टा ऽनुपश्यति।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सो ऽधिगच्छति॥ १९॥**

नान्यमिति। द्रष्टा तत्त्वंपदलक्ष्यैक्यदर्शी विद्वान् यदा यस्मिन् काले देहेन्द्रियादिविषयाकारपरिणतेभ्य सत्त्वादिगुणेभ्यो ऽन्यं व्यतिरिक्तं कर्तारं नानुपश्यति। ब्रह्माज्ञानानन्तर्यद्योतको ऽनुशब्दः। अपि तु सत्त्वादिगुणा एव पुण्यपापकर्मणां कर्तार इति पश्यति। य एवं पश्यन् सत्त्वादिगुणेभ्य-

न्तत्कार्यदेहेन्द्रियादिभ्य पर तद्भावाभावप्रकाशक प्रत्यक्तत्त्व चशब्दात्तदभेदेन परतत्त्वमपि वेत्ति । तत्रैव स विद्वान् वासुदेव सर्वमिति मद्भाव प्रत्यगभिन्न ब्रह्मस्वरूपावस्थानलक्षण कैवल्यमधिगच्छति, सद्योमुक्तिमुपैतीत्यथ ॥ १९ ॥

कथ पुनर्गुणतत्कार्यविजृम्भितद्वैतभ्रान्तिमुन्मूल्य तद्विपरीतमद्वैतब्रह्मात्म भावमुपैतीत्यत आह—

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तो ऽमृतमश्नुते ॥ २० ॥**

गुणानिति । देहेन्द्रियाद्याकार समुद्भव परिणामो यषा गुणाना तान् देहसमुद्भवान् देहोत्पत्तिबीजभूतानेतान् त्रीनपि गुणानतीत्य देही देहातिरिक्तप्रत्यगभिन्नब्रह्मज्ञानी जन्म च मृत्युश्च जरा च दु ख च, तैर्जन्म मृत्युजरादु खै जीवन्नेव विमुक्त सन् अमृत भूमानन्दलक्षण कैवल्य मश्नुते ॥ २० ॥

गुणानेतानतीत्यामृतमश्नुत इति प्रश्नबीजमुपलभ्य गुणातीतलक्षण तदाचार गुणत्यागोपाय च बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥**

कैरिति । हे प्रभो ! कै कीदृशैरात्मन्युपलै लिङ्गै देही ब्रह्मात्म निष्ठ एतान् गुणानतीतो भवतीति गुणातीतलक्षणप्रश्न । किमाचार तदा

चार कीदृग् इति तदर्थाप्रश्न । कथं च केनोपायेन त्रीनप्येतान् गुणा-नतीत्य वर्तते ॥ २१ ॥

द्वितीयाध्याये स्थितप्रज्ञस्य का भाषेत्यादिप्रश्नानुरूपं प्रतिवचन-मुक्तमपि पुनर्विशेषबुभुत्सया पृच्छतीति तदभिप्रायानुरोधेन तल्लक्षणादिकं श्रीभगवानुवाच—प्रकाशं चेति सप्तभि । तत्रैकेन लक्षणमाह—

श्रीभगवानुवाच—

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

प्रकाशमिति । हे पाण्डव ! सर्वद्वारेषु देहे ऽस्मिन् इति पूर्वोक्त सत्त्वकार्यं प्रकाशं च, लोभ प्रवृत्तिरारम्भ इत्युक्त रज कार्यं प्रवृत्तिं च, अप्रकाशो ऽप्रवृत्तिश्चेत्युक्तं तम कार्यं मोहमेव च, इत्येव प्रवृत्तानि ममेदानीं सत्त्वप्रत्ययो जात तेनाहं स्वरूपसुखप्रथित स्याम्, ममेदानीं तु खात्मिका राजसी प्रवृत्तिरपवृत्ता तया ऽह स्वरूपस्तूर्या प्रचलित सन् घोरे कर्मणि प्रवर्तित, इदानीं मम सर्वानर्थकरस्तामस प्रत्यय उद्धृत तेनाह स्वरूप-सद्यःप्रशमुपेत्य संमूढो भवामीति न द्वेष्टि । सात्त्विकादिकार्याण्यात्मानं प्रत्युपरूप्य निवृत्तानि भूयो न काङ्क्षति । स्वात्मार्थमेव तल्लक्षण स्वात्मप्रत्यक्षत्वात् न हि स्वात्मविषय द्वेषमाकाङ्क्षा वा पर पश्यति सो ऽय गुणातीत उच्यत इति चतुर्थेनान्वय ॥ २२ ॥

एव स्वसंवेद्य गुणातीतलक्षणमुक्त्वेदानीं गुणातीत किमाचार इति द्वितीयप्रश्नप्रतिवचनमुपलम्भयति—उदासीनवदिति त्रिभि ।

## उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
## गुणा वर्तन्त इत्येव यो ऽवतिष्ठति नेङ्गते ॥ २३ ॥

उदासीनवदिति । यथोदासीनो न कस्यचित्पक्षमवष्टभ्य व्यवहरति तथा ऽयमुदासीनवदासीनो गुणातीतत्वोपायमार्गे स्थितः संन्यासी गुणैर्गुणकार्यैः सुखादिभिर्न विचाल्यते । कदाचिदपि प्रत्यक्परैक्यभावनातो न प्रच्यवत इत्यर्थः । तदेव व्यक्तीकरोति—गुणा इति । कार्यकरणविषयाकारतो ये गुणाः परिणताः ते खलु स्वस्वविषये प्रवर्तन्त इति यो ऽवतिष्ठति । यो ऽनुतिष्ठतीति वा पाठान्तरम् । एवमनुसंधानं कृत्वा स्वस्वरूपान्नेङ्गते न चलति, स गुणातीत उच्यत इत्युत्तरेणान्वयः ॥ २३ ॥

गुणातीतस्य लक्षणान्तरमाह—

## समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
## तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दाऽऽत्मसंस्तुतिः ॥ २४ ॥

समेति । समे दुःखसुखे यस्य स समदुःखसुखः साम्यब्रह्मात्मभावकवशितसुखदुःखवैषम्यत्वात्, अत एव स्वस्थः स्वे महिम्नि स्थितत्वात् । समानि लोष्टाश्मकाञ्चनानि यस्य स समलोष्टाश्मकाञ्चनः स्वातिरिक्तहेयोपादेयविकल्पत्वात्, तुल्ये सुखासुखमूले प्रियाप्रिये यस्य स तुल्यप्रियाप्रियः । अशरीरब्रह्मभावापन्नत्वात्, 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः'[1] इति श्रुतेः । स्वात्मनो निन्दा स्तुतिश्च यस्य तुल्या सो ऽयं तुल्यनिन्दाऽऽत्मसंस्तुतिः निन्दाऽऽद्यविषयत्वात् ।

[1] छा—८. १२. १.

एवंविशेषणविशिष्टा धीः यस्य स धीरो ब्रह्मात्मनिष्ठः, स गुणातीत उच्यत इत्यन्वयः ॥ २४ ॥

इतश्च गुणातीतत्वे हेत्वन्तरमाह—

**मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥**

मानेति । स्वसमगोष्ठ्यां बहुमत्यवमतिलक्षणयोः मानावमानयोः स्वहिताहितकारिणो मित्रारिपक्षौ, तयोर्मित्रारिपक्षयोरपि तुल्यः मानावमानहिताहितहेतुदेहादावात्मत्वात्मीयत्वाभिमानाभावात् । यद्यपि गुणातीतस्य मित्रादिप्रतिभासो नास्ति, तथा ऽपि वयमस्य मित्राण्यरयश्चेति परेषां प्रतिभासः संभवतीति कृत्वा तुल्यो मित्रारिपक्षयोरित्युक्तम् । इहामुत्रफलहेतुभूतानि सर्वाणि नित्यनैमित्तिककाम्यप्रतिषिद्धकर्माणि मनोवाक्कायत आरभ्यन्त इत्यारम्भाः, तान् सर्वारम्भान् परित्यक्तुं संन्यसितुं शीलमस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तातिरिक्तसर्वकर्मपरित्यागीत्यर्थः । एवंभूतो यः संन्यासी वर्तते स गुणातीत इत्युच्यते ॥ २५ ॥

'उदासीनवत्' इत्यादि 'गुणातीतः स उच्यते' इत्यन्तं गुणातीतलक्षणमुक्त्वेदानीं त्रीन् गुणान् कथमतिवर्तेत इति तृतीयप्रश्नस्योत्तरमाचष्टे—

**मां च यो ऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥**

मामिति । ब्रह्मात्मनिष्ठो यः संन्यासी कदाचिदपि यन्निष्ठातो न व्यभिचरति इत्यव्यभिचारः, तेनाव्यभिचारेण ब्रह्मैवाहमहमेव ब्रह्मेति ब्रह्मा-

सैवयभजन भक्ति, सैव योग, तेन भक्तियोगेन प्रत्यगभिन्नब्रह्मास्खलित सम्यग्ज्ञानेन, मा च। चशब्दो ऽवधारणार्थ। मामेव सर्वप्रत्यगभिन्नपरमात्मान नारायण सेवते। सो ऽयमेतान् सत्त्वादींस्त्रीन्गुणानसमतीत्य ब्रह्मणो भवन भूयो ब्रह्मभूय, तस्मै ब्रह्मभूयाय कल्पते। विमुक्तो भवतीत्यर्थ ॥ २६ ॥

एव यो मद्भावारूढ सन्मामुपास्ते तस्यैव प्रत्यगभिन्नब्रह्मरूपत्वात् सो ऽहमेवेति वदन्नध्यायार्थमुपसहरति—

**ब्रह्मणो हि प्रतिष्ठा ऽहममृतस्याव्ययस्य च।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥ २७॥ इति।**

इति श्रीमद्भगवद्गीतासु० गुणत्रयविभागयोगो नाम चतुर्दशो ऽध्याय ।

ब्रह्मण इति। हि यस्मात् प्रतीचि सर्व प्रतितिष्ठति पर्यवस्यतीति प्रतिष्ठा ऽह प्रत्यक्स्वरूपत्वात्। कस्य प्रतिष्ठा त्वमसीति तत्राह—ब्रह्मण इति। स्वयमेव सर्वस्वरूपेणोपबृहणात् ब्रह्म, तस्यत्यर्थ। किंविशेषण-विशिष्टस्येति तत्राह—अमृतस्येति। अविनाशिन मर्त्यधर्मविलक्षणत्वात् अव्ययस्याविकारिण व्ययास्पदविकाराभावात् शाश्वतस्य धर्मस्य ज्ञानयोग प्राप्यस्य सुखस्यैकान्तिकस्य भूमानन्दस्वरूपस्य ब्रह्मण परमात्मन प्रतिष्ठा ऽहम्। यदेतत्प्रत्यग्ज्ञान तेन खलु परमात्मा निश्चीयते। कुत एतदिति तत्रोच्यते। यया स्वशक्त्या भक्तानुग्रहार्थं ब्रह्म प्रत्यक्त्व गत सा शक्तिर्नैव, शक्तिशक्तिमतोरभेदात्। यद्वा स्वकार्यतातेनोपबृहणात् अविद्यापद ब्रह्मो च्यते। तस्याविद्यापदस्य ब्रह्मण प्रतिष्ठा ऽह त्रिपाद्ब्रह्मरूपत्वात्। तस्मा दमृतस्यामरणधर्मात्मकस्याव्ययस्य निर्विकारनिष्कलब्रह्मस्वरूपावस्थानलक्षणस्य कैवल्यस्य च प्रतिष्ठा ऽह मद्रूपावस्थानलक्षणकैवल्यस्य जीवन्मुक्तपूगगम्य

स्वात् शाश्वतानन्दलक्षणकैवल्यहेतुत्वात्तद्धर्मस्यापि शाश्वतत्वमुच्यते । यत शाश्वतस्य धर्मस्य च ज्ञाननिष्ठालक्षणस्य विदेहकैवल्यरूपेण प्रतिष्ठा ऽहमत तदीयसुखस्यैकान्तिकस्य च भूमानन्दकनल्पितविषयानन्दसततं प्रतिष्ठा ऽह निरतिशयानन्दसमुद्रत्वात् । इतिशब्द अध्यायपरिसमाप्त्यर्थ ॥ २७ ॥

परित्यक्ताखिलारम्भास्त्यक्त्वा त्रैगुण्यवैभवम् ।
यन्निर्गुण पद यान्ति तस्मै ब्रह्म प्रसीदतु ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकाया चतुर्दशो ऽध्याय ।

## पञ्चदशो ऽध्यायः

वैराग्यभक्तिसंयुक्तं ज्ञानं कैवल्यसाधनम् ।
इति संस्थापनार्थाय भवेत्पञ्चदशोद्यमः ॥

पूर्वाध्याये 'मां च यो ऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥' इत्युक्तम् । यत एवं कर्मज्ञानफलयोः मदायत्तता, अतो ये प्रत्यगभिन्नब्रह्मज्ञानलक्षणभक्तियोगेन मां सेवन्ते ते खलु गुणातीता भूत्वा कैवल्यं यान्ति । तादृशकैवल्यप्रापकमनन्यभक्तियोगलक्षणं सम्यग्ज्ञानं कीदृशमित्यपृष्टमपि तद्विवक्षया वैराग्याभावे सम्यग्ज्ञानानुदयात् तदर्थमध्यायादौ संसारं वर्णयन् सम्यग्ज्ञानं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

ऊर्ध्वमूलमिति । स्वाविद्याद्वयतत्कार्यविलक्षणत्वेन त्रिविधपरिच्छेदशून्यं पुरुषोत्तमतत्त्वमूर्ध्वमुच्यते । तदेव मूलमास्पदमधिष्ठानं यस्य संसारवृक्षस्य सो ऽयमूर्ध्वमूल·, तमूर्ध्वमूलम्,

'ऊर्ध्वमूलो ऽवाक्शाख एषो ऽश्वत्थ· सनातन·'

इति श्रुतेः । यस्याधोभागे महदहङ्कारतन्मात्रादयः शाखा इव विराजन्ते तमधःशाखम्, श्वः प्रभातपर्यन्तमपि स्थास्यतीति विश्वासानर्हत्वादश्वत्थमाहुः, तथाप्यऽव्ययमिति इति शेषः । सम्यग्ज्ञानोदयानन्तरमदर्शनादश्वत्थत्वं युक्तमेवेत्यर्थः । स्वाज्ञानकालमारभ्य स्वज्ञानावधि यत्तिष्ठति सोऽयं संसारवृक्षोऽव्ययः, तमव्ययम्, अनाद्यनन्तदेहादिसंतानाश्रयत्वात् । तस्यैव विशेषणान्तरमादिशति—छन्दांसीति । यथा वृक्षरक्षणार्थानि पर्णानि तथा संसारवृक्षस्य च्छादनात् गोपनात् छन्दांसि वेदाश्चत्वारः इहामुत्रफलप्रदर्शनार्थत्वात् । एवं यथाव्याख्यातोऽस्माभिः संसारवृक्षः । तं यो वेद जानाति स वेदवित्, वेदार्थसम्प्रदायविदित्यर्थः । न हि समूलसंसारवृक्षादात्मानात्मरूपादन्यज्ज्ञेयं वस्त्वस्ति । यत एवमतस्तज्ज्ञानिनः सर्ववेदार्थविदिति स्तुतिरुपपद्यतेतरामिति भावः ॥ १ ॥

अस्य संसारवृक्षस्यावयवकल्पनोच्यते—

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

अधश्चेति । तस्य संसारवृक्षस्य महदहङ्कारपञ्चतन्मात्रादयः शाखास्थानीया अधश्च प्रसृता विस्तृता, महदाद्युपाधिका ईश्वरहिरण्यगर्भादयः शाखास्थानीया ऊर्ध्वं च प्रसृता, ईश्वरादीना महदाद्यधिष्ठातृत्वात् । याः पुनः संसारवृक्षस्याधश्चोर्ध्वं च प्रसृता शाखास्ताः किंविशेषणविशिष्टा इति तत्राह—गुणप्रवृद्धा इति । स्वोपाधिभूतैः सत्त्वरजस्तमोगुणैः प्रवृद्धा वृद्धिं गताः । यासां शाखानां शब्दादयो विषयाः प्रवालस्थानीया भवन्ति ता

विषयप्रवाला , शाखाऽग्रस्थानीयेन्द्रियवृत्तिगोचरत्वात् । अधश्चेति चशब्दादूर्ध्वं च गृह्यते । ऊर्ध्वमूलं पुरुषोत्तमतत्त्वम् । तत्पुरस्तादेवोक्तम् । अधो मूलानि तावदवान्तरमूलानीत्युच्यन्ते । तानि च ब्रह्मादिस्तम्बान्तमनुसंततान्यनुस्यूतान्यनुप्रविष्टानि । तत्तदुपाधितारतम्यत कारणानुरोधेन प्रवृत्तिदर्शनात् मनुष्यलोके तु कर्मानुबन्धीनि, धर्माधर्मलक्षणं कर्म, तदेवानुबन्धो निबन्धनं येषा मूलाना तानि कर्मानुबन्धीनि कर्मफलजनितरागद्वेषादिवासनामूलानि धर्माधर्मप्रवृत्तिनिमित्तत्वात् । अत एव सर्वज्ञेन भगवतोक्तम् 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश ' 'क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ' 'मम वर्त्मानुवर्तन्ते मनुष्या ' इत्यादि । मनुष्यलोकस्य कर्मफलार्जनभूमित्वात् तत्रैव कर्माधिकारो नान्यत्रेति श्रुतत्वात् तन्मूलानि कर्मानुबन्धीनीत्यर्थ. ॥ २ ॥

एवं वर्णित. संसारवृक्षो यो ऽश्वत्थ इति, सो ऽयमिदमित्थमिति शातुं शक्य इति तत्राह—

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूल-**
**मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

न रूपमिति । इह संसारचक्रे भ्रमद्भि प्राणिभि अस्य संसारवृक्षस्य रूप यथा वर्णितम् 'ऊर्ध्वमूलम्' इत्यादिना तथा नोपलभ्यते स्वाभिकप्रपञ्चवद् गन्धर्वनगरवच्चादृष्टदृष्टनष्टस्वरूपत्वात् । क्षणभङ्गुरत्वेन तत्साक्षात्काराभावे ऽपि तदन्तो द्रष्टुं शक्य इति तत्राह—नेति । अन्तो ऽवमान समाप्ति· न विद्यते स्वाज्ञानकल्पितस्य स्वज्ञानेन विना समाप्त्यसंभवात् । अवसानस्यादर्शने

ऽपि सादित्व स्यादित्यत आह—न चेति । इत आरभ्य ससारवृक्ष प्रादुर्भूत इति येनापि निर्णेतुमशक्यत्वाच्चानादित्वमित्यर्थ । तन्यानादित्वेन तत्प्रतिष्ठोपलब्धिगोचर स्यादिति तत्राह—न चेति । स्वाज्ञानेन विना न चास्य प्रतिष्ठा स्थिति केनचिदुपलभ्यते, स्वज्ञानसूर्योदये स्वाज्ञानप्रभवस्य ससारध्वान्तस्यादर्शनात् । तथा चत् क्षणप्रध्वसिन ससारवृक्षस्य स्वत एव नाशसभवात् तच्छेदने प्रयत्नो न कर्तव्य इत्याशङ्क्य रज्ज्वज्ञानोत्थसर्पाभास यदधिष्ठानज्ञान विना यतो दुरुच्छेदो भवति, अत तदधिष्ठानज्ञानमवष्टभ्य तदङ्गभूतविवेकवैराग्यशस्त्रेण च्छेत्तव्य इत्याह—छित्त्वेति । सुष्ठु विरूढानि सुदृढानि मूलानि यस्य त सुविरूढमूलमेन यथोक्तलक्षणमश्वत्थमिव समाराभिध कोमलार्द्रवृक्ष दारुणपाषाणैर्लोकैषणातो व्युत्थानमसङ्गशस्त्रम्, तेनासङ्गशस्त्रेण ब्रह्मात्मभावदृढीकृतेन पुन पुन विवेकवैराग्याभ्यासोपल निशितेन समूल छित्त्वा तन्मूल नष्ट ज्ञातव्यमित्यर्थ ॥ ३ ॥

ससारवृक्षोन्मूलनानन्तर किं कर्तव्यमिति तत्राह—

ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

तत इति । तत ससारविषवृक्षच्छेदनानन्तर यस्मिन् ससारवृक्षा दूर्ध्वपदे गतास्तद्भावापन्ना यतयो न निवर्तन्ति भूय पुन ससाराय नावर्तन्ते । यत पुरुषोत्तमात् तदज्ञानभवससारविषवृक्षप्रवृत्ति ऐन्द्रजालि करचिता मायेव पुराणी चिरतनी प्रसृता, य पद्यत इति पदशब्देनोक्त,

तमादौ भवमाद्य भूमब्रह्मरूपेण सर्वपरिपूरणात् पुरुषं प्रत्यगभेदेन प्रपद्य इत्येवं तदेतद्वैष्णवं पदं परिमार्गितव्यं परिमार्गणमन्वेषण कर्तव्य ज्ञातव्यमित्यर्थ ॥४॥

के पुनरेवं ज्ञात्वा तत्पद गच्छन्तीत्यपेक्षायामाह—

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

निर्मानेति । मूलाज्ञानारूढा मूढा कामिनः, तद्विपरीता अमूढा सन्यासिन यत्स्वत परतो वा न व्येतीत्यव्यय तदेतत् पद विदेहकैवल्यं गच्छन्ति । मानमोहजुष्टानाममूढत्वं कुत इति तत्राह—निर्मानमोहा इति । अहकारो मानश्च अतस्मिंस्तद्भावो मिथ्याऽभिनिवेशो मोहश्च, तौ मानमोहौ येभ्यो निर्गतौ ते खल्वमूढपदमर्हन्तीत्यर्थ । दारपुत्रादिसङ्गिना निर्मानमोहता कथमिति तत्राह—जितसङ्गदोषा इति । ये एषणात्रयव्युत्थानत पुत्रादि-सङ्गदोषो जित तेषा निर्मानमोहत्वमुपपद्यत इत्यर्थ । कथमध्यात्मशास्त्र-विमुखाना जितसङ्गदोषत्वमिति तत्राह—अध्यात्मनित्या इति । ब्रह्मात्मया-थाऽऽत्म्यमधिकृत्य भवतीत्यध्यात्म प्रत्यक्परैक्यज्ञानम्, तदेव नित्यत्वसाधन येषा त एव जितसङ्गदोषा । तादृशज्ञान विना दारादिसङ्गस्य दुस्त्यजत्वात् कुत कामिनामध्यात्मनित्यतेति तत्राह—विनिवृत्तकामा इति । मनोगतना-नासकल्पत्यागतो विनिवृत्त कामो येभ्यस्तेषामकामिनामध्यात्मनित्यत्वं सिद्धमित्यर्थ । द्वंद्वाभिभूतानामकामित्व कुत इति तत्राह—विमुक्ता इति । शीतोष्णसुखदु खप्रियाप्रियादिद्वंद्वैर्विमुक्तत्वात् तेषामकामित्व निरङ्कुश-मित्यर्थ ॥ ५ ॥

एवंविशेषणविशिष्टैः सूरिभिः यत्पदं प्राप्यते तदेव पुनर्विशिनष्टि—

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

न तदिति । यदिदं वैष्णवं धाम पदं गत्वा सूरयो जात्वपि न निवर्तन्ते तदेतत्पदं सर्वावभासको ऽपि सूर्यो न भासयते न प्रकाशयति, तथा न शशाङ्कः पावको ऽपि, तदेव मम ब्रह्मात्मनो वासुदेवस्य परमं सर्वोत्कृष्टं धाम । किंचिदपि भिदागन्धामहमत्वामामान्यरूपकैनत्वयत्नात् ॥६॥

यद्गत्वा न निवर्तन्ते तन्मदीयं धामेति कथमुच्यते गतेरागत्यन्तत्वेन संयोगस्य विप्रयोगान्तत्वेन च प्रसिद्धेः ? यदि नाम त्वदीयं धाम प्रविष्टाना नावृत्तिः तदा 'सति रूंपश्च न विदु मति संपत्स्यामहे' इत्यादिश्रुत्यनुरोधेन प्रलयकाले सर्वैरा त्वत्प्राप्तेरविशेषात् । तथा सति को नाम संसारी त्वदुक्तसाधनसंपत्त्या त्वद्धाम् गत्वा न निवर्तेतेत्याकाङ्क्षायामाह—ममेति पञ्चभि —

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

ममेति । यथा जले प्रतिबिम्बित सूर्य सूर्यांश इति व्यवह्रियते यथा वा घटाद्युपाध्यवच्छिन्नं व्योम व्योमांश इति व्यवह्रियते, तथा प्रत्यगभिन्नपरमात्मनो नारायणस्य ममैवांश इति व्यवह्रियते । को ऽयम् ? यो ऽयं कर्ता भोक्तेति प्रसिद्धो जीवलोके संसारभूमौ जीवभूत इति च सो ऽयं सनातनः मत्स्वरूपत्वेन चिरंतनत्वात् । यथा जलबिम्बित सूर्यांशो जलापाये

सनातनं सूर्यं प्राप्य न निवर्तते, यथा वा घटाद्यवच्छिन्न आकाशांशो घटाद्यपाये सनातनत्वेन प्रसिद्धं महाऽऽकाशं भूत्वा सनातनो नावर्तते, तथा ऽयं जीवलोको मदंशः स्वाविद्यापाये मामेव प्राप्य न पुनरावर्तत इति सिद्धत्वा-दुपपन्नम् 'यद्गत्वा न निवर्तन्ते' इत्यादि, 'सति संपद्य' इत्यादिश्रुत्यनुरोधेन स्वापादौ जीवस्भृत्स्य सप्रकृतिके सति संपन्नत्वात्। न च निष्प्रकृतिके मयि। अत एवोक्तम् 'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्ति' इत्यादिना अविदुषां पुनरावृत्तिमत्त्वम्। निरंशस्य ममांशत्वेन कल्पितजीवसद्भावात् सो ऽयं जीवो यो ऽयं मदंशत्वेन कल्पितः सृष्टिप्रलययोः स्वप्रकृतौ कर्णशष्कुल्यादौ तिष्ठन्तीति प्रकृतिस्थानि मनः षष्ठं येषां तानि श्रोत्रादिज्ञानेन्द्रियाणि। प्राणकर्मेन्द्रियाणामुपलक्षणार्थमिन्द्रियग्रहणम्। संसारभोगार्थं कर्षति, तानि सर्वाण्याकृष्य संसरतीत्यर्थः॥ ७॥

कदा जीवः प्रकृतिस्थानीन्द्रियाण्याकृष्य संसरतीत्यपेक्षायामाह—

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥ ८॥**

शरीरमिति। देहेन्द्रियसंघातस्वामीश्वरो जीवो यदा शरीरं कर्म-वशादाप्नोति, यच्च यतश्च स्वाधिष्ठेयशरीरादुत्क्रामति, तदा वायुः पुष्पा-शयात् तद्गतगन्धानिव मनःषष्ठान्येतानि सर्वेन्द्रियाणि गृहीत्वा आदाय संयाति लोकान्तरं शरीरान्तरं स्वीकृत्य गच्छतीत्यर्थः॥ ८॥

कानि तानीन्द्रियाणि यदर्थं गृहीत्वा गच्छतीति तत्राह—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते॥ ९॥**

श्रोत्रमिति । श्रोत्रं चक्षु स्पर्शनं रसनं घ्राणमित्येतानि बाह्येन्द्रियाणि मनो ऽन्त करणमन्तरिन्द्रियं चाधिष्ठाय जीवो देहस्वामी शब्दादीन्विषयान् संकल्पादीश्चोपसेवते ॥ ९ ॥

'शरीरं यदवाप्नोति' इत्यादिना शरीरेन्द्रियादिभ्यो जीवस्य वैलक्षण्यमुक्तम् । एवं शरीरेन्द्रियसंघातभावाभावेवेचारं कूटस्थमात्मानं सर्वे किमिति न पश्यन्तीत्यपेक्षायामाह—

**उत्क्रामन्तं स्थितं वा ऽपि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

उत्क्रामन्तमिति । विक्षेपमूलावरणशक्त्या आवृतविवेकदृष्टयो विमूढा अज्ञानिन पूर्वोपात्तशरीरमुत्क्रामन्त तत्परित्यज्य गच्छन्त तादात्म्याध्यासेन देहे स्थितं वा शब्दादीन्विषयान् भुञ्जान वा सुखदु खमोहाद्यैः सत्त्वादिभि स्त्रिभिर्गुणैरन्वितमेवमत्यन्तदर्शनयोग्यमप्येन नानुपश्यन्ति देहेन्द्रियाद्यतिरेकेण न जानन्ति, विषयभोगाभिलाषापहृतदृष्टित्वात् । तमेव के पुन पश्यन्तीति तत्राह—ज्ञनेति । श्रुत्याचार्यप्रसादतो विचारितवेदान्तसिद्धान्तवाक्यार्थ-प्रत्यक्परैक्यज्ञानमेव चक्षुर्येषा विदुषा ते ज्ञानचक्षुषो देहातिरिक्त प्रत्यञ्चं पराभेदेन पश्यन्ति जानन्तीत्यर्थ ॥ १० ॥

'पश्यन्ति ज्ञानचक्षुष' इत्युक्तम् । किं सर्वे शास्त्रार्थदर्श पश्य न्तीत्यपेक्षायामेवमनेकेषु सत्सु केचिदेव पश्यन्तीत्याह—

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तो ऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**

यतन्त इति । केचिद्विशुद्धचित्ता योगिनः श्रवणमनननिदिध्यासनैः यतन्तः सन्तः स्वात्मन्यन्तःकरणे तत्साक्षित्वेनावस्थितमेनं प्रत्यञ्चमात्मानं परमात्माभेदेन पश्यन्ति । ब्रह्मैवाहमहमेव ब्रह्मेत्यपरोक्षतया जानन्तीत्यर्थः । श्रुत्याचार्यप्रसादात्तच्छास्त्राभ्यासेनाप्यसंस्कृतः आत्मा अन्तःकरणं यथा ते अकृतात्मानः केचिद्योगिनः श्रवणादिभिर्यतन्तोऽपि विषयतृष्णया ब्रह्मात्मभावापन्नं चेतो येषां न विद्यते ते अचेतसो भूत्वा प्रकृतमेनमात्मानमयमहमस्मीति न पश्यन्ति, विषयव्यापारानुपरतत्वात् ॥ ११ ॥

सर्वावभासकोऽप्यादित्यो यत्पदमवभासयितुं न पारयति, जीवन्मुक्ताः पूर्णा यत्पदं प्राप्य न पुनरावर्तन्ते, यत्पदं सर्वात्मकत्वेन सर्वव्यवहारास्पदं भवति, तत्पदं प्रकटयितुं स्वविभूतिसंक्षेपमादिशति भगवान्वासुदेवः — यदिति चतुर्भिः ।

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

यदिति । आदित्यगतं यत्तेजो दीप्तिरखिलं जगद्भासयते, चन्द्रमस्यग्नौ च यत्सवस्यावभासकं तेजो वर्तते, तदेतदखिलं तेजो मामकमिति विद्धि । यद्वा, आदित्यचन्द्राग्न्यादिगतं प्रत्यक्तेजो मामकं वैष्णवं विजानीहीत्यर्थः । चेतनाचेतनेषु चैतन्यज्योतिषः समत्वात् यदादित्यगतमित्यादिविशेषणं कथमुपपद्यत इत्यपेक्षायामादित्यादीनामत्यन्तसत्त्वोपाधित्वेन तद्गतचैतन्यस्य सर्वजनप्रत्यक्षत्वाद्यदादित्यगतमिति तद्विशिष्यते न तु तत्रैवाधिकमिति । यथा दर्पणकुड्यादौ पार्थिवत्वेन समेऽपि दर्पणस्य स्वच्छत्वेन तत्र सौरं तेजः स्फुटमवगम्यते, न तथा कुड्यादौ, तत्र न च सौरं तेजः सर्वसमप्रकाशकत्वव्याहतिस्तद्वदित्यर्थः ॥ १२ ॥

इतश्च प्रकृतपदस्य सार्थक्यं स्फोरयति—

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

गामिति । अहमीश्वरो भूदेवतारूपेण गा भूमिमाविश्य च ओजसा कामरागविवर्जितेन पारमेश्वरबलेन चेतनाचेतनात्मकानि भूतानि धारयामि । अत एव हि भूमि गुरुभारेण विदीर्य नाध पतति, 'स दाधार पृथिवीं द्याम्' इति मन्त्रवर्णात् । सर्वरसानामाकरत्वात् रसात्मको ऽहं सोमो भूत्वा स्वात्मरसानुप्रवेशेन व्रीह्यादिसर्वौषधी पुष्णामि पुष्टिमती स्वादुमतीश्च करोमीत्यर्थ ॥ १३ ॥

इतश्च स्वस्य सर्वात्मकत्वे हेत्वन्तरमाह—

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

अहमिति । 'अयमग्निर्वैश्वानरो यो ऽयमन्त पुरुषे येनेदमन्न पच्यते'[1] इतिश्रुत्यनुरोधेनाह परमेश्वरो जाठरवैश्वानरो भूत्वा प्राणिना देहमाश्रित सन् प्राणापानाभ्यामूर्ध्वाधोगतिभ्या समायुक्त सहितो भूत्वा भक्ष्यभोज्यलेह्यचोष्यभेदात् चतुर्विधमन्न पचामि पक्व करोमि । दन्तैरव-खण्ड्यावखण्ड्य यद्भक्ष्यते तदपूपादि भक्ष्यम् । जिह्वया ऽऽलोड्य निगीर्यते पायसादि यत्तद्भोज्यम् । जिह्वाया निक्षिप्य यत्तु निगीर्यते द्रवीभूत गुडादि तत्तु लेह्यम् । यत्तु दन्तैर्निष्पीड्य रसात्म स्वीकृत्य शिष्ट त्यज्यते तत्त्विक्षु-

[1] बृ ५ ९

रूपाणि चोप्यमित्युच्यते । वैश्वानरदृष्टिमोंकरि सोमदृष्टिमोंज्यवर्गे, एवं भोक्तृभोज्यरूपमिदं सर्वमग्नीषोमात्मकमिति भुक्तिकाले यो ध्यायति, तस्य भोक्तुरन्नकृतो दोषो न भवतीति भाव ॥ १४ ॥

इतश्च स्वस्य सर्वात्मकत्वे हेत्वन्तरं स्फुटयति—

**सर्वस्य चाहं हृदि संनिविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

सर्वस्येति । सर्वस्य ब्रह्मादिस्तम्बान्तप्राणिजातस्य हृदि अन्त करणे तद्भावाभावप्रकाशकत्वेन तद्गतगुणदोषाप्स्पृष्टत्वेन च यत परमेश्वरो ऽहं सनिविष्ट अतो मत्त परमेश्वरादेव पुण्यकर्मणा पुराणा स्वस्वकर्मानुरोधेन जन्मान्तरादावनुभूतपदार्थस्मृतिरात्मानात्मयाथाऽऽज्यज्ञानं च प्रादुर्भवति, पापकर्मणा स्वकृतकर्मानुरोधेन स्मृतिज्ञानयोरपोहनं च भवति । सर्वैर्वेदैश्च, चशब्दात् निखिलशास्त्रपुराणेतिहासैरह परमेश्वरो वेद्यो वेदितव्यो भवामि, किं च वेदान्तकृद्वेदान्तसंप्रदायप्रवर्तकज्ञानप्रदत्वात् ब्रह्मादिस्तम्बान्तदेहिको ऽहमेव वेदवित् निरुक्तुरासर्वज्ञत्वादित्यर्थ ॥ १५ ॥

'यदादित्यगतं तेज ' इत्यादिना विशिष्टोपाधितो विभूतिसक्षेप उक्त । इदानीं सर्ववेदान्तसिद्धान्तार्थ निष्कल पुरुषोत्तमभाव क्षराक्षरातीतत्वेन प्रतिपादयति—द्वाविति त्रिभि ।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थो ऽक्षर उच्यते ॥ १६ ॥**

द्वाविति । लोके ऽस्मिन् संसारभूमौ द्वाविमौ पुरुषावुच्येते । कौ ताविति तत्राह—क्षर इति । क्षरतीति क्षरः क्षणभङ्गुरत्वात्, अविद्यातत्कार्यतो न क्षरतीत्यक्षरः, क्षरश्चाक्षर एव चेति द्वाविमौ पुरुषौ विद्येते इत्यर्थः । को ऽयं क्षर इति तत्राह—सर्वाणीति । भूतानि ब्रह्मादिस्तम्बान्तभूतग्रामशरीराणि, तेषामदृष्टदृष्टरूपेलेन मध्यमक्षणभावित्वात् सर्वाणि भूतान्येव क्षरशब्देनोच्यन्ते । अज्ञलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः को ऽयमक्षर इति तत्राह—कूटस्थ इति । स्वाचोपाधिषु प्रतिक्षणं विनश्यत्स्वपि कूटः शिलाराशिरिवाविनाशितया तिष्ठतीति कूटस्थः । यद्वा कूटं तूलाविद्यातत्कार्यजातम्, तत्राविकारित्वेन तिष्ठतीति कूटस्थः चेतनो जीवो ऽक्षरः पुरुष उच्यते, विवेकिभिर्देहातिरेकेण पुरुषग्रहणात् ॥ १६ ॥

यदर्थमेतौ विवक्षितौ तदेवक्षराक्षरातीतत्वेन नित्यशुद्धबुद्धपरमानन्दस्वभावं परमाक्षरं क्षराक्षरोपाधिगुणदोषास्पृष्टत्वात् स्वस्य निष्कलं भावमुपदिशति—

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

उत्तम इति । स्वतः परतो वा नास्य व्ययो विद्यत इति यो ऽव्ययो नारायणः सर्वज्ञः परमेश्वरो भूरादिलोकत्रयमविद्यापदस्थूलसूक्ष्मबीजभागोपलक्षणार्थं तत्समग्रं वा स्वसत्ताचैतन्यस्फूर्तिसुखस्वरूपेणाविश्य स्वीयक्रियाज्ञानेच्छाशक्तिभिर्बिभर्ति धारयति, सो ऽयं क्षराक्षरपुरुषाभ्यामुत्कृष्टतमत्वादुत्तमः पुरुषस्त्वन्यः, ताभ्यामत्यन्तविलक्षणत्वात् । तदेव स्फोरयति—परमात्मेति । स्वाविद्यद्वयतत्कार्यविलक्षणत्वेन परमश्चासावात्मा चेति परमात्मेत्युदाहृतो वेदान्तेष्वित्यर्थः ॥ १७ ॥

यो ऽयं सर्वप्रत्यगभिन्नः परमात्मा पुरुषोत्तम इत्युक्तः, तस्य लोक-वेदप्रसिद्धमन्वर्थं नाम निर्दिशति—

**यस्मात्क्षरमतीतो ऽहमक्षरादपि चोत्तमः।**
**अतो ऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ १८॥**

यस्मादिति। यस्मात् संसारमायावृक्षं क्षरतीति क्षरमतीतो ऽहं मायासंसारवृक्षबीजादक्षरादपि चोत्तम उत्कृष्टतमो भवामि, अतस्तस्माभ्यां क्षराक्षराभ्यामुत्तमत्वात् पुरुषोत्तम इति लोके वेदे च प्रथितः प्रख्यात इति कवयः सर्वेऽदं नाम निबध्नन्ति॥ १८॥

यथोक्तं पुरुषोत्तमतत्त्वं यो वेद तस्य सर्वज्ञत्वं फलमादिशति—

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद्भजति मां सर्वभावेन भारत॥ १९॥**

य इति। हे भारत! श्रुत्याचार्यप्रसादात्तत्स्वज्ञानकबलितमूलाज्ञानावरणत्वान्तो यो ऽसंमूढो विद्वानेवमुक्तप्रकारेण यथोक्तविशेषणविशिष्टं पुरुषोत्तमं मां जानाति सर्वप्रत्यगभिन्नपरमात्मा ऽस्मीत्यपरोक्षीकरोति सर्वभावेन सर्वात्मकतया मा पुरुषोत्तमं भजति, सो ऽयं विद्वान् सर्वात्मानं मा वेत्तीति सर्ववित् सर्वज्ञो भवति। सर्वात्मभावलक्षणा विदेहमुक्तिं प्राप्नोतीत्यर्थः॥१९॥

स्वतत्त्वज्ञानिनः कैवल्यफलमुक्त्वा ऽध्यायार्थमुपसंहरति—

**इति गुह्यतमं शास्त्रमिदमुक्तं मया ऽनघ।**
**एतद् बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत॥२०॥ इति।**

इति श्रीमद्भगवद्गीतासु० पुरुषोत्तमयोगो नाम पञ्चदशो ऽध्यायः।

इतीति । हे अनघ ! इत्येवमुक्तप्रकारेणैतत् गुह्यतममनधिकारिष्व-त्यन्तमेव गोपनीयत्वात् । किं तत् ? शास्त्रं गीताशास्त्रस्यास्मिन्नध्याये संक्षेपेणोक्तत्वात् 'यस्तं वेद स वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिना सर्ववेदान्तार्थस्य चात्रैव परिसमाप्तत्वादिदमेव पुरुषोत्तमाध्यायाख्यं शास्त्रमिति सर्वज्ञेन मयोक्तम् । हे भारत ! यथा मया प्रकटितमेतच्छास्त्रमर्थतो यः कश्चन वा यथावद्बुद्ध्वा प्रत्यक्पर्यैवविषयकबुद्धिर्ज्ञानं तद्वान् बुद्धिमान् कृतं कृत्यं कर्तव्यं येन सः कृतकृत्यश्च स्यात् । प्रत्यगभेदेन भगवत्तत्त्वे विदिते ब्राह्मण्यपदं प्रतिपन्नेन यत्कर्तव्यं तत्सर्वं कृतं भवेदिति भावः । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्युक्तत्वात् । यतः त्वमेतच्छास्त्रं श्रुतवानसि अतः कृतार्थो भवसि । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥२०॥

संक्षिप्याध्यत्मधुना तन्मूलज्ञानखड्गतः ।
यतयो यत्पदं यातास्तन्मे दिशतु मङ्गलम् ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां पञ्चदशोऽध्यायः ॥

## षोडशो ऽध्यायः

दैवीं संपदमाश्रित्य यस्त्यजेदासुरीं श्रियम् ।
तस्य ज्ञानाधिकारः स्यादित्याख्यातुमुपक्रमः ॥

पूर्वाध्यायान्ते 'गुह्यतमं शास्त्रम्' 'एतद्बुद्ध्वा बुद्धिमान्स्यात्' इत्युक्तम् । तत्रैतत्तत्त्वं को बुध्यति को वा न बुध्यतीत्यपेक्षायां तत्त्वज्ञानाधिकार्यनधिकारिविवेचनार्थं नवमाध्याये प्राणिनां प्रकृतयो दैव्यासुरी राक्षसी चेति त्रिधा सूचिताः । तासां मध्ये राक्षसीमासुरीं चेति प्रकृतिद्वयमुन्मूल्य दैवीं प्रकृतिं यो भजति स एव मत्प्रापकज्ञानाधिकारी नान्य इति प्रतिपादयितुं षोडशाध्यायं श्रीभगवानुवाच । तत्रादौ दैवीं संपदमाह—अभयमिति त्रिभिः ।

श्रीभगवानुवाच—

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

अभयमिति । भयहेतुद्वैताभावात् अभयं भयादर्शनम् । सत्त्वस्यान्तःकरणस्य संशुद्धिः व्यवहारकाले ऽपि परवञ्चनानृतादिवर्जनपूर्वकं शुद्धसत्त्वभावेन स्थितिः । श्रुत्याचार्यमुखतः प्रत्यगभेदेन ब्रह्मवेदनं ज्ञानम्; तज्ज्ञानं लब्ध्वेन्द्रियद्वयेनेन्द्रियद्वयार्थाग्रहणेन यद् ब्रह्मात्मैक्यध्यानं तदेव योगः;

तयोर्ज्ञानयोगयोः व्यवस्थितिः तन्निष्ठाप्रधानैषा दैवी संपत्। यथोक्ताधिकारिणि ब्रह्मविद्योपदेशो दानम्। बाह्यकरणनिग्रहो दमश्च। चशब्दादन्तःकरणनिग्रहश्च गृह्यते। अग्निहोत्रादिर्यज्ञश्च। चशब्दात् स्मार्तो देवयज्ञादिः गृह्यते। ऋगाद्यध्ययनं स्वाध्यायः। आत्मानात्मयाथात्म्यालोचनं तपः। सर्वदा ऋजुत्वमार्जवम्॥ १॥

अहिंसाऽऽदिरपि दैवी संपदित्याह—

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ २॥**

अहिंसेति। प्राणिनामहिंसनमहिंसा। प्राण्यप्रियानृतवर्जनपूर्वकं यथार्थवचनं सत्यम्। स्वावरजनकृतस्वपरिभवताडनादिभवक्रोधसहनमक्रोधः। सर्वसङ्गपरित्यागलक्षणः संन्यासस्त्यागः, पूर्वमेव दानस्योक्तत्वात्। सर्वत्रालंमतिः शान्तिः। अन्यत्र पररन्ध्रप्रकटीकरणं पैशुनम्, अपैशुनं तदभावः। दुःखितेषु भूतेषु कृपैव दया। विषयसंनिधाने ऽप्यविकृतचित्तत्वमलोलुप्त्वम्। अलोलुप्त्वमिति वक्तव्ये अलोप आर्षः। क्रूरत्वादि कौर्याभावकाशात् सर्वत्र मृदुत्वं मार्दवम्। अविद्वद्गोचरार्थप्रवृत्तौ लज्जैव ह्रीः। दुःसापे ऽपि बाह्यान्तरिन्द्रियाव्यापारयितृत्वमचापलम्॥ २॥

प्रागल्भ्यादिकमपि दैवी संपदित्याह—

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।**
**भवन्ति संपदं दैवीमभि जातस्य भारत॥ ३॥**

तेज इति। हे भारत! सूक्ष्मबुद्धिमत्त्वं प्रागल्भ्यं वा तेजः, न त्वगिन्द्रियगता दीप्तिः। परैस्ताडितस्यापि अन्तर्विक्रियाऽनुत्पत्तिः क्षमा।

क्षमाक्रोधयो न पुनरुक्ति, तयो शब्दभेदवदर्थभेदस्योक्तत्वात् । क्रोधानु त्पत्ति क्षमा, उदितायामपि क्रोधवृत्तौ तदुपशमनमक्रोध । इत्थ क्षमाक्रोध योर्विशेष । यदवष्टम्भत करणग्रामो नावसीदतीति सेय धृति धैर्यम् । बाह्य मान्तर चेति द्विविध शौचम् । मृज्जलाभ्या बाह्यशुद्धि, मनोबुद्धिनैर्मल्यमन्त शुद्धि, रागादिकालुष्यराहित्यम् । स्वस्मिन्निश्चसम्याभिमित्रानपकृतिरद्रोह । विद्यानहमित्यादिमतिर्मान, मत्सदृश को ऽपि नास्तीत्यतिमान, स यस्य विद्यते सो ऽतिमानी, तद्भावो ऽतिमानिता, तदभावो नातिमानिता । एवं सात्त्विकी दैवी सपत् । एतानि विशेषणानि कस्येत्यत आह अभि जात स्येति । देवानामिय दैवी सात्त्विकी सपत्, तामभि जातस्य भाविस्त्याण भाजनस्य साधकस्याभयादीन्यनतिमानितान्तानि ज्ञानसाधनानि षड्विंशति भेदतो भवन्ति । एव षड्विंशतिसाधनसपन्नो यो मुमुक्षु स एव मत्पग भिन्नब्रह्मज्ञानाधिकारी, नेतर इत्यर्थ ॥ ३ ॥

ज्ञानाधिकारिनिर्देशार्थं दैवीं सपदमुक्त्वा तदनधिकारिण निर्देष्टुमा सुरीं सपदमाचष्टे—

दम्भो दर्पो ऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभि जातस्य पार्थ सपदमासुरीम् ॥ ४ ॥

दम्भ इति । धर्मध्वजित्व दम्भ । विद्याधनस्वजनादिप्रयुक्तो गर्वो दर्प । स्वस्मिन् सर्वोत्कृष्टत्वाध्यारोपश्च अतिमान । स्वापराधकारिषु नेत्रा युकटक्षोभहेतु अन्त करणवृत्तिविशेष क्रोध । साधून् प्रति परपर्वचन मेव च पारुष्यम् । कर्तव्याकर्तव्यविवेकराहित्यमज्ञानम्, एपा सपदासुरी । कस्यैतानि विशेषणानि भवन्तीत्यत आह—अभि जातस्येति । हे पार्थ

असुराणामियमासुरी संपद्राजसी, तामभि जातस्य पुरुषस्य दम्भादीनि ज्ञानान्तानि ज्ञानानधिकारितासूचकानि षड् लिङ्गानि भवन्ति॥ ४ ॥

अनयोः संपदोः फलमाह—

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता।**
**मा शुचः संपदं दैवीमभि जातोऽसि पाण्डव ॥ ५ ॥**

दैवीति। संसारबन्धनाद्विमोक्षाय दैवी संपद्भवति। आसुरी संपत्तु संसार एव नियतो बन्धो निबन्धः; तस्मै निबन्धाय मता। तथा राक्षसी संपच्च। एवं भगवद्वचनमाकर्ण्य किमहमासुरसंपद्युक्तः किं वा दैवसंपद्युक्तः- इति संदिहानमर्जुनमालक्ष्याह—मा शुच इति। हे पाण्डव! दैवीं संपदमभि जातोऽसि, भाविकल्याणभागसि। नो चेत् मच्छिष्यत्वं मद्दर्शनादिर्वा कथं ते भवेत्। यत एवमतस्त्वं मा शुचः. आसुरीं संपदमभि जातोऽस्मीति शोकं मा कार्षीरित्यर्थः ॥ ५ ॥

त्रिविधा राक्षसी संपदिति चेत् कस्मात्सा नोक्तेत्यपेक्षायां तस्यास्तावदासुर्यामेवान्तर्भावात्सा पृथङ् न वक्तव्येत्याह—

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

द्वाविति। हे पार्थ! लोकेऽस्मिन् संसारमण्डले दैव आसुर एव चेति दैवासुरसंपदोः प्रकृतत्वात् भूतानां सर्गौ सृष्टी द्वौ द्विसंख्याकावुच्येते। तथा च श्रुतिः—'द्वया ह प्राजापत्या देवाश्चासुराश्च'[1]

[1] बृ. १. ३.

-इति । तयोः भूतसर्गयोः 'अभयं सत्त्वसंशुद्धिः' इत्यादिना दैवो ऽयं सर्गो विस्तरशः प्रोक्तः, न त्वासुरः । समग्रमासुरं सर्गं मे मम वचनात् विस्तरशः शृणु अवधारय । न चासुरसर्गस्य परिहर्तव्यत्वेन तद्वेदनमनर्थकमिति वाच्यम्, तथाऽऽदम्यज्ञानाभावे परिहर्तुमशक्यत्वात् तत्परिहाराय तद्वेदनं युक्तमित्यर्थः ॥ ६ ॥

ज्ञात्वा खलु परिहर्तव्यमित्यासुरीं संपदं विस्तरशो निरूपयति—प्रवृत्तिं चेत्यादिभिर्द्वादशभिः ।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

प्रवृत्तिमिति । आसुरा जनाः पुरुषार्थसाधनत्वेन धर्मप्रवृत्तिं च स्वानर्थहेतुत्वेनाधर्मनिवृत्तिं च न विदुः न जानन्ति । न केवलं तेषां प्रवृत्तिनिवृत्त्यज्ञानम्, किं तु तेष्वासुरस्वभाववज्जनेषु बाह्यान्तरभेदेन शौचद्वयं न विद्यते । नापि स्वाश्रमोचितसंप्रवृत्तिः । सत्यं च यथाऽर्थवचनलक्षणं सत्यमपि न विद्यते ॥ ७ ॥

वेदोक्तधर्माधर्मप्रवृत्तिनिवृत्ती कथं न विदुः, धर्माधर्मानङ्गीकारे कथं जगतः सुखदुःखादिव्यवस्था स्यात्, कथमीश्वराज्ञालक्षणा स्वाश्रमोचितशौचाचारादिनियतिं लङ्घयेयुः, ईश्वरानङ्गीकारे कुतो जगदुत्पत्त्यादि स्यादित्यपेक्षायामाह—

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥**

असत्यमिति । यथा वयमनृतप्रायाः तथेदं जगदसत्यम् । नास्य धर्माधर्मौ प्रतिष्ठाहेतू विद्येते । अत एवाप्रतिष्ठितं जगदाहुः । न च जगच्छासितेश्वरो विद्यते । यत एवमतो निरीश्वरं जगदाहुः । के ते ? आसुरा जनाः । तर्हि जगत्कस्माद्‌द्भवमिति तत्राह—अपरस्परेति । अपरः परश्चेत्यपरस्परम्, अपरस्परतः अन्योन्यतः स्त्रीपुरुषमिथुनात् जगत्संभूतम् । किमन्यदस्ति कारणम् ? किं तु स्त्रीपुरुषयोरन्योन्यसंयोगः कामः, स एव प्रवाहरूपेण हेतुः । एवं कामहैतुकम् । न हि कामातिरेकेण धर्माधर्मादिकारणान्तरं विद्यत इति लौकायतिकदृष्टिमाश्रित्य प्राहुरित्यर्थः ॥ ८ ॥

कां दृष्टिमवष्टभ्यैवमेते-वदन्तीति तत्राह—

**एतां दृष्टिमवष्टभ्य नष्टात्मानो ऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतो ऽहिताः ॥ ९ ॥**

एतामिति । देहादावात्मत्वात्मीयत्वाभिमानेनाल्पा परिच्छिन्नविषया बुद्धिर्येषामासुराणां ते अल्पबुद्धयः पुरुषा लौकायतिकाश्रयामेतां दृष्टिमवष्टभ्य नष्ट आत्मा ऽन्तःकरणं येषां ते नष्टात्मानः अदृष्टपरलोकसाधनानुष्ठानमनसो भूत्वा प्राणिमात्रस्य जगतो ऽहिताः शत्रवः सन्तः उग्रं क्रूरं हिंसाऽऽत्मकं कर्म येषां त उग्रकर्माणो भूत्वा जगतः क्षयाय प्रभवन्ति प्रादुर्भवन्तीत्यर्थः ॥ ९ ॥

तानेव प्रकारान्तरेण व्यनक्ति—

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वा ऽसद्ग्राहान्प्रवर्तन्ते ऽशुचिव्रताः ॥१०॥**

काममिति । अशुचीनि कलञ्जमद्यमांसविषयाणि व्रतानि येषां ते अशुचिव्रताः पुरुषा दुःखेनापि यस्य कुक्षिः न पूर्यते तं दुष्पूरमिच्छा-

विशेषं काममाश्रित्य, दम्भश्च मानश्च मदश्च दम्भमानमदाः, तैरन्विताः सन्त मोहादनेन मन्त्रेणैतां देवतामुपास्य निध्यादीन् माप्स्याम इत्यसद्ग्राहान्दुरवग्रहान् स्वीकृत्य प्रवर्तन्ते ॥ १० ॥

पुनर्विधान्तरेण तानेव विशदयति—

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥**

चिन्तामिति । प्रलयो मरणमेवान्तो ऽवसानं यस्याः चिन्तायाः ता प्रलयान्ताम्, यस्याः स्वरूपमियत्तया परिमातुमशक्यं तामपरिमेयां चिन्तामुपाश्रिता आसुरा जना, काम्यन्त इति कामा विषया शब्दादयः, श्रोत्राद्यक्षैः तदुपभोग एव परमः पुरुषार्थो येषां ते कामोपभोगपरमा भूत्वा, देहधारिणैतावदेव प्राप्तव्यं नातो ऽतिरिक्तमस्तीति निश्चिताः सन्तो ऽर्थसंचयानीहन्त इत्युत्तरेणान्वय । यतश्चैतन्यविशिष्टः पुरुष कामयते अतः काम एव परमपुरुषार्थ इति मन्यन्त इत्यर्थः ॥ ११ ॥

पुन प्रकारान्तरेणासुरानाचष्टे—

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥**

आशेति । आसुरा पुरुषा, आशा एव पाशा, तेषां शतैर्बद्धा इतस्ततः आकृष्यमाणा सन्त, कामक्रोधौ परमयनं येषां ते कामक्रोधपरायणा भूत्वा, कामितविषयभोगार्थं कामभोगप्रयोजनाय न धर्मार्थम्, अन्यायेन चौर्यादिना ऽर्थानां संचयानाशीनीहन्ते इच्छन्ति ॥ १२ ॥

तेषां मनोराज्यप्रभावतो नरकप्राप्तिं प्रकटयति—इदमिति चतुर्भिः ।

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

इदमिति । अद्येदं द्रव्यं मया लब्धं मनस्तुष्टिकरं मनोरथमिदं प्राप्स्ये । मद्गृहेषु यदिदं धनमस्ति तदिदमपि मे मम पुनरागामिवर्षे भविष्यति । अत ऊर्ध्वमहं धनी स्यामित्यर्थः ॥ १३ ॥

निःसपत्नं मनोराज्यं करोतीत्याह—

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरो ऽहमहं भोगी सिद्धो ऽहं बलवान्सुखी ॥ १४ ॥**

असाविति । असौ दुर्जयो देवदत्तनामकः शत्रुर्मया हतः । तथाविधानपरानपि शत्रून् हनिष्ये, कस्यापि मत्तुल्यैश्वर्याभावादहमेवेश्वरः, तथा ऽहमेव भोगी स्याम्, अहमेव सिद्धपुरुषः, अतीव बलवानहम्, अतीव सुखीत्यादि मनोराज्यं करोतीत्यर्थः ॥ १४ ॥

सर्वप्रकारैः मत्तुल्यः को ऽपि नास्तीत्यभिमन्यत इत्याह—

**आढ्यो ऽभिजनवानस्मि**
**को ऽन्यो ऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य**
**इत्यज्ञानविमोहिताः ॥ १५ ॥**

आढ्य इति । धनादिसंपत्त्या अहमाढ्यः; सप्तपुरुषश्रोत्रियत्वादिसंपत्त्या अभिजनवानस्मि; सर्वप्रकारतो मत्सदृशः को ऽपि नास्ति; यज्ञदानादिकर्तृभ्यो ऽधिकां प्रतिष्ठामारोढुं यक्ष्ये; अहं नटविटगायकेभ्यो दास्यामि स्वार्जितं धनम्; एतादृशसंपदा मत्तुल्यो नास्तीति मोदिष्य इत्यज्ञानेन विमोहिताः । वैदिका अप्येवं मुह्यन्तीत्यर्थः ॥ १५ ॥

कृत्याकृत्यविवेकविकलानां परमफलं प्रकटयति—

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरके ऽशुचौ ॥ १६ ॥**

अनेकेति । अनेकमनोरथाविष्टं चित्तमनेकचित्तम्, तेन विभ्रान्ता आसुराः पुरुषाः, यथा मत्स्याः सूत्रजालसमावृताः तथा ते ऽपि स्वाज्ञानमोहमयजालसमावृता भूत्वा कामोपभोगेष्वभिनिविष्टाः अशुचौ रौरवादिनरके पतन्ति ॥ १६ ॥

वैदिकानामासुरधर्मप्रवृत्तावपि नरकपातो नास्तीति तत्राह—आत्मेति द्वाभ्याम् ।

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

आत्मेति । आत्मसंभाविताः सर्वगुणविशिष्टा वयमित्यात्मनैवात्मानं स्तुवन्तो न तु सन्मार्गगामिभिः संभाविता वैदिका आसुराः, सकलतमितरतः स्वापहारिषु यदृच्छया प्रायेषु सम्पत्ति तेषु स्वाधिकत्वबुद्धिविकल्पत्वात् स्तब्धा अनम्रा अम्मानेते न नमन्तीति विक्षिप्तचित्ता भूत्वा धनेन संजातो यो मानो

मदश्च ताभ्यामन्विता सन्त, नाममात्रेणऽय यज्ञा ते नामयज्ञा दीक्षित सोमयाजी वाजपेयीत्यादिनाममात्रसिद्धये दम्भेन न तु श्रद्धया अविधि पूर्वक यथा भवति तथा नामयज्ञै वाचारम्भणपर्यवसानै यजन्ते । तादृश यज्ञफल रौरवादावनुभवन्तीत्यर्थ ॥ १७ ॥

आसुरवैदिकानामविधिपूर्वकत्वमेव प्रपञ्चयति—

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तो ऽभ्यसूयकाः ॥ १८ ॥**

अहकारमिति । आसुरवैदिका स्वप्ने ऽप्यप्राप्यान्सद्गुणानात्मन्यारोप्यानेकसुगुणविशिष्टो ऽहमिति यो ऽभिमान सो ऽहकार तम्, कामरागान्वित पराभवनिमित्त सर्वानर्थमूल बलम्, यस्योद्भवमात्रेण स्वधर्मपराङमुखो भवति स दर्प तम्, स्त्र्यादिविषयाभिलाप काम तम्, तदभिलापकुण्ठन भव क्रोध त च सश्रिता सन्त सर्वप्रत्यग्रूप मामात्मपरदेहेषु प्रद्विषन्त सन्तो नामयज्ञैर्यजन्ते । स्वपरदेहेषु भगवद्द्वेष कथमिति तत्रोच्यते । नामयज्ञेषु श्रद्धावैकल्यात् स्वार्थासमात्रमतिरिच्यते । तथैव पश्वादीनामविधिहिंसया चैतन्यद्रोह एवाविशिष्यत इति प्रद्विषन्त इत्युक्तम् । किं चाभ्यसूयका परश्रेयोऽसहिष्णुत्वेन दुर्गुणविकल्पेषु सत्स्वपि दोषारोपका इत्यर्थ ॥ १८ ॥

आसुरवैदिकानामासुरस्वभावप्रच्युतिर्जात्वपि न भवतीत्याह— तानिति द्वाभ्याम् ।

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

तानिति । आसुरैर्वैदिका ये तान् सन्मार्गप्रतिपक्षान् स्वात्मपर देहेषु मामीश्वरं द्विषतो नराधमान् अत एव क्रूरानशुभाचारानासुरीषु व्याघ्रसर्पादियोनिष्वेवाजस्रं क्षिपामि । परमेश्वरो ऽहं तेषां तादृशं फलं ददामीत्यर्थः ॥ १९ ॥

आसुरैर्वैदिकानामपि बहूना जन्मनामन्ते श्रेयो भविष्यतीति तत्राह—

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

आसुरीमिति । मूलाविद्याऽऽरूढा मूढा जन्मनि जन्मनि प्रतिजन्म आसुरीं सर्पादियोनिमापन्ना सन्त हे कौन्तेय! मां प्रत्यगभिन्नब्रह्मरूपं वासुदेवमप्राप्यैव ततो ऽप्यधमां मशकादियोनिप्राप्तिलक्षणां कुत्सितां गतिं यान्ति । मामप्राप्यैवेत्येवकारात् निःश्रेयसप्राप्तिः कदाचिदपि तेषां नास्तीति द्योत्यते ॥ २० ॥

उक्तासुरीदोषपरिहारोपायाभावात् कस्यापि निःश्रेयसप्रवृत्तिर्विरला भवेदित्याशङ्कायामासुरीदोषमूले भगवद्भक्तिखड्गतो निर्मूलिते निःश्रेयसे प्रवृत्तिः स्यादित्युपदिशति—त्रिविधमिति द्वाभ्याम् ।

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

त्रिविधमिति । यस्मिन्नासुरीसम्पद्गणो ऽनन्तो ऽप्यन्तर्भवति, यत्सर्वानर्थमूलम्, यत्परिहारेणासुरीसम्पद्वृन्दं निर्मूलं भवति, तदिदं हि नरकस्य द्वारं नरकप्राप्तिसाधनत्वात् आत्मनो नाशनं नीचयोनिप्रापकत्वात् । तत्कि

विधमिति तत्राह—त्रिविधमिति । कथम् ?अप्राप्तविषयाभिलाषः कामः, स यथा सर्वानर्थमूलम्, कामेन प्रेरितो जन्तुर्मातरमपि कामयत इति प्रसिद्धं कामस्य स्वानर्थमूलत्वम् । तथा क्रोधः, क्रोधाविष्टः पितॄनपि हन्तुमीहते । यथा क्रोधस्तथा लोभः, लोभः सर्वगुणान् हन्तीति प्रसिद्धम् । यस्मादेतत् कामादित्रयमात्मनो नीचयोनिद्वारं तस्मात् भागवतसङ्गजनितभगवद्भक्तिखड्गत एतत्कामादित्रयं त्यजेदुन्मूलयेदित्यर्थः ॥ २१ ॥

एतत्त्यागात्किं फलं स्यादित्यपेक्षायामाह—

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥**

एतैरिति । हे कौन्तेय ! तमसो नरकस्य नीचयोनिप्राप्तेरपि द्वारभूतैरेतैः त्रिभिः कामादिभिः विमुक्तः, तेन नरकानर्हत्वात् नरः स्वात्मनः श्रेयःसाधनं निष्कामकर्मतपोयोगभगवद्भजनादिकमाचरति, ततस्तदनुष्ठानप्रभवमत्यगमिवत्रह्मज्ञानेन स्वाविद्यातत्कार्यलक्षणासुरीसंपदः परां गतिं मुक्तिं याति प्राप्नोति ॥ २२ ॥

सर्वासुरसंपत्त्यागहेतुनिःश्रेयससाधनाचरणस्य शास्त्रमूलकत्वात् तदेव प्रमाणम्, तद्व्यतिरेकेण कामकारेण वर्तमानस्य पूर्वविपरीतफलमाह—

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

य इति । यः पुरुषः कर्तव्याकर्तव्यलक्षणशास्त्रविधिं विधिप्रतिषेधार्थमुत्सृज्य कामकारतः स्वेच्छाचरणेन वर्तते सो ऽयं स्वेच्छाचारी

पुरुषार्थोपयोगिनीं सिद्धिं नाप्नोति । नापि सुखं नापि परां प्रकृष्टां गतिं स्वर्गमनुष्यादिलोकं वा आप्नोतीत्यर्थः ॥ २३ ॥

यतः स्वेच्छाऽऽचारतः पुरुषार्थत्रैरूप्यं भवत्यतः शास्त्रानुरोधेन निःश्रेयससाधनमनुष्ठेयमित्युपसंहरति—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥ इति ।**

इति श्रीमद्भगवद्गीतासु० दैवासुरसंपद्विभागयोगो नाम षोडशो ऽध्यायः ॥

तस्मादिति । यस्मादेवं तस्मात् ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायां शास्त्रं प्रमाणं ज्ञानसाधनप्रमाणं भवतु । इदं कुर्यादिदं न कुर्यादिति शास्त्रविधानोक्तं ज्ञात्वा ज्ञानसाधनीभूतस्वाश्रमोचितं कर्म कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थं । इतिशब्द अध्यायपरिसमाप्त्यर्थः ॥ २४ ॥

आसुरीं संपदं त्यक्त्वा दैवीमाश्रित्य भिक्षव ।
यन्निष्फलपदं यान्ति तत्प्रसीदतु मे ऽनिशम् ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकायां षोडशो ऽध्यायः ॥

# सप्तदशो ऽध्यायः

शुद्धसत्त्वमयीं श्रद्धामाश्रितो ऽन्यत्परित्यजन् ।
ब्रह्मज्ञानाधिकारीति वक्तु सप्तदशोद्यम ॥

पूर्वाध्यायान्ते 'य शास्त्रविधिमुत्सृज्य कामकारेण वर्तते । न स सिद्धिमवाप्नोति' इत्यादिना शास्त्रोक्तविधिमुत्सृज्य कामकारतो वर्तमानस्य ज्ञानाधिकाराभाव प्रकटित । तत्र कामकार विना शास्त्रविधिमतिक्रम्य श्रद्धाया वर्तमानाना किं ज्ञानाधिकारो ऽस्ति न वेति जिज्ञासया भगवन्त प्रत्यर्जुन उवाच—

अर्जुन उवाच—

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धया ऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

य इति । हे कृष्ण ! ये स्वाज्ञोल्लङ्घिन पुरुषा केचित् एव कर्तव्य मेव न कर्तव्यमिति श्रुतिस्मृतिचोदनालक्षण शास्त्रविधिमुत्सृज्यान्धपरपरया श्रद्धया ऽऽस्तिक्यबुद्ध्या ऽन्विता सन्तो देवादीन्यजन्ति तेषा शास्त्रानभिज्ञाना देवादियजनलक्षणा निष्ठा तु का कीदृशी ? किं सत्त्व सात्त्विकी, आहोस्विद्रज राजसी, उत तम तामसीति प्रश्न । न च शास्त्रविधिमुत्सृज्य यजन्त इत्यादिना वुद्ध्वा ऽपि शास्त्रार्थं तमुल्लङ्घ्य कामकारतो वर्तन्त इति

वाच्यम्, तेषां श्रद्धापूर्वकयजनानुपपत्तेः । न हि शास्त्रविरुद्धे ऽर्थे शास्त्रज्ञानां श्रद्धेदेति । केवलदुःखबुद्ध्या ऽऽलस्याद्वा शास्त्रार्थपरिचयपराङ्मुखाः सन्तः अन्धपरंपरया श्रद्धया कश्चिद्देवताऽऽराधनादौ प्रवर्तन्त इति भावः ॥ १ ॥

अर्जुनकृतप्रश्नस्य सामान्यविषयत्वेन प्रतिवचनानर्हत्वमभिप्रेत्य प्रकारान्तरेण प्रतिवचनं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

त्रिविधेति । शास्त्रार्थज्ञानां प्रत्यगभिन्नब्रह्मैवविषया सात्त्विकी श्रद्धैकैव । देहिनामन्धपरंपरया प्रवर्तमानाना स्वभावजा श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा भवति । स्वभावो नाम जन्मान्तरकृतधर्माधर्मादिसंस्कारो यो मरणकाले ऽभिव्यज्यते सो ऽयमित्यर्थः । स्वभावमन्यथाकर्तुं हि शास्त्रं प्रवृत्तं यतस्तज्ज्ञानं तेषां नास्ति अतः केवलस्वभावजश्रद्धा त्रिविधेति यस्या निष्ठां त्वं पृच्छसि तामिमां त्रिविधां श्रद्धां शृणु । श्रुत्वा अवधारयेत्यर्थः ॥ २ ॥

देवादिपूजाविषया सात्त्विकी श्रद्धा, यक्षराक्षसादिपूजाविषया राजसी, भूतप्रेतपिशाचादिपूजाविषया तामसीति श्रद्धायास्त्रैविध्यं कथमित्यपेक्षायां रजस्तमोमिश्रसत्त्वत्रैविध्यं पुरस्कृत्य श्रद्धाया अपि त्रैविध्यं संभवतीत्याह—

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयो ऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

सत्त्वेति । विवेकिनो ऽविवेकिनो वा सर्वस्य लोकस्य सत्त्वतारतम्यानुरूपा श्रद्धा भवति । यद्येवं तत किं स्यादिति तत्राह—श्रद्धेति । यो ऽयं पुरुष संसारी जीव श्रद्धामय श्रद्धाप्रचुरो भवति । या श्रद्धा यस्य जीवस्य सो ऽयं यच्छ्रद्ध तच्छ्रद्धारूप एव स भवति ॥ ३ ॥

कथं पुन पुरुषस्य सात्त्विकादिश्रद्धा ज्ञातुं शक्येत्यपेक्षाया कार्यैणानुमेयेत्याह—

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

यजन्त इति । सत्त्वगुणप्रधाना सात्त्विका जना सत्त्वप्रकृतीन्देवानेव यजन्ते । रजोगुणप्रधाना राजसास्तु रज प्रकृतीन्यक्षाद्रक्षांसि च यजन्ते । एतेभ्यो ऽन्ये तु तामसा प्रेतान् स्वाश्रमाचारभ्रंशात प्राप्तभूतवायुशरीरान् भूतगणान् ब्राह्मचादिचामुण्डाऽन्तमातृकाऽऽदीन्यजन्ते । एवमुक्तप्रकारेण सत्त्वादिनिष्ठा स्वस्वकार्यलिङ्गेन द्रष्टव्या । लोके तावत् सहस्रेषु कश्चिदेव सत्त्वनिष्ठो भूत्वा देवान् यजते । प्रायशो बाहुल्येन रजोनिष्ठास्तमोनिष्ठाश्च प्राणिनो भवन्तीति भाव ॥ ४ ॥

राजसतामसेषु पुनर्विशेषमाह—अशास्त्रविहितमिति द्वाभ्याम् ।

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

अशास्त्रविहितमिति । केचित्पुरुषा शास्त्रविधिमजानन्तो ऽपि पुरातनपुण्यसंस्कारत सात्त्विका भवन्ति । केचिन्मध्यमा राजसा , केचिदधमा-

स्तामसाः । ये तु पुनरत्यन्तमन्दभाग्यनान्विताः पापण्डसङ्गतत्तदाचारवर्तिनो जनाः यच्छास्त्रबहिर्गतं तदशास्त्रविहितं प्राणिनामात्मनश्च घोरं पीडाकरं तपस्तप्यन्ते । इत्थं तपः कैर्योगतः तप्यन्त इति तत्राह—दम्भेति । दम्भश्च धर्मध्वजित्वं देहादावात्मभावो ऽहंकारश्च, ताभ्यां संयुक्ताः, कामश्च रागश्च कामरागौ तत्संस्कृतं बलं कामरागबलं तेनान्विताः कामरागबलान्विताः ये वर्तन्ते तानासुरनिश्चयान् विद्धि इत्युत्तरेणान्वयः ॥ ५ ॥

पुनस्तानेव प्रकारान्तरेण विशदयति—

**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

कर्शयन्त इति । श्रुतिस्मृती हि भगवच्छासनरूपे, तयोश्चेतो येषां न विद्यते ते खल्वचेतसो मन्दप्रज्ञा अविवेकिनः अत्यन्ततामसाः पुरुषाः ; शीर्यत इति शरीरम्, तस्मिन् शरीरे तिष्ठतीति शरीरस्थो भूतग्रामो भूतसमुदयः, तं करणग्रामं तद्भावाभावप्रकाशकत्वेन शरीरस्यान्तः हृदये तिष्ठामीत्यन्तःशरीरस्थः, तं मां चान्तःशरीरस्थं मिथ्याकामाभिनिवेशतो सुषोपवासादिभिः कर्शयन्तो ये तपश्चरन्ति तानसुराणां निश्चयो येषां तानासुरनिश्चयान् परिहरणार्थं विद्धि । मच्छासनरूपश्रुतिस्मृत्युक्ताश्रमाचारवैरल्यतो मद्भावविकलतया देहादावात्मत्वात्मीयत्वाभिमानो मत्कर्शनमित्यर्थः ॥ ६ ॥

आहारयज्ञतपोदानानां सात्त्विकादिभेदं दर्शयति—आहार इत्यादिभिस्त्रयोदशभिः—

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

आहारस्त्विति । सर्वस्य प्राणिजातस्याहारो ऽन्नादि यथा त्रिविध प्रियो भवति, तथा यज्ञतपोदानानि च त्रिविधानि भवन्ति । तेषा वक्ष्यमाणमिम भेद शृणु । श्रुत्वा सत्त्वाहारयज्ञतपोदानावष्टम्भेन रजस्तमोगुणवर्धकमाहारादिक परित्यजेत्यर्थ ॥ ७ ॥

सात्त्विकमाहार दर्शयति—

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥**

आयुरिति । आयुर्जीवनम् , सत्त्वमुत्साह , बल सामर्थ्यम् , आरोग्य रोगराहित्यम् , सुख चित्तस्वास्थ्यम् , प्रीति परमो हर्ष , आयुश्च सत्त्व च बल चारोग्य च सुख च प्रीतिश्च तासामायु सत्त्वबलारोग्यसुखप्रीतीना विवर्धना , ते च रसोपेता रस्या , स्नेहवन्त स्निग्धा , देहे चिरकालस्थायिन स्थिरा , आस्वादनमात्रेण हृदयप्रिया हृद्या , एवभूता आहारा सात्त्विकप्रकृति विशिष्टपुरुषप्रिया सात्त्विकैरेव भोज्या इत्यर्थ ॥ ८ ॥

राजसाद्यमाहारविशेष दर्शयति—

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

कट्विति । अतिशब्द कट्वादिषु सप्तस्वपि सबध्यते । निम्बादिरति कटुश्च । अत्यम्लश्च अतिलवणश्च अत्युष्णश्च प्रसिद्ध । मरीच्यादिरतितीक्ष्णश्च हिङ्ग्वादिरतिरूक्षश्च सर्षपादिरतिविदाही च कट्वम्ललवणात्युष्णतीक्ष्ण रूक्षविदाहिन । एते आहारा राजसप्रकृतिविशिष्टपुरुषस्येष्टा । तदाहार

फलमाह—दुःखेति । तात्कालिकहृदयसंतापादि दुःखम्, पश्चाद्भावि दौर्मनस्यं शोकः, व्याधिरामयः, तान्प्रयच्छन्तीति दुःखशोकामयप्रदाः सात्त्विकप्रकृतिमिच्छता परित्याज्या इत्यर्थः ॥ ९ ॥

तामसप्रकृतिभोज्यमाहारविशेषं दर्शयति—

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

यातयाममिति । यस्य पक्वस्यौदनादेः शैत्यावस्थाहेतुः यामो यातः तद्यातयामम्, निष्पीडितसारं गतरसम्, दुर्गन्धं पूति, दिनान्तरपक्वं पर्युषितम्, अन्यभुक्तावशिष्टमुच्छिष्टम्, अभक्ष्यत्वात्कलञ्जाद्यमेध्यम्, एवंविधं भोजनं तामसप्रकृतिविशिष्टपुरुषभोज्यं प्रियम् । सात्त्विकप्रकृतिमिच्छतैतदपि त्याज्यमित्यर्थः ॥ १० ॥

अथेदानीं यज्ञस्यापि त्रैविध्यमुच्यते—अफलेति त्रिभिः ।

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥**

अफलेति । फल्गुतया लीयन्त इति फलानि, तेषामाकाङ्क्षा फलाकाङ्क्षा, सा येषां न विद्यते ते अफलाकाङ्क्षिणः, तैरफलाकाङ्क्षिभिः पुरुषैरीश्वराराधनलक्षणनिष्कामधिया यज्ञकर्म यष्टव्यमेवेति मनः समाधाय विधिना ऽऽवश्यिकतया दृष्टो विहितो यो यज्ञः इज्यते अनुष्ठीयते स सात्त्विको यज्ञः चित्तशुद्धिहेतुत्वात् ॥ ११ ॥

सात्त्विकयज्ञमुक्त्वा राजसयज्ञं दर्शयति—

**अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥**

अभिसंधायेति । भरताना कौरवाणां श्रेष्ठत्वात् हे भरतश्रेष्ठ ! तुशब्द सत्त्वयज्ञवैलक्षण्यद्योतक । स्वर्गादि फलमभिसंधायोद्दिश्य दम्भार्थं महत्त्वख्यापनार्थमपि च यो यज्ञ इज्यते तं यज्ञं राजसं विद्धि चित्तशुद्ध्यनुपयोगात् ॥ १२ ॥

तामसयज्ञमाह—

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनमिति । चोदनास्पर्शानर्हत्वात् विधिहीनम्, ब्राह्मणादिभ्यो यस्मिन्यज्ञे ऽन्नमसृष्टमदत्तं सो ऽयमसृष्टान्नस्तम्, मन्त्रैर्हीनम्, तत्र हेतुरदक्षिणम् उक्तिमात्रदक्षिणं पश्चाद्दास्याम इति, अत एव श्रद्धाविरहितं च यज्ञं तामसमिति शिष्टा परिचक्षते कथयन्ति । ऐहिकामुष्मिकफलवैरल्यात् राजसतामसयज्ञौ सात्त्विके त्याज्याविति ॥ १३ ॥

अथेदानीं शारीरादिभेदेन तपसस्त्रैविध्यमुच्यते—देवेति त्रिभि ।

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

देवेति । देवा इन्द्रादयः द्विजाः श्रुताध्ययनसंपन्नाः गुरवो देशिकाः प्राज्ञा गुरुतुल्याः, तेषां पूजनं बाह्यशौचमार्जवमृजुत्वं ब्रह्मचर्यं गुरुकुलवासः अहिंसा च प्राणिमात्रापीडनम् । एतत्सर्वं शरीरेण निर्वर्त्यत्वात् शारीरं तप उच्यते ॥ १४ ॥

शारीरं तप उक्त्वा वाचिकं तप उदाहरति—

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**

अनुद्वेगेति । प्राणिमात्रस्याप्युद्वेगं भयं न करोतीत्यनुद्वेगकरं वाक्यं यत् तत्; किंविशेषणविशिष्टम्? सत्यं यथाभूतार्थभाषणं प्रियं दृष्टार्थाविरोधि हितं चादृष्टार्थाविरोधि । अनुद्वेगादिभिश्चतुर्भिर्विशेषणैर्वाक्यं विशिष्यते । चकारः चतुर्विशेषणसमुच्चयार्थः । परप्रत्ययार्थप्रयुक्तानुद्वेगकरवाक्यस्यानृतोक्तित्ववारणार्थं सत्यपदम्, दृष्टदोषनिवारणाय प्रियपदम्, अदृष्टदोषनिवारणाय हितपदम्, एतद्विशेषणविशिष्टं वाक्यं प्राङ्मुखत्वपवित्रपाणित्वादिविधिमनतिक्रम्य स्वाध्याय ऋगादिः, तस्यावर्तनमभ्यसनं चैव वागिन्द्रियनिर्वर्त्यत्वात् वाङ्मयं तप उच्यते ॥ १५ ॥

मानसं तपो विदिनष्टि—

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

मन इति । मनसः प्रसादः मंस्त्यतागत्यच्छताऽऽपादनम्, गुण्यादिप्रसादहेत्वन्तःकरणवृत्ते: सौमनस्यं सौम्यत्वम्, 'यच्चेद्वाद् मनसी

प्राज्ञ[1] इति श्रुत्यनुरोधेन वाक्संयमस्यापि मन सयमहेतुत्वादिति मन सयमो मौन मनन वा, आत्मन करणग्रामस्य स्वार्थेभ्यो निरोध आत्मविनिग्रह, परैर्व्यवहारकाले ऽपि कुटिलतावैरल्य यत्तत्तपो मानसमुच्यते ॥ १६ ॥

कायवाङ्मनोनिर्वर्त्य तप कथ त्रैविध्यमर्हतीति तत्राह—श्रद्धयेति त्रिभि ।

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥**

श्रद्धयेति । अफलाकाङ्क्षिभि फलाकाङ्क्षारहितै फलसङ्गतो नरक भवतीति य मन्यन्ते तै सत्त्वप्रकृतिभि नरै परया श्रद्धया युक्तै यत्तप कायिकवाचिकमानसभेदेन त्रिविध तप्त तत्तप सत्त्वनिर्वृत्तत्वात् सात्त्विक मिति परिचक्षते शिष्टा कथयन्तीत्यर्थ ॥ १७ ॥

सात्त्विकतपोलक्षणमुक्त्वा राजसतपोलक्षणमाह—

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥**

सत्कारेति । राजसप्रकृतिभि साधुरय तपस्वीति परै श्लाघन साधुकार सत्कारश्च प्रत्युत्थानाभिवादनादि मानन मानश्च पादप्रक्षालन धनार्पणादि पूजा च सत्कारमानपूजा, तदर्थं केवल दम्भेन चैव यत् तप क्रियते तत्तपो राजसमनियतफलत्वाचल क्षणमङ्गुरत्वादध्रुवमिति च प्रोक्तम् ॥ १८ ॥

[1] कठ १, १३

तामसं तप आह—

**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

मूढेति । मूढग्राहो ऽविवेकिनिश्चय, तेन मूढग्राहेणात्मन पीडया परस्योत्सादनार्थं नाशनार्थं वा यत्क्रियते तत्तप तामसमुदाहृतम् ॥ १९ ॥

दानस्यापि त्रैविध्यं यत्प्रतिज्ञातं तत्र सात्त्विकं दानं संक्षिपति—

**दातव्यमिति यद्दानं दीयते ऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

दातव्यमिति । अनुपकारिणे प्रत्युपकारासमर्थाय निरपेक्षं यथा भवति तथा दातव्यमिति यद्दानं दीयते कुरुक्षेत्रादिपुण्यदेशे संक्रान्तिग्रहणादिपुण्यकाले च सषडङ्गवेदपारगब्रह्मविदादौ पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

राजसं दानमाह—

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१ ॥**

यत्त्विति । अयं तु समर्थं मा प्रत्युपकरिष्यतीति प्रत्युपकारार्थं पुनरस्य दानस्येदमिहामुत्रयुग्मप्रापकं भवेदिति फलमुद्दिश्य वा परिक्लिष्टं दुःखान्वितं यद्दीयते तद्दानं राजसमुदाहृतम् ॥ २१ ॥

तामस दान व्यनक्ति—

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**

अदेशेति । देशकालपात्रसपत्त्वावपि म्लेच्छादिसकीर्ण पापदेशो यो ऽयमदेश तस्मिन् सक्रान्त्यादिविशेपरहितत्वात् अकाले नटविटगायकेभ्यो ऽपात्रेभ्यो यद्दान दीयते, प्रमादतो देशादिसपत्तौ वा तत्र प्रियवचनपाद प्रक्षालनपूजाऽऽदिवैरल्यादसत्कृत स्वनीचवुद्धितो ऽवज्ञात च तद्दान ताम समुदाहृतम् ॥ २२ ॥

आहारयज्ञतपोदानाना राजसत्वादिदोषापनुत्तये को ऽयमुपाय इत्य पेक्षाया तेपा साद्गुण्यायेममुपायमाह —

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

ओं तत्सदितीति । 'ओमित्येतदक्षरमिद सर्वम्[1]' इत्यादिश्रुते ओमिति, 'तत्त्वमसि' इति प्रत्यक्परचिदैक्यप्रतिपादकश्रुते तदिति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्[2]' इति श्रुते सदिति च निर्दिश्यते ऽनेनेति ब्रह्मण ओं तत्सदिति त्रिविधो नामनिर्देशो वेदान्तेषु ब्रह्मविद्भि स्मृतश्चिन्तित । त्रितयोच्चारणनान्यतमोच्चारणेन वा रजस्तमोदोषप्रयुक्त वैगुण्यमपि यज्ञादिकस्य साद्गुण्य भवेदित्यर्थ । पुरा सर्गादौ विधात्रा तेन निर्देशत्रयेण ब्राह्मणा वेदाश्च यज्ञाश्च विहिता निर्मिता ॥ २३ ॥

[1] मा १ १
[2] छा ६ २ १

ओंकारादीनां प्राशस्त्यं प्रकटयति—

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**

तस्मादिति । यस्मादेवं ब्रह्मणो निर्देशः प्रकटितः तस्मादोमित्युदाहृत्योच्चार्य ब्रह्मवादिनां वेदवादिनामिदं कर्तव्यमिदं न कर्तव्यमिति विधायकत्वात् विधानं शास्त्रम्, तेनोक्ता चोदिता यज्ञदानतपसां क्रिया सततं प्रवर्तन्ते अङ्गलोपे ऽपि साङ्गा भवन्तीत्यर्थः ॥ २४ ॥

ब्रह्मणः प्रथमनिर्देशमुक्त्वा द्वितीयनिर्देशमाह—

**तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

तदिति । मोक्षकाङ्क्षिभिः पुरुषैः तदिति ब्रह्मणो द्वितीयनिर्देशमुच्चार्य यज्ञादिकर्मफलमनभिसंधाय यज्ञक्रिया तपःक्रियाश्च क्षेत्रहिरण्यादिभेदेन विविधा दानक्रियाश्च क्रियन्ते निर्वर्त्यन्ते ॥ २५ ॥

ब्रह्मणस्तृतीयं निर्देशं निर्दिशति—सदिति द्वाभ्याम् ।

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

सदिति । पुत्रप्राप्त्यविद्यमानस्यासतो जन्मनि सद्भावे असाधोः साधुभावे च ब्रह्मणस्तृतीयमभिधानं सदित्ययं प्रयुज्यते । यथा सद्भावसाधु-

भावयो सच्छब्द प्रयुक्त तथा विवाहादौ प्रशस्ते कर्मणि हे पार्थ ! सच्छब्दो युज्यते प्रयुज्यत इत्यर्थ ॥ २६ ॥

विधान्तरेण सच्छब्दस्य विनियोग विवृणोति—

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञ इति । यज्ञ तपसि दाने च या स्थिति तात्पर्येणावस्थान सा सदिति चोच्यत । ब्रह्मवादिभिरिति शेष । यस्य ब्रह्मणो ऽभिधानत्रय प्रकृतम् तत्सदिति यज्ञदानतप क्रियाऽऽदिक सर्व तदर्थीय फलाभिसंधिवै कल्येन यज्ञादिकर्मणामनुष्ठीयमानत्वात् सर्व सदित्येवाभिधीयते । तदेतय ज्ञादिक कर्म रजस्तमोदोषेण विगुणत्व गतमपि ओं तत्सदिति ब्रह्मणो ऽभि धानयोगात् सात्त्विकत्वमुपेत्य साद्गुण्य भजेदित्यर्थ ॥ २७ ॥

यत श्रद्धापूर्वकमनुष्ठीयमान कर्म चित्तशुद्धिगम्यज्ञानद्वारा मोक्षहे तुर्भवति, अतो ऽश्रद्धया ऽनुष्ठीयमान कर्मजात सर्वमसदेवेत्युपसहरति—

**अश्रद्धया हुतं दत्त तपस्तप्तं कृत च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥ इति ।**

इति श्रीमद्भगवद्गीतासु० श्रद्धात्रयविभागयोगो नाम सप्तदशो ऽध्याय ।

अश्रद्धयेति । अश्रद्धया ऽग्नौ हुत ब्राह्मणेभ्यो दत्त कृच्छ्रचान्द्राय-णादि तपस्तप्त स्तुतिनमस्कारादिक यत्किंचित्कर्म कृत च यत् हे पार्थ ! तत्सर्वमसदित्युच्यते मत्प्राप्त्यहेतुत्वात् । न च तदष्टुत्वायासकृतमपि प्रेत्य

मृत्वा ऽपि परमार्थफलाय कल्पते विगुणत्वात् । नो इहास्मिन् लोके ऽपि शर्म प्रयच्छति अयशस्करत्वात् । तद्विपरीताना शास्त्रार्थज्ञानाभावे ऽपि श्रद्धावता राजसतामसाहारादित्यागेन सात्त्विकाहारादिसेवया सत्त्वप्रधा-नाना ज्ञानद्वारा विदेहकैवल्य सिध्यतीति भाव । इतिशब्द अध्याय परिसमाप्त्यर्थ ॥ २८ ॥

श्रद्धयो तत्सदित्यवमनुसधाय सूरय ।
यद्विष्णो परम धाम यान्ति तन्मे प्रसीदतु ॥

इति श्रीमद्भगवद्गीतार्थप्रकाशिकाया सप्तदशो ऽध्याय ॥

## अष्टादशो ऽध्यायः

सर्ववेदान्तसिद्धान्तगीताशास्त्रार्थनिर्णयम् ।
पार्थायाष्टादशेनाह संक्षेपात्परमेश्वर ॥

सर्ववेदान्ताना सिद्धान्तो गीताशास्त्रकृत्स्नार्थस्य चास्मिन्नध्याये संग्रहेण वक्तव्य इत्यष्टादशो ऽध्याय आरभ्यते । पूर्वोक्तार्थानामत्रावगम्यमानत्वात् अर्जुनस्तु 'सर्वकर्माणि मनसा सन्यस्यास्ते सुखं वशी' 'नवद्वारे पुरे देहे नैव कुर्वन्न कारयन्' 'यस्त्वात्मरतिरेव स्यात्' 'तस्य कार्यं न विद्यते' 'सन्यासयोगयुक्तात्मा' इत्यादिना कायिकवाचिकमानसकर्मणा संन्यासो वर्णित । तथा च 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रय ' 'सर्वकर्मफलत्याग तत कुरु यतात्मवान्' इत्यादिना कर्मफलमात्रत्यागत कर्मानुष्ठानमुक्तम् । न हि मिथो विरुद्धं सर्वज्ञो भगवानुपदिशत् । अत कर्मसंन्यासकर्मफलत्यगयोरविरोध बुभुत्सुरर्जुन उवाच—

अर्जुन उवाच—

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

संन्यासस्येति । भक्तापन्निवारणे महान्तौ बाहू यस्य स त्वं हे महाबाहो! हृषीकेश! सन्यासस्य त्यागस्य च पृथक्तत्त्वं याथाऽऽत्म्यं हे

केशिनिषूदन! वेदितुमिच्छामि। कृपया वदेत्यर्थः। केशी नाम हयवेषधारी कश्चनासुरः, तं निषूदितवान्भगवानिति ॥ १ ॥

अर्जुनप्रश्नप्रतिवचनं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥ २ ॥**

काम्यानामिति। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादीना काम्याना कर्मणा न्यासं परित्यागं संन्यासं कवय पण्डिता विदु., विचक्षणास्तु सर्वेषा काम्याना नित्यनैमित्तिककर्मणा फलमात्रपरित्यागं त्यागं प्राहु, न तु सर्वकर्मत्यागम्। काम्यकर्मपरित्याग फलपरित्याग इति च संन्यासत्यागशब्दयोरर्थव्यवस्थेति न पुनरुक्त, तयोर्मन्दमध्यमाधिकारिविषयत्वात्। मन्दस्तावत् बन्धहेतुभिया काम्यकर्मजातं परित्यजति। तस्मादुत्कृष्ट कश्चिन्मध्यम स्वचित्तशुद्धये सर्वं कर्म कृत्वा तत्फलमात्रं परित्यजति। उत्तमाधिकारी तु विशुद्धचित्तत्वेन कर्मतत्फलप्रयोजनाभावात् समग्रं कर्म परित्यजति। नित्यादिकर्मणा फलाभावाद्तथापुदत्यागवचस्यागः कथमुपपद्यते इति चेन्न, नित्यादिकर्मणामपि फलवत्त्वप्रदर्शनादनिष्टमिष्टं मिश्रं चेत्यादिना ॥ २ ॥

अविदुष कर्मफलत्याग एव त्यागशब्दार्थो न कर्मत्याग इति मतान्तरमुपन्यस्यति—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३ ॥**

त्याज्यमिति । एके मनीषिण साख्याभिमानिनो न पारमार्थिकसा-ख्यपदमारूढा , चित्तशुद्धयभावे ऽप्यहिंसाशास्त्रावष्टम्भेन हिंसाऽऽदिदोषो ऽप्यस्तीति दोषवत् कर्मबन्धहेतुत्वात् त्याज्य त्यक्तव्यमित्याहु । अपरे तु मीमासका यज्ञदानतप कर्म चित्तशुद्धिहेतुत्वेनाहिंसाशास्त्रापेक्षया यागीय पशुहिंसाया प्रबलत्वान्न त्याज्यमेवेत्याहु । एते विकल्पा अविद्वद्विषया न तु विदुषाम्, तान्प्रति पृथगुपदेशात 'ज्ञानयोगेन साख्याना कर्मयोगेण योगिनाम्' इति यथा ऽस्मिन् सर्वशास्त्रार्थोपसंहारप्रकरणे ऽविद्वासो विचार्यन्ते तथा विद्वासो ऽपि विचार्यन्तामिति चत्, तेषा विचारासहब्रह्मात्मनिष्ठत्वात् 'वेदाविनाशिनम्' 'सर्वकर्माणि मनसा सन्यस्य' 'नैव कुर्वन्न कारयन्' 'सर्वारम्भपरित्यागी' 'गुणातीत ' इत्या दिना परमार्थसाख्याना सन्यासिना विशेषितत्वाज्ज्ञाननिष्ठा सन्यासिनो नेह विचारमर्हन्ति ॥ ३ ॥

तेषा सन्यासिना विकल्पानर्हत्वमर्थादुपन्यस्य विकल्पभेदेषु स्वमत मुपन्यस्यति—

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥**

निश्चयमिति । हे भरतसत्तम ! तत्र विप्रतिपन्ने त्यागे त्यागसन्या सविकल्पे म मम निश्चय शृणु । हे पुरुषव्याघ्र ! त्यागसन्यासयोरैक्य द्योतको हिशब्द । सो ऽय त्याग तामसादिभेदेन त्रिविध शास्त्रेषु सम्य क्प्रकीर्तित । यत सन्यासत्यागाधिकारिणो ऽविद्वास न परमार्थतत्त्वज्ञ साख्या सन्यासिन , अतो ऽयमर्थो दुर्विज्ञेय । यस्मान्न तत्तत्त्वमन्यो वक्तु पारयति तस्मादैश्वर मतमवधारयेति भाव ॥ ४ ॥

कः पुनरसौ त्वदीयो निश्चय इत्यपेक्षायामाह—यज्ञेति द्वाभ्याम् ।

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

यज्ञेति । यज्ञो दानं तप इत्येतत्त्रिविधं कर्मानुत्पन्नचित्तशुद्धिभिः न त्याज्यम् । यज्ञादिकर्मत्यागे चित्तशुद्ध्यनुदयेन ज्ञानानुत्पत्त्या पुरुषार्थासंभवात् तदर्थं मुमुक्षुभिः यज्ञादि कर्म कार्यमेव । किमर्थमेतत्करणीयमिति तत्राह—पावनानीति । कर्मफलाभिलाषविधुराणां मनीषिणां परमेश्वराराधनार्थमनुष्ठितानि यज्ञो दानं तपश्चैव पावनानि चित्तशुद्धिकराणीत्यर्थः ॥ ५ ॥

प्रतिज्ञातार्थमुपसंहरति—

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

एतानीति । यानि यज्ञदानतपांसि पावनानीत्युक्तानि तान्येतान्यपि तु कर्माणि तेषु सङ्गमासक्तिं तत्फलानि च त्यक्त्वा कर्तव्यान्यनुष्ठेयानीति मे मम निश्चितमुत्तमं मतम् । अपितुशब्दाभ्यां फलासक्त्या वा कर्मकर्तव्यता द्योत्यते । ज्ञानरहितस्य केवलकर्मत्यागापेक्षया कर्मकरणस्य स्वर्गादिहेतुत्वेन ज्यायस्त्वात् ॥ ६ ॥

मुमुक्षोस्तावत् 'दूरेण ह्यवरं कर्म बुद्धियोगात्' 'यज्ञार्थात्कर्मणो ऽन्यत्र' बन्धहेतुत्वस्य निश्चितत्वात् निश्चयं शृणु मे तत्रेति प्रतिज्ञाय पावनहेतवे एतान्यपि तु कर्माणि कर्तव्यानीत्युपसंहृत्य कर्तव्यस्य कर्मणः तामसादिभेदेन त्रैविध्यं दर्शयति—नियतस्येति त्रिभिः ।

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

नियतस्येति । बन्धहेतुत्वात् काम्यस्य कर्मणः संन्यासो युक्तः, नियतस्य नित्यकर्मणस्तु संन्यासः परित्यागो नोपपद्यते, चित्तशुद्धिगम्यज्ञानद्वारा मुक्तिहेतुत्वात् । यतो नियतमवश्यं नियमेन कर्तव्यं नित्यं कर्म त्यज्यते विपरीतसिद्धमतो मोहनिमित्तस्तत्परित्यागः तामस इति परिकीर्तितः । मोहस्य तमोरूपत्वात् तथात्वमित्यर्थः ॥ ७ ॥

मोहतस्तामसत्यागमुक्त्वा मोहं विना ऽपि राजसत्यागमाह—

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

दुःखमिति । स कर्ता ब्रह्मज्ञानं विना कायक्लेशभयात् दुःखमिति नित्यं कर्म त्यजेदिति यत्तादृशस्त्यागो राजसो दुःखस्य रजःकार्यत्वात् । स राजसः पुरुषः एवं राजसं त्यागं कृत्वा ज्ञानपूर्वकसर्वकर्मसंन्यासलक्षणस्य त्यागस्य फलं मोक्षं न लभेत् न लभेतेत्यर्थः ॥ ८ ॥

सात्त्विकत्यागं विशिनष्टि—

**कार्यमित्येव यत्कर्म नियतं क्रियते ऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**

कार्यमिति । हे अर्जुन ! नियतमवश्यकर्तव्यतया स्वाश्रमोचितं नित्यं कर्म, तत्र सङ्गं तत्फलं च त्यक्त्वा कार्यमित्येव क्रियत इति यत्कर्म सङ्गफलत्यागः सात्त्विको मतः निश्चित इत्यर्थः ॥ ९ ॥

एवं सात्त्विकत्यागिनो लक्षणमाह—

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्यते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः ॥ १० ॥**

न द्वेष्टीति । मेधया ब्रह्मात्मैक्यज्ञानलक्षणया प्रज्ञया युक्तत्वान्मेधावी ब्रह्मात्मैक्यज्ञानहेतुना सत्त्वेन समाविष्टो भूत्वा ब्रह्मात्मैक्यानुसंधानजनितनिश्चयज्ञानेन च्छिन्नसंशय सन् शरीरारम्भकत्वेन संसारकारणमकुशलमशोभनं काम्यं कर्म न द्वेष्टि, कुशले नित्यकर्मणि चित्तशुद्धिगम्यज्ञानद्वारा मोक्षसाधनमिति नानुषज्यते प्रीतिं न करोति, स एव त्यागी जीवन्मुक्त उच्यते । यत्र परकृतपरिभवादि महद् दु खमपि सोढ्वा स्वर्गादिसुखप्रीतिस्त्यज्यते तत्र तात्कालिकसुखदु खसहनं कियदिति भाव ॥ १० ॥

एवमीश्वराराधनलक्षणनिष्कामकर्मानुष्ठानजनितविशुद्धान्त करणो ज न्मादिषड्भावविकाररहितमात्मानं परमात्माभेदेन ज्ञात्वा सर्वकर्माणि मनसा संन्यस्य पुन नैव कुर्वन्न कारयन्नैष्कर्म्यलक्षणा ब्रह्मात्मनिष्ठामर्हतीत्युक्त्वा देहाभिमानिनो ऽबाधितकर्त्रादिज्ञानवत सकलकर्मसंन्यासस्याशोभनत्वात् कर्मफलसङ्गत्यागपूर्वकं कर्मानुष्ठान एवाधिकार· नान्यत्रेति प्रतिपादयति—

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

न हीति । देह बिभर्तीति देहभृत् देहाभिमानी कर्मण्यधिकृतो ऽज्ञो जन , तेन देहभृता कर्माण्यशेषत त्यक्तुं न हि शक्यम् । यस्मादेवं तस्मात् यस्त्वज्ञ कर्मण्यधिकृतो नित्यादिकर्म कुर्वन् कर्मफलाभिसंधिमात्रत्यागी भवति, सो ऽय कर्म्यपि सन् त्यागी संन्यासीत्यभिधीयते स्तूयत इत्यर्थ ।

देहाभिमानिना कर्म त्यक्तुमशक्यमित्युक्त्वा देहाभिमानविकलेन निःशेषत सर्वाणि कर्माणि त्यक्तुं शक्यमिति द्योत्यते ॥ ११ ॥

कर्म तत्फलमाचष्टे—

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥**

अनिष्टमिति । अत्यागिनामज्ञाना कर्मिणा प्रेत्य शरीरपातादूर्ध्वमनिष्टं तिर्यगादिलक्षण नरकमिष्ट देवादिलक्षणम् इष्टानिष्टमिश्रं मानुषलक्षण चेति बाह्यानेककारकव्यापाराधीनधर्माधर्मलक्षणस्य कर्मण स्वप्नमायागन्धर्वनगरवत्फल्गुतया लय गच्छतीति त्रिविध फल भवति । कर्मफलत्यागिना चित्तशुद्धिद्वारा मोक्षहेतुज्ञान भवति । परमार्थसंन्यासिना तु परमहंसपरिव्राजकाना कर्मफलप्रवृत्ति तन्निवृत्तिर्वा न क्वचिदपि सभवतीत्यर्थ ॥ १२ ॥

कर्म कुर्वत कर्मफल कथ न भवेदित्यपेक्षाया तत्फलसङ्गाभावात् तल्लेपो नास्तीत्याह—पञ्चैतानीति पञ्चभि ।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

पञ्चेति । हे महाबाहो' सर्वकर्मणा सिद्धये निष्पत्त्यर्थं ज्ञातव्या पदार्था यस्मिन् शास्त्रे सख्यायन्ते तत्सांख्य वेदान्त, तस्मिन् सांख्ये कृतमिति कर्मोच्यते, तस्यान्त समाप्तिर्यत्र स कृतान्त तस्मिन् कृतान्ते 'सर्वं कर्माखिल पार्थ ज्ञाने परिसमाप्यते' इत्युक्तत्वात् । यानि कृतान्ते

कर्मान्ते ज्ञानार्थे प्रोक्तानि कथितानि तान्येतानि कारणानि वक्ष्यमाण-लक्षणानि पञ्चप्रकारेण मे मम वचनात् वस्तुवैषम्यद्योतनार्थं चेतःसमाधानार्थं वा निबोध अवधारयेत्यर्थः ॥ १३ ॥

तानि कानीत्यत आह—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

अधिष्ठानमिति । इच्छाद्वेषसुखज्ञानादीनामधिष्ठानं शरीरम् इच्छादीनामाश्रयत्वात् तथा चिज्जडग्रन्थिरहंकारः कर्ता प्रवर्तकत्वात् चक्षुरादि-पृथग्विधं करणं च कार्यतः स्वरूपतश्च विविधाः पृथग्भूताः प्राणादीनां चेष्टा व्यापाराः, एतेषु पञ्चमं चक्षुराद्यनुग्राहकं दैवं तदन्तर्यामि चैतन्यं वा पञ्चसंख्यापूरकमित्यर्थः ॥ १४ ॥

तेषामधिष्ठानादीनां सर्वकर्महेतुत्वं विवृणोति—

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

शरीरेति । नरः पुमान् शरीरवाङ्मनोभिः यत्कर्म प्रारभते निर्वर्तयति तत्कीदृशमिति न्याय्यं शास्त्रीयं वा तद्विपरीतमशास्त्रीयं वा यच्चापि देहेन्द्रियादिचेष्टारूपं कर्म तदपि न्याय्यविपरीतग्रहणेन गृहीतं स्यात् । अधिष्ठानादिभिः पञ्चभिरारभ्यमाणस्य कर्मणः त्रिष्वेवान्तर्भावात् शारीरं वाचिकं मानसं चेति कर्म त्रिविधम् । तस्य त्रिविधस्य कर्मणः पञ्चैते अधिष्ठानादयो हेतवः कर्मत्रयस्य तन्निर्वर्त्यत्वात् ॥ १५ ॥

ततः किमित्यपेक्षायामाह—

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

तत्रेति । तत्र प्रकृते कर्मणि यथोक्तैः पञ्चभिर्हेतुभिरेवं निर्वर्त्ये सति केवलमशेषविशेषशून्यमकर्तारमप्यात्मानं कर्तारं यः पश्यति, कस्मात् श्रुत्याचार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वादात्मन तत्त्वं कर्मणो वा याथाऽऽत्म्यं न पश्यति । यत एवमतो दुष्टा कुत्सिता जन्मादिविकृतिहेतुभूता मतिरस्येति दुर्मति· पश्यन्नपि स न पश्यतीत्यर्थ ॥ १६ ॥

क सुमति स्वात्मकर्मणोस्तत्त्वं पश्यन्विमुच्यत इत्यपेक्षायामाह—

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वा ऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१७॥**

यस्येति । यस्य पुरुषधौरेयस्याधिष्ठानादिपञ्चहेतुनिर्वर्त्यकायिकवाचिकमानसकर्मकर्ता ऽहमित्यहंकृतो भाव· कर्तृत्वाभिनिवेशो नोदेति यस्य बुद्धिरिष्टानिष्टबुद्ध्या कर्मसु न लिप्यते अधिष्ठानादीनामेव कर्मत्रयकर्तृत्वालोचनया तदतिरिक्तब्रह्मात्मदृष्टित्वात्, सो ऽयमेवंभूतो विद्वान् परदृष्ट्या सर्वानिमान् लोकान् हत्वा ऽपि स्वदृष्ट्या न हन्ति हननक्रिया न करोति । न च तत्फलै निबध्यते निष्क्रियब्रह्मात्मदृष्टित्वात् । यथा शुक्त्यादौ रजताद्यध्यारोप. तथा अधिष्ठानादिविक्रिया ऽऽत्मन्यध्यस्यते । अतो विद्वान्न हन्ति न निबध्यत इति यदुक्त तद्युक्तम् । शास्त्रादौ तावत् 'नायं हन्ति न हन्यते' इति प्रतिज्ञाय 'न जायते' इत्यादिना

षड्भावविकलत्वमुक्त्वा 'वेदाविनाशिनम्' इत्यादिना विदुष कर्माधिकारतामुन्मूल्य 'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' इत्यादिना सर्वकर्मसंन्यासलक्षणज्ञाननिष्ठा प्रकटीकृत्याहारिमन् प्रकरणे विद्वान् हन्ति न निबध्यत इत्युपसहार कृतं इति पण्डितैः प्रतिपत्तव्यमित्यर्थ ॥ १७ ॥

अधिष्ठानादेरेव कर्तृत्व नात्मन तद्विलक्षणत्वादित्यविक्रियत्व प्रति पादेदानीम् 'चोदनेति क्रियाया प्रवर्तक वचनम्'[1] इति भाष्यानुरोधेन कर्मणा प्रवर्तकत्वं प्रत्याययति—

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

ज्ञानमिति । सर्वमनेन ज्ञायत इति ज्ञानम् । सामान्यविशषतो यज्ज्ञातव्य तज्ज्ञेयम् । अविद्यापरिकल्पितोपाधितो भोक्ता परिज्ञातेत्येतत्त्रय चोद्यते प्रवर्त्यते ऽनयेति त्रिविधा कर्मचोदना । ज्ञानज्ञेयपरिज्ञातृसंनिपातत पञ्चभिरधिष्ठानादिभि आरभ्य कायवाङ्मनोनिर्वर्त्यं त्रिगुणात्मकं ज्ञानादित्रयमालम्ब्य कर्मविधि प्रवर्त्यत इत्यर्थ । तथा चोक्तम् 'त्रैगुण्यविषया वेदा' इति । क्रियते अनेनेति बाह्यान्तरिन्द्रिय करणम्, कर्तुरीप्सिततम कर्म, करणग्रामव्यापारयिता क्रियानिर्वर्तक कर्ता च । एव करणादि त्रिविध कारक सगृह्यते ऽस्मिन्निति कर्मसग्रह । यत सप्रदानादि कारकत्रय परपरया क्रियानिर्वर्तक न तु साक्षात्, अत करणादित्रितयमेव क्रियाहेतुरिति भाव ॥ १८ ॥

[1] शाबर—अ १. पा. २

क्रियाकारकफलानां गुणात्मकत्वेन तद्भेदप्रकटनायावतारयति—

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

ज्ञानमिति । कार्यभेदेन सत्त्वादिगुणाः ख्यायन्ते प्रतिपाद्यन्ते ऽस्मिन्निति गुणसंख्यानं कापिलं शास्त्रम् । तस्मिन् गुणसंख्याने ज्ञानं कर्म च क्रिया न कारकमीप्सिततमत्वात् कर्ता च क्रियानिर्वर्तकत्वात् सत्त्वादिगुणभेदतः प्रत्येकं त्रिधैव प्रोच्यते, तान्यपि वक्ष्यमाणानि ज्ञानादीनि यथावच्छृणु । त्रिधैवेत्येवकारतः सत्त्वादिगुणत्रयातिरेकेण जात्यन्तराभावो द्योत्यते ॥ १९ ॥

इदानीं ज्ञानस्य तावत् त्रैविध्यमुच्यते—सर्वभूतेष्विति त्रिभिः ।

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

सर्वभूतेष्विति । सर्वेषु ब्रह्मादिस्तम्बान्तभूतेषु स्वोपाधितो मिथो विभक्तेषु व्यावृत्तेषु सर्वत्र स्वतः परतो वा न व्येतीत्यव्ययमविभक्तं परमाद्वैतं निर्विकारं भावं प्रत्यगभिन्नब्रह्मतत्त्वं येन ज्ञानेनेक्षते पश्यति तत्तु परमाद्वैतप्रत्यगभिन्नब्रह्मज्ञानं सात्त्विकमिति विद्धि जानीहीत्यर्थः ॥ २० ॥

सात्त्विकज्ञानमुक्त्वा राजसज्ञानमाह—

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

पृथगिति । प्रतिशरीरं पृथक्त्वेन यज्ज्ञानं नानाभावान् चिदाभासान् पृथग्विधान् सर्वेषु भूतेषु शरीरेषु वेत्ति विजानाति ज्ञानस्य कर्तृत्वासंभवात् येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं रजोगुणनिर्वृत्तं विद्धि ॥ २१ ॥

तामसज्ञानमाह—

**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

यत्त्विति । यत्तु नग्नश्रमणानां देहपरिमाणो जीव ईश्वरो वा पाषाण-दार्वादिमात्र इति कार्ये सक्तं कृत्स्नवत् समस्तवद् घटपटादिवत् निर्युक्ति-कत्वात् अहैतुकं वेदान्तप्रमाणवहिर्मुखत्वादतत्त्वार्थवत् प्रमाणयुक्तिवैकल्या-द्विपयतः फलतो वा अल्पं च ज्ञानमस्ति तज्ज्ञानं तामसमुदाहृतम् । तामस-प्राणिज्ञानमीदृशमित्यर्थः ॥ २२ ॥

ज्ञानस्य त्रैविध्यमुक्त्वा कर्मणस्त्रैविध्यमाह —नियतमिति त्रिभिः ।

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

नियतमिति । 'अहरहः संध्यामुपासीत' 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यतया कर्तव्यं नियतं सङ्गरहितमासक्तिवर्जितं फलं प्राप्तुमिच्छतीति फलप्रेप्सुः, तद्विपरीतो ऽफलप्रेप्सुः तेनाफलप्रेप्सुना कर्त्रा ऽरागद्वेषतो रागद्वेषपूर्वकत्वेन यत्कर्म कृतं तत् सात्त्विकमुच्यते ॥ २३ ॥

राजसं कर्माह—

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

यस्त्विति । कामेप्सुना फलेच्छुना मत्समो ऽन्यः श्रोत्रियः को ऽस्तीति साहंकारेण वा यत्कर्म क्रियते, यत्तु पुनः फल्गुफलापेक्षया बहुलायाससाध्यं तत्कर्म राजसमुदाहृतम् । रजोगुणप्राणिनिर्वर्त्यमित्यर्थः ॥ २४ ॥

तामसं कर्माह—

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

अनुबन्धमिति । पश्चाद्भावि शुभाशुभमनुबन्धः, तमनुबन्धं यस्मिन् कर्मणि क्रियमाणे बलार्थयोः क्षयः स्यात् तं क्षयं प्राणिजातहिंसां शक्तोमीदं कर्म समापयितुमिति स्वशक्तिं पुरुषकारं पौरुषं चानपेक्ष्य मोहादविवेकात् यत्कर्मारभते तत्तामसं तमोगुणप्रधानैः निर्वृत्तमुच्यते ॥ २५ ॥

कर्मत्रैविध्यमुक्त्वा कर्तृत्रैविध्यमाह—मुक्त इति त्रिभिः ।

**मुक्तसङ्गो ऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥**

मुक्तसङ्ग इति । कर्मफलेषु मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गः, अनहंवादी अहं करोमीति गर्वाभिनिवेशवैकल्यात्, धैर्यं धृतिरयम् उत्साहः ताभ्यां समन्वितः, केवलस्वाश्रमोचितकर्मफलसिद्ध्यसिद्ध्योः लाभालाभयोः निर्विकारः कर्तृत्वाभिमानविकलो यः कर्ता स सात्त्विक उच्यते ॥ २६ ॥

राजसकर्मकर्तारमाह—

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसाऽऽत्मको ऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

रागीति । दारपुत्रादिषु रागो ऽस्यास्तीति रागी, यथावत्कर्माकरणे ऽपि कर्मफलप्रेप्सुः कर्मफलार्थी, सदा परधनेषु समुत्पन्नतृष्णो लुब्धः देशकालपात्रेषु स्वद्रव्यापरित्यागी वा, प्राणिमात्रहिंसाऽऽत्मकः, अशुचिः विहिताबाह्याभ्यन्तरशौचपराङ्मुखः, इष्टानिष्टलाभालाभप्रयुक्तहर्षविषादान्वितः, एवंभूतो यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥

तामसकर्मकर्तारमाह—

**अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिको ऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥**

अयुक्त इति । श्रुतिस्मृतिविहितव्यापारोचितकर्मण्ययुक्तः, स्वतो विवेकवैकल्यात् प्राकृतः शुश्रूषाचार्यासंस्कृतबुद्धित्वात्, स्तब्धः कस्मैचित् दण्डवन्ननमनात्, शठः स्वसामर्थ्यापरिज्ञानात्; कृतिः परोपकृतिः, निगता कृतिर्यस्य सः निकृतिकः, निकृतिक एव नैकृतिकः सदा परापकारी, अलसः जामितापरवशत्वात्, विषादी अशोच्यानुद्दिश्य सदा शोचनात्, यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोतीति दीर्घसूत्री च, यश्चैवंभूतः 'कर्ता स तामस उच्यते'। कर्तृत्रैविध्यतो ज्ञातृज्ञेययोस्त्रैविध्यमुक्तमिति ज्ञातव्यमिति भावः ॥ २८ ॥

ज्ञानकर्मकर्तृणां त्रैविध्यमुक्त्वा ऽथ बुद्धिधृत्योस्त्रैविध्यं प्रतिपादयितुं भूमिकां करोति—

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**

बुद्धेरिति । हे धनजय ! मानुषदैवधनयोर्जितत्वात्, सत्त्वादिगुणतो बुद्धेर्धृतेश्च भेद त्रिविधमशेषेण प्रोच्यमान पृथक्त्वेन विवेकत शृणु ॥ २९ ॥

सात्त्विकबुद्धिमाह—

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥**

प्रवृत्तिमिति । धर्मे प्रवृत्तिमधर्मे निवृत्तिं च, यस्मिन् देशे काले च कर्तव्याकर्तव्ये कार्याकार्ये तत्प्रभवार्थानर्थरूपे भयाभये, देहादावहभावो बन्ध, तदभावो मोक्ष, त बन्ध मोक्ष च या बुद्धि अन्त करण वेत्ति, हे पार्थ ! सा बुद्धि सात्त्विकी । य पुमान्वेत्तीति वक्तव्ये काष्ठानि पचन्तीतिवत् करण कर्तृत्वोपचारो द्रष्टव्य ॥ ३० ॥

राजसबुद्धिमाह—

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

ययेति । हे पार्थ ! पुमान्यया बुद्ध्या शास्त्रचोदित धर्मं शास्त्रप्रतिषिद्धमधर्मं च कर्तव्यं कार्यं चाकर्तव्यमकार्यमेव च अयथावत् संदेहास्पदत्वेन प्रजानाति सा बुद्धि राजसी ॥ ३१ ॥

तामसबुद्धिमाह—

**अधर्मं धर्ममिति या मन्यते तमसा ऽऽवृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

अधर्ममिति । हे पार्थ! शास्त्रप्रतिषिद्धमधर्मं शास्त्रविहितं धर्ममिति सर्वानेव ज्ञेयपदार्थान् विपरीतान् या बुद्धिस्तमसा ऽऽवृता सती मन्यते सा बुद्धिः तामसी ॥ ३२ ॥

इदानीं धृतेस्त्रैविध्यमाचष्टे—धृत्येति त्रिभिः ।

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३॥**

धृत्येति । हे पार्थ! चित्तसमाधानहेतुना योगेन यया ऽव्यभिचारिण्या विषयान्तरपराङ्मुख्या धृत्या मनश्च प्राणश्चेन्द्रियाणि च तेषां क्रियाश्चेष्टारूपा धारयते उच्छ्वासप्रवृत्तितो वारयति, यया धृत्या धार्यमाणा उच्छ्वासविषयविमुखा भवन्ति, सा धृति सात्त्विकी ॥ ३३ ॥

राजसीं धृतिमाह—

**यया तु धर्मकामार्थान्धृत्या धारयते ऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

ययेति । हे अर्जुन! धर्मश्च कामश्चार्थश्च तान् धर्मकामार्थान् मनसि कर्तव्यरूपान्यया धृत्या धारयते, यः पुरुषः प्रसङ्गेन फलाकाङ्क्षी च भवति, हे पार्थ! तस्य सा धृतिः राजसी स्मृता ॥ ३४ ॥

तामसीं धृतिमाह—

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥**

ययेति । हे पार्थ ! आत्मानात्मविवेकवैकल्येन दुष्टा मेधा यस्य स यो ऽयं दुर्मेधाः पुरुषो यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकं विषण्णतां सर्वप्रकारेण मत्तुल्यं को ऽपि नास्तीति मदमेव च कदा ऽपि न विमुञ्चति, तस्य सा धृतिः तामसी स्मृतेत्यर्थः ॥ ३५ ॥

सुखस्यापि त्रैविध्यं प्रतिजानीते—

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥**

सुखमिति । हे भरतर्षभ ! यत्र यस्मिन् सुखविशेषे अभ्यासादतिपरिचयात्पुमान् रमते न तु सहसा विषयसुख इव रतिमनुभवति, यद्रमणतो दुःखस्यान्तमवसानं नितरां गच्छति मे मम वचनात् इदानीं तु त्रिविधं सुखं शृणु । श्रुत्वा रजस्तमःसुखं निराकृत्य शुद्धसत्त्वसुखाभ्यासे मनः कुर्वित्यर्थः ॥ ३६ ॥

तत्र सत्त्वसुखमाह—

**यत्तदग्रे विषमिव परिणामे ऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

यत्तदिति । यत्सुखमग्रे ज्ञानवैराग्यध्यानसमाध्यभ्यासात् पुरा तदभ्यासस्यात्यन्तायासपूर्वकत्वात् विषमिव दुःखात्मकं भवति, एवमभ्या-

सपरिणामे ज्ञानवैराग्यध्यानसमाध्यभ्यासपरिपाकजं सुखममृतोपमं सत्, ब्रह्मात्मैक्यविषया बुद्धिरात्मबुद्धिः तस्याः प्रसादो नैर्मल्यं ततो जातं तत्सुखं सात्त्विकमिति विद्धि: प्रोक्तम् ॥ ३७ ॥

राजसं सुखमाह—

**विषयेन्द्रियसंयोगाद्यत्तदग्रे ऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

विषयेति । यत्तत्सुखमग्रे प्रथमक्षणे शब्दादिविषयैः श्रोत्रादीन्द्रियसंयोगात् अमृतमुपमा यस्य तादृशं भवति । तादृशविषयेन्द्रियसंयोगजसुखस्य प्रज्ञामेधायलवीर्यधनोत्साहहानिहेतुत्वादमुत्रापि रौरवादिनरकहेतुत्वाच्च तत्परिणामे विषमिवानर्थहेतुः यदस्ति तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

तामसं सुखमाह—

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्राऽऽलस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

यदिति । अग्रे प्रथमक्षणे अनुबन्धे च पश्चादपि स्वात्मनो मोहनं मोहकरं यत्सुखमस्ति तत्तामसमिति उदाहृतम् । तत्कुत उत्पन्नमिति तत्राह—निद्रेति । निद्रा चालस्यं च प्रमादश्च निद्राऽऽलस्यप्रमादाः तेभ्यः समुत्तिष्ठतीति निद्राऽऽलस्यप्रमादोत्थम् । अत एवात्ममोहकरत्वमुपपद्यत इत्यर्थः । बुद्धिवृत्तिर्ज्ञानम्, यद्वा अन्तःकरणस्य वृत्तिर्बुद्धिरपि । इच्छाद्वेषादीनामप्यन्तःकरणधर्मित्वात् सर्वासां वृत्तीनामपि गुणतस्त्रैविध्यमूह्यमिति भावः ॥ ३९ ॥

अनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति—

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥**

न तदिति । प्रकृतिसंभवैरेतत्सत्त्वादित्रिगुणैर्मुक्तं विहीनं सत्त्व प्राणिजातमन्यद्वा यत्स्यात् पृथिव्या मनुष्यादिषु दिवि देवेषु वा क्वापि पुनस्तत्सत्त्व नास्तीत्यर्थ ॥ ४० ॥

क्रियाकारकफलात्मक सर्वमपि प्राणिजात त्रैगुण्यात्मकं चेत् तस्य कथ हन्मुक्ति स्यादित्यपेक्षाया निष्कामकर्मानुष्ठानजनितचित्तशुद्धिप्राप्यप्रत्यगभिन्नब्रह्मज्ञानात् स्वाज्ञानतत्कार्यगुणत्रयमतीत्य कैवल्य यातीति सर्व वेदान्तसारसग्रहभूतगीताशास्त्रार्थसार सग्रहेण प्रकटयति—ब्राह्मणेत्यादि यावदध्यायपरिसमाप्ति ।

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

ब्राह्मणेति । हे परतप ! ब्राह्मणाश्च क्षत्रियाश्च विशश्च तेषा ब्राह्मणक्षत्रियविशा सजातीयत्वे ऽपि वेदानधिकारात् त्रैवर्णिकात् पृथग्ग्रहणं शूद्राणामिति । ब्रह्मक्षत्रविट्शूद्राणा च स्वभावस्त्रिगुणात्मिका पारमेश्वरी माया प्रभवो येषा सत्त्वादिगुणाना तै स्वभावप्रभवै । यद्वा अनन्तकोटिजन्मनिदानभूता वासना वर्तमानजन्मनि स्वकार्याभिमुखीकरणस्वभावं, स प्रभवो येषा तै स्वभावप्रभवै । अथ वा सत्त्वगुणप्रभवो ब्राह्मणस्वभाव, सत्त्वोपसर्जनरज प्रभव क्षत्रियस्वभाव, तमउपसर्जनरज प्रभवो वैश्यस्वभाव, रजउप-

सर्जनतमःप्रभवः शूद्रस्वभाव इति तेषां स्वस्वभावप्रभवैः सत्त्वादिभिर्गुणैः शमदमादिकर्माणीतरेतरासंसृष्टतया प्रविभक्तानि व्यवस्थापितानि भवन्तीत्यर्थः ॥४१॥

तत्र ब्राह्मणस्वाभाविककर्माण्याह—

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥**

शम इति । अन्तरिन्द्रियनिग्रहः शमः । बाह्येन्द्रियनिग्रहो दमः । कृच्छ्रचान्द्रायणादिकं तपः । बाह्यमाभ्यन्तरमिति द्विविधं शौचम् । सहनं क्षान्तिः । सर्वेष्ववक्रतैवार्जवमेव च । शास्त्रजन्यं ज्ञानम् । तदेव स्वानुभूतिरूढं चेद्विज्ञानम् । श्रुत्याचार्यवाक्यश्रद्धैवास्तिक्यम् । ब्राह्मणजातेः स्वभावजमेतत् ब्राह्मं कर्म स्वभावजं सहजमित्यर्थः । स्वभावप्रभवैर्गुणैरित्युक्तत्वात् ॥४२॥

क्षात्रस्वभावकर्माह—

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

शौर्यमिति । शूरस्य भावः शौर्यम् । प्रागल्भ्यं तेजः । यया ऽऽविष्टस्यावसादो न भवति सा धृतिः । सर्वजनश्लाघनीयकार्येष्वप्रमादतया प्रवृत्तिः दक्षस्य भावो दाक्ष्यम् । युद्धे चाप्यपलायनं द्वाबेष्टप्रदानम् । अर्थिनां याच्यापूर्णं दानम् । ईशितव्यान्प्रति स्वशक्तिप्रकटीकरणमीश्वरभावश्च क्षत्रियजातेः कर्तव्यं कर्म क्षात्रं क्षत्रियस्वभावजमित्यर्थः ॥ ४३ ॥

वैश्यशूद्रयोः कर्माचष्टे—

**कृषिगौरक्ष्यवाणिज्यं वैश्यं कर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

कृषीति । भूमेर्विलेखनं कृषिश्च, गां रक्षतीति गोरक्षः तस्य भावो गौरक्ष्यं च क्रयविक्रयादिलक्षणं वणिक्कर्म वाणिज्यं च कृषिगौरक्ष्यवाणिज्यम् । वैश्यजातेः स्वभावजं कर्म वैश्यं कर्म । शूद्रस्यापि त्रैवर्णिकानां परिचर्याऽऽत्मकं स्वभावजं कर्म । एवं निष्कामतया स्वस्वजातिविहितकर्मानुष्ठानात् चित्तशुद्धिर्भवेदिति भावः ॥ ४४ ॥

ब्राह्मादिकर्मणां ज्ञानहेतुत्वं विशदयति—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

स्व इति । यथोक्तभेदलक्षणे ब्राह्मादिनि स्वे स्वे कर्मण्यभिरतः तत्परो नरः संसिद्धिं स्वधर्मानुष्ठानजनितचित्तशुद्धितः कायेन्द्रियाणां प्रत्यगभिन्नब्रह्मनिष्ठायोग्यतालक्षणां लभते । एवमधिकृतः पुरुषः स्वकर्मनिरतः सन् सिद्धिं यथा येन प्रकारेण विन्दति तदिदानीं शृणु । श्रुत्वा ऽवधारयेत्यर्थः ॥ ४५ ॥

तदेव स्फुटयति—

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

यत इति । यतः परमेश्वरात् ब्रह्मादिस्तम्बान्तभूतानां स्वस्वकर्मप्रवृत्तिरुत्पत्तिर्वा जायते येन परमेश्वरेण चराचरात्मकं सर्वं जगत्ततम्, मानवो निष्कामी पूर्वोक्तेन स्वकर्मणा तमीश्वरमभ्यर्च्याराध्य चित्तशुद्धिद्वारा ज्ञाननिष्ठालक्षणां सिद्धिं विन्दति प्रत्यगभिन्नब्रह्मात्मनिष्ठो भवतीत्यर्थः ॥ ४६ ॥

स्वकर्मणेति विशेषणस्य फलमाह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

श्रेयानिति। सम्यगनुष्ठितात् परधर्मात् विगुणोऽपि स्वधर्मः श्रेयान्। यतः पुमान् पूर्वोक्तस्वभावनियतं कर्म कुर्वन् किल्बिषं नाप्नोति। अतः स्वधर्म एव श्रेयान्। यथा विषजकिमेः विषं न दोषावहं स्वजीवनहेतुत्वात् न मधु गुणावहं स्वप्राणवियोगहेतुत्वात् तद्वदिति भावः ॥ ४७ ॥

सांख्याभासदृष्टिमाश्रित्य यदि स्वधर्मे हिंसाऽऽदिदोषं मत्वा परधर्मे तदभावं मन्यसे तदा स दोषः परधर्मेऽपि तुल्य इत्याह—

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥**

सहजमिति। हे कौन्तेय! सहजं स्वभावविहितं कर्म त्रिगुणात्मकत्वेन सदोषमपि कुर्यात्, न त्यजेत्। हि यस्मादारभ्यन्त इत्यारम्भाः सर्वकर्माणि सहजेन धूमेनाग्निरिव त्रैगुण्यदोषेण समावृताः स्वधर्मपरित्यागे परधर्मपरिग्रहे ऽपि दोषस्य तुल्यत्वात्। यथा अग्नेर्धूमाशमपाय्य शीतनिवृत्तये अग्निः सेव्यते तथा कर्मणो दोषांशं फलाभिलाषं विहाय गुणांशः सहजं कर्म चित्तशुद्धये सेव्यं न त्याज्यमिति भावः ॥ ४८ ॥

क्रियमाणे कर्मणि दोषांशपरित्यागतो गुणांशः कथं संपद्यत इति तत्राह—

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

असक्तेति । सर्वत्र पुत्रदारगृहादिष्वसक्ता सङ्गरहिता बुद्धिः अन्तःकरणं यस्य सो ऽयमसक्तबुद्धिः, विषयवैमुख्येन जितो वशीकृत आत्मा ऽन्तःकरणं यस्य स जितात्मा, देहजीवितभोगेषु विगता स्पृहा यस्मात्स विगतस्पृहो योगी, निष्क्रियब्रह्मात्मप्रबोधान्निर्गतानि कर्माणि यस्मात्स निष्कर्मा, तस्य भावो नैष्कर्म्यं च तन्निष्क्रियब्रह्मात्मस्वरूपावस्थानलक्षणा सिद्धिश्च तां नैष्कर्म्यसिद्धिं कर्मजसिद्धेः परमां सर्वकर्मसंन्यासेनाधिगच्छति, विदेहमुक्तो भवतीत्यर्थः ॥ ४९ ॥

एवंभूतस्य परमहंसस्य निष्ठां निगमयति—सिद्धिमिति षड्भिः ।

**सिद्धिं प्राप्तो यथा ब्रह्म तथा ऽऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

सिद्धिमिति । हे कौन्तेय ! यः स्वकर्मणेश्वरमाराध्य तत्प्रसादजां प्रत्यगभिन्नब्रह्मज्ञानयोग्यतालक्षणां सिद्धिं प्राप्तो मुमुक्षुः यथा येन प्रकारेण प्रत्यगभिन्नं ब्रह्म प्राप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं समासेन मे मम वचनान्निबोध सम्यगवधारय । निबोधेति वचनात् प्रतिज्ञाता या मुक्तिः तामेव निर्दिशति—निष्ठेति । प्रत्यगभिन्नब्रह्मज्ञानस्य या परा प्रकृष्टा निष्ठा काष्ठा पर्यवसानं परिसमाप्तिः, सैव मुक्तिरित्यर्थः ॥ ५० ॥

ज्ञानस्य या परा निष्ठोक्ता सा कथं सेव्येत्यपेक्षायामाह—

**बुद्ध्या विशुद्धया युक्तो धृत्या ऽऽत्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

बुद्धयेति । विद्वान् विशुद्धया ऽध्यवसायलक्षणया बुद्धया युक्तः सन् धृत्या सत्त्वगुणविशिष्टया कार्यकरणलक्षणमात्मानं नियम्य च देहधारणेतरशब्दादिविषयांस्त्यक्त्वा तत्रापि रागद्वेषौ व्युदस्य च परित्यज्य ब्रह्मभूयाय कल्पत इत्युत्तरेणान्वयः ॥ ५१ ॥

ततः किमित्यत आह—

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**

विविक्तेति । विविक्तदेशान् नदीपुलिनगिरिकंदरादीन् सेवितुं शीलमस्येति विविक्तसेवी लघ्वशनमशितुं शीलमस्येति लघ्वाशी विविक्तसेवालघ्वशनाभ्यां वाक् च कायश्च मानसं च वाक्कायमानसानि यतानि संयतानि यस्य सो ऽयं यतवाक्कायमानसः सन् ध्यानं प्रत्ययभेदेन ब्रह्मानुसंधानं तत्रैव मनएकाग्रीकरणं योगः, तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य सः ध्यानयोगपरायणो भूत्वा दृष्टादृष्टविषयेषु विरागस्य भावो वैराग्यं वैतृष्ण्यं नित्यं सम्यगुपाश्रितः सन् ब्रह्मभूयाय कल्पत इत्यर्थः ॥ ५२ ॥

ततः किमिति तत्राह—

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

अहंकारमिति । देहादावहंकरणमहंकारः, तं कामरागसंयुतं बलं सामर्थ्यं हृष्टो दृप्यति दृप्तो धर्ममतिक्रामतीति दर्पानन्तरभावी धर्मातिक्रमणहेतुः दर्पः तम् इच्छाविशेषः कामः तं तदपूरणसंजातः क्रोधः तं देह-

धारणेतरपरिग्रहं च विमुच्य देहस्थितिमात्रपरिग्रहे ऽपि ममेदमित्यभिनिवेशवैकल्येन निर्मम शान्त उपरतसर्वव्यापृति परमहंसपरिव्राजको भूत्वा ब्रह्मात्मरूपावस्थानलक्षण कैवल्य ब्रह्मभूयम्, तस्मै ब्रह्मभूयाय कैवल्याय कल्पते समर्थो भवतीत्यर्थ ॥ ५३ ॥

ब्रह्मभवनावान्तरफलमाह—

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

ब्रह्मभूत इति । ब्रह्मभूतो ब्रह्मण्यवस्थित श्रुत्याचार्यप्रसादत प्रसन्न आत्मा ऽन्तःकरण यस्य सो ऽय प्रसन्नात्मा स्वात्मनो वैगुण्यमर्थवैकल्य बोद्दिश्य न शोचति न ब्रह्मातिविषयजात वा काङ्क्षति । सर्वेषु भूतेषु सम सर्वसाम्यब्रह्मदर्शनकवलितविषमत्वात्, एवभूतो ज्ञाननिष्ठो योगी परा सर्वोत्कृष्टा ब्रह्मैवाहमहमेव ब्रह्मेति भजनलक्षणा मद्भक्तिं लभते ॥ ५४ ॥

तत किमित्यपेक्षायामाह—

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥**

भक्त्येति । प्रत्यगभिन्नब्रह्मज्ञानलक्षणया भक्त्या मामभिजानाति किंविशेषणविशिष्टस्त्वमिति तत्राह—यावानिति । उपाधिसम्बन्धाद्यावान् पारमैश्वर्यसंपन्न स्वत सज्ञान्तोपाधिभेदात, यश्चास्मि तत्त्वत प्रत्यवपरविभागासहसच्चासामान्यरूपो ऽस्मि । ततस्तादृशज्ञानादुक्तलक्षणमुत्तमपुरुष मामेव तत्त्वतो ज्ञात्वा तदनन्तर तज्ज्ञानस्यापि ब्रह्मात्मसमाप्तत्वान्मां विशते, विदेहमुक्तो भवतीत्यर्थ ॥ ५५ ॥

मदाराधनलक्षणनिष्कामकर्मानुष्ठानजनितचित्तशुद्धिप्राप्यसम्यग्ज्ञान - द्वारा मुमुक्षुः कैवल्यं यातीत्युपसंहरति—

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

सर्वेति । मुमुक्षुः सर्वाणि नित्यनैमित्तिककाम्यप्रतिषिद्धकर्माण्यपि सदा कुर्वाणः सन्नहमेव वासुदेवः परमात्मा व्यपाश्रयः आश्रयणीयो यस्य नेहामुत्रफलं स मद्व्यपाश्रयो भूत्वा मत्प्रसादादाविर्भूतचित्तशुद्धिगम्य-प्रत्यगभिन्नब्रह्मज्ञानात् शाश्वतमनादित्वादव्ययं परमार्थनित्यत्वान्मुमुक्षुकोटिभिः पद्यत इति तद्विष्णोः परमं पदमवाप्नोति, मुक्तो भवतीत्यर्थः ॥ ५६ ॥

यत एवमतः त्वमपि सर्वकर्माणि मयि समर्प्य मच्चित्तो भवेत्याह—

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥**

चेतसेति । निष्कामचेतसा सर्वकर्माणि मयि संन्यस्य समर्प्याहमेव परः पुरुषार्थो यस्य स त्वं मत्परो भूत्वा सततं कर्मानुष्ठानकाले ऽपि 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादिना सांख्यबुद्धियोगमुपाश्रित्य प्रत्यगभिन्न-ब्रह्मरूपे मय्येव चित्तं यस्य स त्वं मच्चित्तो भव ॥ ५७ ॥

त्वच्चित्तत्वे किं स्यादित्यपेक्षायामाह—

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।**
**अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥**

मच्चित्त इति । मच्चित्तश्चेत् त्वं मत्प्रसादात् ज्ञानीतरैः सर्वैरपि दुस्तरत्वात् संसारस्य सर्वदुर्गाणि यद्वा सर्वाण्यपि सांसारिकाणि दुर्गाणि दुःखानि तरिष्यसि । विपर्यये विपरीतफलमाह—अथेति । अथ मच्चित्तत्वविपरीतपक्षे यदि त्वमहंकारात्पण्डितो ऽहमिति मदुक्तं न श्रोष्यसि तदा विनङ्क्ष्यसि पुरुषार्थात् भ्रश्यसे ॥ ५८ ॥

विनङ्क्ष्यामि चेदपि बन्धुभिर्युद्धं न करोमीति मन्यमानमालक्ष्याह—

**यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥**

यदीति । मदीयममृतोपमं वचस्त्वमनादृत्य मिथ्याऽहंकारमाश्रित्य बन्धुभिर्न योत्स्य इति यदि मन्यसे एवंभूतो यः स एष व्यवसायः ते तव मिथ्यैव तव स्वातन्त्र्याभावात् । तदेवाह—नियोक्ष्यतीति । रजोगुणरूपेण परिणता क्षत्रियप्रकृतिः त्वां युद्धे नियोक्ष्यति प्रेरयिष्यतीत्यर्थः ॥ ५९ ॥

सर्वो हि जन्तुः स्वभावबद्धः, तथा त्वमपीत्याह—

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशो ऽपि तत् ॥ ६० ॥**

स्वभावजेनेति । हे कौन्तेय ! पूर्वकर्मसंस्कारः स्वभावः, तेन जातेन स्वभावजेन स्वेन स्वकीयेन शौर्यं तेज इत्यादिना क्षात्रकर्मणा निबद्धो नियन्त्रितः एवंभूतो ऽप्यपि मोहादविवेकतो यद्युद्धलक्षणं कर्म कर्तुं नेच्छसि तदेव कर्मावशो ऽपि स्वभावपरवश एव करिष्यसि ॥ ६० ॥

केवलसांख्यमतमवलम्ब्य प्रकृतिपारतन्त्र्यमुक्त्वेदानीं स्वमतमाचष्टे—ईश्वर इति द्वाभ्याम्—

**ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन तिष्ठति।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥**

ईश्वर इति। हे अर्जुन! यथा लोके सूत्रधारो दारुयन्त्रारूढानि कृत्रिमाणि भूतानि भ्रामयन्नलक्ष्यः तत्रैव तिष्ठति तथेश्वरो निजमायाशक्त्या स्वाविद्याकामकर्मगहने ऽनिशं भ्रामयन् सन् सर्वभूतानां हृद्देशे गूढस्तिष्ठति 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्यो ऽन्तरो यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यः सर्वेभ्यो भूतेभ्यो ऽन्तरो यमयत्येष त आत्मा ऽन्तर्याम्यमृतः[1]।'

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्ष सर्वभूताधिवास· साक्षी चेता केवलो निर्गुणश्च[2] ॥'

इति श्रुतेः ॥ ६१ ॥

एवमीश्वरेणैव कृतं चेत् संसारभ्रमणशान्तिः केनोपायेन भवेदित्यपेक्षायामाह—

**तमेव शरणं गच्छ सर्वभावेन भारत।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥**

तमिति। यतः सर्वे जीवाः परमेश्वरतन्त्रास्तत्र न को ऽपि स्वतन्त्रः अतः स्वातन्त्र्याभिमानं परित्यज्य सर्वमीश्वर एव नातो ऽतिरिक्तं किंचिद-

[1] बृ. ३-७-१५.
[2] श्वे. ६-११.

स्तीत्यनवरतभावनं भाव, तेन सर्वभावेन तमेवेश्वर प्रत्यगभेदेन शरणमाश्रयं गच्छ। एव करोषि चेद्पापाद्दुरितक्षयद्वारेश्वरकटाक्षस्त्वयि भवेद्। तत्प्रसादात्तरा सर्वोत्कृष्टामविद्यातत्कार्यलक्षणससारशान्ति नित्यं पारमेश्वर स्थानं मम विष्णो परमपद प्राप्स्यसि ॥ ६२ ॥

सर्वगीतार्थमुपसहरति—

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**

इतीति। इत्यनेन प्रकारेण ते तुभ्य सर्वज्ञेन परमकारुणिकेन मया गुह्यात् मन्त्रयोगादिज्ञानादपि गुह्यतर प्रत्यगभिन्नब्रह्मज्ञानमाख्यातम्। मयोपदिष्टमेतद्गीताशास्त्रमशेषेण विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु। एतस्मिन्नेव पर्यालोचिते सति पुरावत्त्वदीयो मोहस्त्वा द्रष्टु स्प्रष्टु वा न पारयतीत्यर्थ ॥ ६३ ॥

मदुक्तगीताशास्त्रस्यातिगम्भीरत्वेन येन केनाप्यशपत पर्यालोचयितुमशक्यत्वं पर्यालोच्य मन्दप्रज्ञेष्वतिकृपया स्वयमेव गीताशास्त्रार्थसार सगृह्य प्रकाशयति—सर्वगुह्यतममिति त्रिभि।

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः।**
**इष्टो ऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

सर्वेति। असकृदुक्तमपि भूय पुनरपि प्रकृष्टफलहेतुत्वात् मे मम परम वच शृणु, प्रत्यक्परविभागासहसच्चासामान्यब्रह्मस्वरूपावस्थानलक्षण कैवल्यासाधारणहेतुत्वात्। तत्कीदृशमिति तत्राह—सर्वेति। सर्वेभ्यो गुह्येभ्यो

गुह्यतरेभ्यश्चात्यन्तगुह्यत्वाद्गुह्यतमम् । गुह्यं मन्त्रशास्त्रगोचरं वचः, गुह्यतरं योगशास्त्रगोचरम्, गुह्यतमं प्रत्यगभिन्नब्रह्मगोचरम् । एवं गुह्यतमं चेत् किमर्थं मह्यं वक्ष्यसीति तत्राह—इष्टो ऽसीति । दृढमव्यभिचारेण मे मम परमेश्वरस्येष्टो भक्तो ऽसीति ते तव हितं हिततमं तत कारणात् वक्ष्यामि न भयान्नाप्यर्थान्तरकाङ्क्षयेत्यर्थः ॥ ६४ ॥

यदेतद्वक्ष्यामीत्युक्तं तदेवाह—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियो ऽसि मे ॥ ६५ ॥**

मन्मना इति । मय्येव मनश्चित्तं यस्य स त्वं मन्मना भव । वासुदेवः सर्वमिति मदीयं भजनं मद्भक्तिः । तद्वान् मद्भक्तो भव । मद्यजनं मदर्पणबुद्ध्या निष्कामकर्मानुष्ठानं करोषीति मद्याजी भव । सर्वत्र सर्वभावेन मामेव नमस्कुरु ।

'ब्रह्मादिस्तम्बभूतेषु प्रविष्टो भगवानिति ।
प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥'

इति स्मृतेः । एवं करोषि चेत् मत्प्रसादलब्धज्ञानतो मामेवैष्यसि; संशयमत्र मा कार्षीः । यतस्त्वं मे प्रियभक्तो ऽसि, अतस्तुभ्यमहं सत्यं यथा भवति तथा प्रतिजाने, मामेवैष्यसीति प्रतिज्ञां करोमीत्यर्थः ॥ ६५ ॥

एवं मत्सत्यप्रतिज्ञां बुद्ध्वा मद्भक्तेरपि कैवल्यहेतुत्वमवधार्य मदेकशरणानां सर्ववेदान्तसिद्धान्तार्थो वक्तव्य इत्याह—

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

सर्वेति । सर्वे च ते धर्माश्चेति सर्वधर्माः । सर्वधर्मशब्देन अधर्मो ऽपि गृह्यते ।

'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि त त्यज ॥'

इति श्रुत्यनुरोधेन सर्वधर्मानधर्मांश्च परित्यज्य सर्वकर्माणि संन्यस्येत्यर्थ, नैष्कर्म्यस्य विवक्षितत्वात् । तत किं कर्तव्यमिति तत्राह— शरणमिति सर्वप्रत्यगभेदेन सन्तं परमात्मानं मामेकं न मत्तो ऽन्यत्किंचिदस्त्यहमेवेदं सर्वमिति शरणं व्रज । ततस्त्वं किं करोपीति तत्राह—मोक्षयिष्यामीति । एवं निश्चयबुद्धिं त्वा त्वामहं स्वात्मभावप्रकाशीकरणेन सर्वपापेभ्यो धर्माधर्मनिमित्तेभ्यः पुण्यपापतन्मिश्रेभ्यो मोक्षयिष्यामि । उक्तं चैतत् । 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति । एवंरूपा भगवद्भक्ति मा तारयेन्न वेति संदिग्ध मा शुच शोकं मा कार्षीरित्यर्थ ॥ ६६ ॥

एवं स्वाविद्याद्यतत्कार्यनिवर्तकत्वेन प्रसिद्धं सर्ववेदान्तसिद्धान्तसारसंग्रहभूतं निष्ठाद्वयमधिकृत्य प्रवृत्त गीताशास्त्रमुपदिश्याथेदानीं सर्वशास्त्रसंप्रदायनियमविधिमुपदिशति—

**इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां यो ऽभ्यसूयति ॥ ६७ ॥**

इदमिति । इदं मयोक्त संसारमोहनिवर्तकं गीताशास्त्रं ते तव अहितायातपस्काय श्रुतिस्मृतिविहितस्वाश्रमोचितधर्मानुष्ठानरहिताय न त्वया वाच्यम् । तपस्विने ऽपि गुरुदेवामक्ताय न वाच्यम् । तपस्वी भक्तिमानपि अशुश्रूर्यदि तदा ऽशुश्रूषवे कदाचन कस्यांचिदवस्थायामपि न वाच्यम् ।

यः प्रत्यगभिन्नब्रह्मरूपं मा मनुष्यं मत्वा स्वात्मप्रशंसनमेवं करोतीत्यभ्यसूयति तस्मा अपि न त्वया वाच्यमिदं गीताशास्त्रम्। हिताय तपस्विने गुरुदेवभक्ताय शुश्रूषवे भगवत्यनसूयवे वाच्यमित्यर्थाल्लभ्यते। एवमेव सर्ववेदान्तशास्त्रसंप्रदायविधिरित्यर्थः ॥ ६७ ॥

यथोक्ताधिकारिणे गीताशास्त्रोपदेष्टुः फलमाचष्टे—

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥ ६८॥**

य इति। यो मद्भक्तः निःश्रेयसार्थत्वात् परममिमं ग्रन्थं गोप्यत्वात् गुह्यं मद्भक्तेष्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च वदतीत्यर्थः। भगवतः परमेश्वरस्य शुश्रूषा मया क्रियत इति मयि परां भक्तिं कृत्वा स मद्भक्तः तत्फलभूतं मामेवैष्यति मुच्यते संसारबन्धनात्। अस्मिन्नर्थे संशयो न कर्तव्य इत्यर्थः ॥ ६८ ॥

एवं संप्रदायकर्तुस्तुल्यो ऽन्यः प्रियो मे नास्तीत्याह—

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि॥ ६९॥**

न चेति। प्राणिमात्रेषु देवतिर्यङ्मनुष्येषु सर्ववेदान्तसिद्धान्तगीताशास्त्रसंप्रदायकृतः तस्मान्महानुभावान्मे मम परमेश्वरस्य कश्चिदप्यन्यः प्रियकृत्तमो न चास्ति लोके ऽस्मिन् भुवि तस्मादन्यः प्रियतरो न च भविता न भविष्यतीत्यर्थः ॥ ६९ ॥

पाठयितु फलमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

अध्येष्यत इति । य पुमानावयो कृष्णार्जुनयोरिम धर्मादनपेत धर्म्यं सवादमध्येष्यते जपरूपेण पठिष्यति तेन पुसा उच्चैरुपाशु मानसाना यज्ञाना ज्ञानयज्ञस्य मानसत्वात वैशिष्ट्यमिति गीताशास्त्राध्ययनरूप ज्ञानयज्ञेनाहमिष्ट प्रसादित स्यामिति मे मम परमेश्वरस्य मति ॥ ७० ॥

अन्यस्य पठत श्रोतु श्रवणफलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सो ऽपि मुक्तः शुभाल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

श्रद्धावानिति । श्रद्धावान् यो नर स्वस्य पठनशक्त्यभावे ऽपि परस्य पठत शृणुयात् श्रोता श्रद्धावानपि किमुच्चै पठति किमवद्धमिति दोषदृष्टि न कुर्यात् तद्व्याचष्टेऽनसूयु· असूयारहित· सन् शृणुयात सो ऽपि सर्वपापै मुक्त सन् अश्वमेधादिपुण्यकर्मणा शुभान् लोकान् प्राप्नुयात् ॥ ७१ ॥

त्वयैकाग्रचित्तेन मदुपदिष्टार्थ किं यथावद्गृहीत येन स्वाज्ञान जमोहनिवृत्ति स्यात्, यदि ते मदुपदेशत स्वप्रबोधो नोदित तदा पुन रुपदेश करोमीत्याशयेन श्रीभगवानुवाच—

श्रीभगवानुवाच—

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

कच्चिदिति । हे पार्थ ! त्वयैकाग्रेण चेतसा मयोक्तं श्रुतं कच्चिच्छ्रवणेनावधारितं किम्, किं वा प्रमादतो, नावधारितम् । तव, शास्त्रश्रवणायासो ममोपदेष्टृत्वायासश्च यदर्थो ऽयं प्रवृत्तः सो ऽयमज्ञानसंमोहः प्रनष्टः कच्चित् हे धनंजय ! अविवेकस्वभावो नाशं गतः किमिति प्रश्नार्थः ॥ ७२ ॥

भगवदुपदेशतः स्वात्मनः कृतार्थतां ख्यापयन्नर्जुन उवाच—

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मया ऽच्युत ।**
**स्थितो ऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

नष्ट इति । हे अच्युत ! त्वदुपदेशजनितप्रबोधमार्तण्डेन स्वाज्ञानमोहध्वान्तो नष्टः कवलितः । त्वत्प्रसादान्मया ब्रह्मैवाहमहमेव ब्रह्मेति प्रत्यगभिन्नब्रह्मस्मृतिर्लब्धा यया स्मृत्या सर्वग्रन्थीनां विप्रमोक्षो भवति । स्वाज्ञानमोहनिवृत्तितो ब्रह्मात्मस्मृतिलाभश्चेत्येतावत्खलु सर्ववेदान्तसिद्धान्तज्ञानफलं यतो नातो ऽतिरिक्तमस्ति अतो ऽहं गतसंदेहः संस्वच्छासने स्थितो ऽस्मि । चित्तशुद्ध्यर्थं स्वधर्मानुष्ठानं कुर्वति यत्त्वयोक्तं तव तद्वचः करिष्ये । न मे कर्तव्यमस्ति, त्वदुपदेशतो मम कृतार्थत्वादित्यर्थः । एवं कृष्णार्जुनसंवादं धृतराष्ट्रं प्रत्युक्त्वा ऽथ कथासंबन्धप्रदर्शनार्थं संजय उवाच—

संजय उवाच—

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

इतीति । इत्येवमुक्तप्रकारेणाहमत्यन्तविस्मयहेतुत्वादद्भुतं रोमाञ्चकरत्वात् रोमहर्षणं महात्मनो वासुदेवस्य पार्थस्य च संवादमिममश्रौषं श्रुतवानस्मीत्यर्थ ॥ ७४ ॥

कस्मादेव श्रुतवानसीत्यपेक्षायामाह—

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतमं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

व्यासेति । व्यासेन भगवता यतो मह्यं दिव्य चक्षु श्रोत्रं दत्तम्, अतो ऽहमेतद्गुह्यतम सर्ववेदान्तसारसंग्रहभूत गीताशास्त्रं श्रुतवानस्मि । किं तदिति तत्राह—परमिति । स्वाविद्याद्वयतत्कार्यावर प्रत्ययपरचितो योग मैक्यज्ञान श्रुतवानित्यर्थ । कस्मादिति तत्राह—कृष्णादिति साक्षात्स्वयमेव कथयत उपायोपेयभूतनिष्ठाद्वयात्मक गीताशास्त्र योगेश्वरात् कृष्णात् ब्रह्मादिस्तम्बान्तदेशिकादित्यर्थ ॥ ७५ ॥

एतदेव स्मृत्वा सदा हृष्यामीत्याह—

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

राजन्निति । हे राजन् धृतराष्ट्र! सकृच्छ्रवणमात्रत सर्वपापहरत्वात् पुण्य केशवार्जुनयो अद्भुतमिम सवाद संस्मृत्य सस्मृत्य मुहुर्मुहु हृष्यामि ॥

भगवद्रूपस्मरणतो ऽपि हृष्यामीत्याह—

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥**

तच्चेति । हे राजन्! हरेरत्यद्भुत तच्च विश्वरूप सम्मृत्य सस्मृत्य मे महान् विस्मय प्रादुर्भूत । तेनैवाह पुन पुन हृष्यामि ॥ ७७ ॥

एवभूते भगवति प्रसन्ने सति पाण्डवाना पराजयशङ्का कुत इत्याह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥ इति ।**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन सवादे सन्यासयोगो नामाष्टादशोऽध्याय ॥

यत्रेति । यत्र यस्मिन् पाण्डवपक्ष योगाना योगिना चेश्वर श्रीकृष्णो भगवान् वर्तत, यत्र च पार्थो गाण्डीवधनुर्धरो जागर्ति तत्रैव ध्रुवा राज्यश्री ध्रुवो विजय ध्रुवा विभूति ध्रुवा नीति न्यायोऽपीति मे मति निश्चय । इतिशब्द शास्त्रपरिसमाप्त्यर्थ ॥ ७८ ॥

येन वेदान्तसिद्धान्तसार सम्यक्प्रकाशित ।
यान्ति यज्ज्ञानतो मुक्ति तस्मिञ्शाम्यतु मे मन ॥
येन पार्थाय गीताऽन्त्यषट्कतस्तत्त्वमर्थयो ।
लक्ष्यैक्य भणित मेऽद्य कैवल्य स प्रयच्छतु ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रशिष्यश्रीरामचन्द्रेन्द्र कृतौ श्रीमद्भगवद्गीतार्थप्रकाशिकायामष्टादशोऽध्याय ॥

नैष्कर्म्योपनिषद्ब्रह्मानभिन्ना परमहंसिका ।
गीतार्थबोधिनी सेह श्रीनारायणार्पिता ॥

ॐ श्रीमद्विश्वाधिष्ठानपरमहसमद्गुरुरामचन्द्राय नम ॥

# BRAHMAVIDYĀ

## THE ADYAR LIBRARY BULLETIN

Editor: Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.)

Jt. Editor: A. N. Krishna Aiyangar, M.A., L.T.

*Rates of Subscription:*

Life Subscription Rs. 100
or $ 50
or £ 10

| | (Per Annum) | Single copy |
|---|---|---|
| India & Ceylon | Rs. 6 | Rs. 2-8 |
| U. S. A. | $ 3 | $ 1.25 |
| British Empire | Sh. 12 | Sh. 5 |
| Other Countries | Rs. 9 | Rs. 3-8 |

*All Communications to be addressed to:*

THE DIRECTOR,
Adyar Library,
Adyar, Madras, S. India.